लघुप्रत्यभिज्ञाख्यां वृत्तिं च कृत्वा तत्रापि मन्दबुद्ध्यनुग्रहार्थं मध्यप्रत्यभिज्ञाख्यां विवृतिं कृतवान्। तत्र च सर्वजनहितार्थं श्रीमताभिनवगुप्ताचार्येण बृहत्प्रत्यभिज्ञाख्या बहुविस्तरा टीका कृता। तद्विचारणे च जनमशक्तं ज्ञात्वा तेनैव प्रत्यभिज्ञाकारिकासूत्रेषु संग्रहमयी विमर्शिनीति प्रसिद्धा टीका कृता। अद्य तु तत्रापि दुर्बोधत्वं दृष्ट्वा श्रीभगवता शिष्यबुद्धिमाविश्य प्रेरितः स्वतःसिद्धश्रीमद्राजानकवैडूर्यकण्ठात्मजश्रीमदवतारकण्ठपुत्रो भास्करकण्ठोऽहं दशसहस्रोत्तरलक्षसंख्याकश्रीमोक्षोपायटीकाकरणेन कृततदवगाहनस्कन्ध[1]संवाहनः स्वपितुः परम्परागतमुपदेशं श्रुत्वा श्रीकौलनरोत्तमेभ्यश्च विद्योपदेशमासाद्य तद्व्याख्यायां प्रवृत्तः। न च पण्डितवरैरयोग्यतामारोप्य परिहासविषयीकार्यः। स्वविनोदार्थं स्वसुतादिबोधनार्थञ्च कृतैतत्स्पर्शनेऽपि तेषामनधिकारात्। अधिकारिणान्तु आदराविष्टत्वेन तत्कारित्वासंभवात्। कुर्वन्तु वा का तेन हानिरित्यलम् ।

अथ व्याख्या :–

इ[2]ष्टदेवताभूतपरतत्त्वनिभालने प्राप्तप्रतिष्ठानोप्यनुग्राह्यानु[3]जिघृक्षाविवशचित्तत्वेन तदनुस्मरणरूपं मं[4]गलं ग्रन्थनिर्विघ्नपरिसमाप्तिहेतुभूतं पराभावात्पश्यन्तीपदं ततोऽपि मध्यमापदं तस्माच्च वैखरीविषयतामापादयति **"निराभासात्"** इति । अहमनुग्राह्यजनकृपाविवशत्वेन देहप्रमात्रादिविषयपरिमिताहंभावकृतस्थितिः, न तु शुद्धाहंरूपः। तत्त्वे ह्युपदेशकरणासंभवेन तत्प्रवृत्त्ययोगात् । अत एवाभिनवगुप्तेतिनामरूषितः । **तत्**–यच्छब्दाविष्टपूर्वार्धेनोक्तकायम् । परमशिवः–शुद्धप्रकाशरूपः। शक्तिः–

1 स्कन्दसंवाहनः-C.

2. The manuscript here begins with ष्ट. A few dots precede it. They usually stand for omissions. We fill up the gap as printed.

3. The manuscript shows omission between the two नुs which we have filled up as printed.

4. There is another omission between मं and परि which has again been filled up by us.

"दशादिक्कालाद्यैरकलितचिदालोकवपुषः
सदा तादृक्स्वात्मानुभवितृतया[1] विस्फुरति यः ।
निजो धर्मः शम्भोर्निरुपमचमत्कारसरसः
परं शाक्तं तत्त्वं जगति जयति स्पन्द इति तत् ॥"

इति नयेन तस्याहमिति तादृक्स्वस्वरूपपरामर्शः । अन्यथा स्फटिकादिवत् अर्थोपरागे जडत्वापातात् । यद्वक्ष्यति :—

"प्रकाशोऽर्थोपरक्तोपि स्फटिकादिजडोपमः"

इति । यद्यपि स्वान्तःकृतशक्तिकस्यैव परमत्वं तथापि तन्निष्कृष्टस्य योग्यतया तज्ज्ञेयम् । ते एव, अर्थात् समरसीभूय, आत्मा—स्वरूपं यस्य तादृशम् । यद्यपि सदैव तयोरैक्यम् न तु केनापि निमित्तेन कदाचिदेव तथापि शिष्यबोधनार्थम् एकत्र तत्त्वे द्वित्वमारोप्यैवमुक्तम् । अथवा परमञ्च तत् शिवादितत्त्वषट्त्रिंशकादुत्तमञ्च तत् शिवशक्त्यात्म चेति विग्रहः **अद्वैतम्**—द्वयोर्भावो द्विता तत्र भवं द्वैतम्, न द्वैतम्—ऐक्यम्, तत्त्वषट्त्रिंशकभित्तिभूतम्, सप्तत्रिंशपरशिवतत्त्वरूपम्, जगदानन्दकृतसमरसीभावमिति यत् तद् **वन्दे**—"वदि अभिवादनस्तुत्योः" इत्यर्थानुसारेणाष्टाङ्गप्रणतिविषयतां सर्वोत्कर्षपरामर्शविषयताञ्च नयामि । अभिवादनं हि लोके नमस्कार एव रूढम्, अभिवादयामीत्युच्चारपूर्वं तत्करणात् । स्तुतिश्चोत्कर्षकथनम् । तदेव चान्तरताप्राप्तौ परामर्शः । तत्र प्रह्वीभावो नमस्कारार्थः सर्वोत्कर्षपरामर्शश्च तस्य योग्यतादायकः । यत्र तत्र प्रणतस्य हि पशुत्वं स्वयं ग्रन्थकृद्वक्ष्यति । **"निखिलम्"** इत्यनेन विशेषणेन भाविनः समस्तस्य जडाजडस्यार्थजातस्यैतन्मयत्वं कथितम् । अन्यथा पूर्वार्धोक्तपूर्णत्वासंभवात् । तच्छब्दाकांक्षां पूरयति **"निराभासात्"** इत्यादिना । **यत्**—पूर्वोक्तविशेषणं यदद्वैतम् । **निराभासात्**—शिवशक्त्यादिरूपेभ्यः आभासेभ्यो निष्क्रान्तात्, एकत्वेन शिवशक्त्यादिविकल्परहितादिति यावत् । तच्च षट्त्रिंशे शिवतत्त्वेप्यस्तीत्यत उक्तं **"पूर्णात्"** इति । तथापि सर्वभावेन स्फुरणान्यथानुपपत्त्या सर्वाभासनिरासश्च[2]

1. त्वादृक्-C.
2. A gap between सर्वा and श्च has been filled up by us as printed

शिवतत्त्वे न संभवति तस्य पूर्णतोन्मुखशुद्धप्रकाशरूपत्वं[1] चेत् तर्हि निराभासत्वमेवायुक्तम्। स्यादेतद् यदि ते तरंगनिर्गतेरपि[2] निश्चलस्य जलधेः केवलत्वं नश्यति। तदुक्तम् :–

"अशून्यमिव यच्छून्यं यस्मिञ्छून्ये जगत्स्थितम्।
सर्गौघे सति यच्छून्यं तद्रूपं परमात्मनः॥"

इति। पूर्णत्वञ्चात्रान्तःकृतबाह्यपूर्णत्वाऽपूर्णत्वेन किमप्यान्तरं न तु लौकिकम्, तस्य प्रतियोगिसंभवेन पूर्णत्वाभासत्त्वात्। पूर्णत्वमेव संभवविषयीकर्तुं विशेषणमाह "**उन्मेष**" इति। उन्मेषेण-स्वान्तर्गतशक्तिभागस्य शिवभागात् पृथग्भासनेन, प्रसरणम्-शिवादिक्षित्यन्ततत्त्वभावेन संचारः, तथा निमेषेण-स्वान्तर्गते शिवभागे पुनः शक्तिभागस्यावस्थापनेन, स्थितिः–स्वस्मिन्नैक्यभावेनावस्थानम्, ते जुषत इति तादृशात्। यदुक्तं स्पन्दशास्त्रे :–

"यस्योन्मेषनिमेषाभ्यां जगतः प्रलयोदयौ।
तं शक्तिचक्रविभवप्रभवं शंकरं स्तुमः॥"

इति। चित्रपूर्ण एव च पटः चित्राणि दर्शयितुं शक्तो नान्यः। एवंविधात् **स्वरूपात्**–स्वस्मात्–अन्याननुयायिनः, अन्यत्रासंबन्धिन इति यावत्, रूपात्-उपादानभूतात्

"तत्कुलं विद्धि सर्वज्ञ शिवशक्तिविवर्जितम्।"

इति नीत्या अनुत्तरकुलरूपाद् वपुषः। **पुरा**-अग्रे, यद्यप्यत्र कालस्य स्पर्शो नास्ति तथापि कालविवशाञ्छिष्यान्प्रत्येवमुक्तम्। **अहमिति**–स्वान्तर्गतम् अहंविमर्शयुक्तं शक्तिभागम्। **भासयति**–स्वयं भासनशीलाकुलाख्यप्रकाशरूपशिवाव्यभिचारेण स्वयं भासमानं सत् समर्थाचरणेन तत्र प्रेरयति, केवलायाः शक्तेस्तदयोगात्। न हि चक्षुर्ग्राह्याग्निस्वरूपं विना तच्छक्तिर्दाहे समर्था दृष्टा। एतच्च णिचः प्रयोगेण सूचितम्। आश्चर्यञ्च स्वयं निराभासस्य भासनहेतुत्वम्। भासनञ्चात्र प्रकाशाख्यस्य शिवस्य स्वरूपपरामर्शः, तन्मात्रस्य शक्तित्वात्।

1. A gap between प्र and तर्हि has been filled up.
2. Again there is a gap between यदि ते and र्गते which we have filled up.

अन्यथाऽऽद्यस्पन्द इति शब्दविषयत्वायोगात्। स्पन्दो हि किञ्चिच्चलनमेव, तच्च "अहम" इति स्वरूपपरामर्श एव शिवस्य। तदुक्तम्:—

"किञ्चिच्चलनमेतावद् यत्स्वरूपविमर्शनम्।"

इति। एतेन शिवशक्त्याख्यस्य तत्त्वद्वयस्य प्रादुर्भाव उक्तः आभासयितृत्वावच्छिन्नस्य परमशिवस्यैव शिवत्वापातात्। शक्तेस्तु स स्फुट एव। पुनः किं करोतीत्यपेक्षायां द्वितीयं वाक्यमाह "**द्विशाखाम्**" इति। पुनः यदद्वैतं तदनन्तरं **द्विशाखाम्**—शिवशक्त्योर्यथायथं स्वभावेन स्फुरणात् तद्रूपशाखाद्वययुताम्, **निजकलाम्**—उदभूतोद्भविष्यमाणेन तत्त्वषट्त्रिंशकेनाचक्रं समानं प्रोद्भूतशिवशक्तिविभागं स्वकीयं भागम्। **विभङ्क्तुम्**—सादाख्यादिक्षोण्यन्ततत्त्वचतुस्त्रिंशकभावेन विभागविषयीकर्तुम्। **आशास्ते**—इच्छाशक्तिविषयतां नयति। उभयत्र वर्तमानप्रयोगः सातत्यद्योतनार्थः। अत्रैवेच्छाशक्तेरुद्भूतिः, अतः[1] पूर्वं शिवशक्तिगतस्य चिदानन्दाख्यस्य शक्तिद्वयस्यैव संभवात्। ज्ञानक्रियाशक्त्योस्तु तत्त्वचतुस्त्रिंशकान्तर्गतत्वेनाशंसाविषयत्वात्। अत्र च निराभासादित्यस्य स्थाने निराशंसादिति तु प्रशस्तः पाठः। श्रीतन्त्रालोकटीकायां श्रीजयद्रथेन परिगृहीतत्वात्। तत्र च **निराशंसात्**—पूर्णत्वेनाकांक्षारहितादिति योजनीयम्। यद्यपि तत्र श्रीजयद्रथस्य द्विशाखत्वमहमिदंपरामर्शद्वयमेवेष्टम्, तथापि तदस्मन्मनो नावर्जयति। द्विशाखामिति हि समस्तपदेनानुवादेन निर्देशः। न च साध्यमानस्य स युक्तः। शिवशक्तिरूपस्य शाखाद्वयस्य तु पूर्ववाक्ये साधनं कृतमेवेत्युत्तरवाक्येऽनुवादे न दोषः। ननु "निजकलां द्विशाखां विभङ्क्तुम्" इति विधिनिर्देश एवात्रास्तीति चेत्, असदेतत्। निजकला ह्यत्राहंरूपैव तस्याश्च को द्विशाखो विभागः। अहंभावेन स्वयं स्थितत्वात्। न च तस्यैव तच्छाखत्वं युक्तम्। किञ्चास्मिन्समये शिवशक्त्यैक्यकलाशाखारूपयोः शिवशक्त्योरेव भासयितृत्वाहंपरामर्शरूपयोः परामर्शौ युक्तौ नाहमिदंपरामर्शयोः, अत्रेदंपरामर्शविहीनस्याहंपरामर्शमात्रस्यैव शक्तित्वांगीकृतस्य प्रस्तावात्, इदंपरामर्शस्य भाविन्यां सदाशिवभूमावुत्थानात्। नन्वहंपरामर्शरूपायाः शक्तेः शाखात्वमस्तु पूर्णशिवस्य तु तत्कथं युक्तमिति चेन्न,

1. यतः—C.

**श्रीत्रैयम्बकसद्वंशमध्यमुक्तामयस्थितेः ।**

**श्रीसोमानन्दनाथस्य विज्ञानप्रतिबिम्बकम् ॥ २ ॥**

---

शिवशक्त्यैक्यापेक्षया प्रत्येकं शिवशक्त्योरपूर्णत्वात्। अन्यथा शिवाभेदेन परतत्त्वकथनायोगात्। भवन्ति चैवंविधा निर्देशाः। तदुक्तं श्रीबहुरूपगर्भस्तोत्रे :–

"कोटिद्वितयसंगिने"

इति। तत्र हि कोटिद्वितयशब्देन शिवशक्तिकथनमेव। तथा तत्रैव :–

"भोगपाणे नमस्तुभ्यं योगीशैः पूजितात्मने।
द्वयनिर्दलनोद्योगसमुल्लासितमूर्तये॥"

इति। तत्र च भोगशब्देन शिवकथनं शाखाया एव युक्तम्। ननु तर्हि श्रीजयद्रथेन कथं तत्रान्यथा व्याख्या कृता। शिवतत्त्वस्य शाखात्वकथनायोग्यतयेति ब्रूमः। ननु युष्माभिरपि कथं नेयं शंका कृता। सत्यम्। अस्माभिः साक्षाद् गुरुमुखादत्र युक्तयः श्रुता एवेति श्रीबहुरूपगर्भस्तोत्रावष्टम्भेन साहसे प्रवृत्तिः कृतेत्यलं महात्मभिः सह केलिचर्चाभिः।

अत्र चाहमभिनवाख्यः पुत्रः। परमशिवः-नरसिंहगुप्ताख्यः पिता। शक्तिः-विमलाख्या माता। मातापित्रोः प्रत्यक्षं शिवशक्तिरूपत्वात्। ताभ्यामुपादानभूताभ्याम् आत्मा-स्वरूपप्रादुर्भावः यस्य तादृशम्, **निखिलम्**–सर्वाङ्गव्यापि। **अद्वैतम्**–अद्वैतरूपं संयोगम्। विशेषणविशिष्टाक्षेपे आदियागाधिरूढं तयोर्मिथुनमिति यावत्। ग्रन्थकारस्य मातापितरौ एतन्नामकावास्तामिति हि प्रसिद्धिः तन्त्रालोके च प्रथमश्लोके स्वयं तेनाप्युक्तत्वात्। **वन्दे** । तत्किम्? **यत् निराभासात्**–तस्मिन्समये वेद्यगलनेन समस्तविषयाभासरहितात्। अत एव **पूर्णात्**–तृप्तिं गतात्। अन्याकांक्षारहित एव हि तृप्त उच्यते। तथा उन्मेषण-बहिरवलोकनेन, प्रसरणम्–अनाख्येषु भावेषु संचारः, निमेषेण–विसर्गकाले स्वात्मन्यवस्थानेन, स्थितिः–आनन्दभरिते स्वस्वरूपे विश्रामः, ते जुषत इति तादृशात्, **स्वरूपात्**–अद्वैताख्यात् स्वस्माद्रूपात्। **अहमिति**–परिमितवाचकाऽहंपदविषयमभिनवेतिनामकं देहम्। **पुरा भासयति**–भासयति स्म। कुण्डगोलकाख्यद्रव्यनिष्यन्दक्रमेण प्रकटयति स्म।

**अनुत्तरानन्यसाक्षिपुमर्थोपायमभ्यधात् ।**
**ईश्वरप्रत्यभिज्ञाख्यं यः शास्त्रं यत्सुनिर्मलम् ॥ ३ ॥**
**तत्प्रशिष्यः करोम्येतां तत्सूत्रविवृतिं लघुम् ।**
**बुद्धाभिनवगुप्तोऽहं श्रीमल्लक्ष्मणगुप्ततः ॥ ४ ॥**

---

**तदनु च द्विशाखाम्**–वध्वा सह मेलनेन द्विशाखीभूताम्, **निजकलाम्**-सुतरूपं स्वांशम्। **विभङ्क्तुम्**-पुत्रपौत्रादिभावेन विभागयुक्तां सम्पादयितुम, **आशास्ते,** वर्तमानसामीप्ये वर्तमानम्। मातापित्रोर्हि स्वसुतस्य सन्ततिरत्यन्तं प्रियैव भवति। मातापित्रोश्च शिवशक्तिभ्यां कथनेन स्वस्य योगिनीभूत्वमुक्तम्। आगमेषु हि स्त्रियः पुंसश्चादियागाधिरूढिसमये शक्तिभावाभिमानः शिवभावाभिमानश्च शिव-शास्त्रोपदेशयोग्ययोगिनीभवसुतोत्पादनायावश्यकर्तव्यत्वेनोक्तः। तदुक्तम्:–

"तादृङ्मेलककलिकाकलिततनुर्यो भवेद् गर्भे ।
प्रोक्तः स योगिनीभूः स्वयमेव ज्ञानभाजनं भक्तः॥"

इति। अयं चार्थोऽतिरहस्यत्वेन वक्तुमयोग्योऽपि

"विमलकलाश्रयाभिनवसृष्टिमहाजननी भरिततनुश्च पंचमुखगुप्तरुचिर्जनकः ।
तदुभययामलस्फुरितभावविसर्गमयं हृदयमनुत्तरामृतकुलं मम स्फुरतात् ॥"

इति श्रीतन्त्रालोकाद्यश्लोके स्वयं ग्रन्थकृता स्थापितः, श्रीजयद्रथेन च स्फुटं व्याख्यात इत्यस्माभिरपीह सूचनामात्रेण प्रकटीकृतः, इति न वयमेव केवलं पर्यनुयोगार्हाः इति।

एवं परतत्त्वविषयं प्रह्वीभावोत्कर्षपरामर्शाख्यं मंगलं सम्पाद्य श्रीमठिका-गुरुसम्प्रदायसूचनपूर्वकं तिलकेन शास्त्रकरणं प्रतिजानीते "**श्रीत्रैयम्बक**" इत्यादिना। तस्य प्रशिष्यः–शिष्यशिष्यः, **अहमभिनवगुप्तः लघुम्**-शब्दतः लघ्वीम्, तस्य सूत्राणाम्-कारिकारूपाणां सूत्रवाक्यानाम्, **एताम्**–करिष्यमाणाम्, विवृतिम्–विवरणरूपां टीकाम्, **करोमि**। किं कृत्वा ? श्रीमांश्चासौ लक्ष्मणगुप्तः–एतन्नामक उत्पलदेवशिष्यः स्वगुरुः, ततो **बुद्ध्वा**–ज्ञात्वा, अधीत्येति यावत्। प्रशिष्यः कस्य, सूत्राणि कस्येत्यपेक्षायामाह "**श्रीत्रैयम्बक**" इत्यादि। यः–प्रसिद्धेर्य उत्पलदेवः। ईश्वरः–सर्वोत्कर्षयुक्तः परमेश्वरः, सः प्रत्यभिज्ञायतेऽनयेति ईश्वरप्रत्यभिज्ञा, सा

आख्या यस्य तादृशम्, **यत् शास्त्रम्**—शासनकारिकारिकासन्दर्भम्, **अभ्यधात्**—स्वानुगक्रपया पराभावात् प्रच्याव्य वैखरीभावमानीतवान् । शास्त्रं किम् ? श्रीमानणिमादियुक्तः यः त्र्यम्बकः—त्र्यम्बकाख्योऽध्यर्धमठिकागुरुः तस्य सम्बन्धी त्रैयम्बकः तादृशो यः सन्-अभेदोपदेशयुक्तत्वेन प्रशस्तः, वंशः—शिष्यसन्तानः वेणुश्च । वंशो हि विद्ययोत्पत्त्या च वर्तते, तस्य मध्ये मुक्तामयी-अतिशुद्धत्वेन मौक्तिकस्वरूपा, स्थितिः अवस्थानं यस्य, युक्ता च वंशे मुक्तास्थितिः। सर्वा हि मठिका अर्धचतस्रो भवन्ति, तत्र द्वे अमर्दकस्य श्रीनाथस्य च, अध्यर्धं त्र्यम्बकस्य, तत्राप्येका पुत्रद्वारेण, अर्धा तु दुहितृद्वारेणेति, तस्य, **श्रीसोमानन्दनाथस्य** यत् विज्ञानम्-शिवदृष्ट्याख्यं ज्ञानशास्त्रम्, तस्य प्रतिबिंबकम्-तत्समानाभिप्रायत्वेन तत्प्रतिनिधित्वात् । पुनः किम् ? अविद्यमान उत्तरः—श्रेष्ठः यस्मात्तादृशश्चासौ नान्यः साक्षी—ग्राहको यस्य तादृशश्च यः पुमर्थः—मोक्षाख्यः पुरुषार्थः, तस्योपायम्-साधनम् । अनन्यसाक्षित्वं च मोक्षस्य परमशिवरूपत्वेन ज्ञेयम्। न हि तस्य कोऽपि साक्षी संभवति सर्वान्प्रति तस्यैव साक्षित्वात्। अन्यच्च **सुनिर्मलम्**—शुद्धाभेदवाचकत्वेन लक्षणया भेदाख्यमलरहितम्। "**विज्ञानम्**" इत्यनेन ज्ञानोपदेशमात्रस्य सम्प्रदायागतत्वं सूचितम्। अत एव यत्कैश्चित्पण्डितैर्यत्र तत्र व्याख्याकरणोद्यतेषु येन यत्कृतं तत एव तच्छिष्यादेर्वा तदधीत्य व्याख्या कर्तव्येति चोदना क्रियते तन्निजं मौर्ख्यमेव प्रकटीक्रियते, अन्यथा श्रीपरमेश्वरोक्तेष्वागमशास्त्रेषु ब्रह्मोक्तेषु वेदेषु च कृता व्याख्या युक्ता न स्युः । न हि तत्कर्तृसमीपे केनापि किञ्चिदधीतम् । केवलं व्याकरणशास्त्रादि सम्यगधीत्य तत्संभवत्येव । अन्यथा तु गुरुमुखात्कियदधीतं पुरुषः स्मृतिविषयतां नेतुं शक्नोति । यस्तु सदा गुरुमुखप्रेक्ष्येव तस्य नैपुण्ये सहृदया एव प्रमाणम् । रहस्योपदेशस्य संप्रदायापेक्षा वर्तत एव। स तु यस्य तस्य येन तेन मुखेन वर्तत एवान्यथा प्रवृत्त्यसंभवात् । तं विना प्रवृत्तेष्वज्ञत्वकृताश्चोदना अपि मौर्ख्यावहा एव । मूर्खकृते हि मूर्खा एव हसन्ति, पण्डितानां तु तत्रोपेक्षामात्रस्यैव युक्तत्वात्, इत्यलं दैन्यावहेन वाक्प्रपंचेन। नन्वस्त्वत्र प्रत्यभिज्ञाशास्त्रे मठिकागुरुसंप्रदायपूर्वकत्वरूपवागीश्वरीमूलत्वं प्रमाणत्वादायि मठिकागुरुभक्तिभाजः प्रति, मठिकागुरुश्रद्धारहितास्तु वेदान्तिनोऽत्र श्रुतिरूपाणि प्रमाणानि प्रार्थयन्ति तेषां किं ब्रूमः ? सत्यम्, श्रद्धारहितैस्तैः सहेयं कथैव न कार्या। ननु माया-

पदान्निर्गत्य त्वदभीष्टशिवतत्त्वसमीपवर्तिब्रह्मतत्त्वरूपसदाशिवतत्त्वं तावत्कृतनिष्ठैस्तैः सह यदीयं चर्चा न क्रियते तर्हि मायाधोवर्तिबुद्धितत्त्वनिष्ठबौद्धादिभिरेव सह कार्या । ननु कथं ते सदाशिवतत्त्वं तावत्कृतनिष्ठाः ? शृण्वन्तु तत्र भवन्तः । ते हि सद्रूपं चिन्मात्ररूपञ्च शान्तं ब्रह्मतत्त्वमेव विश्रान्तिस्थानत्वेन कथयन्ति । तथा च श्रुतिः—

"सच्चिदानन्दं ब्रह्म"

इति । तस्यैव सर्वव्यापकत्वं सर्वाधिष्ठानत्वं सर्वसाक्षित्वं केवलत्वं च ब्रुवन्ति । तथा च श्रुतिः—

"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
सर्वाध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥"

इति । तस्यैव च सर्वजगद्विवर्ताधिष्ठानत्वेन स्थितत्वात्सजातीयविजातीयस्वगतभेदरहितत्वं च कथयन्ति । तथा हि श्रुतिः—

"एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन"

इति । तदेव च सदाख्येति प्रसिद्धं सदाशिवतत्त्वं चतुस्त्रिंशम्, शिवशक्त्याख्यस्य तत्त्वद्वयस्य तदुपरिस्थितत्वात् । ईश्वरादिधरण्यन्तस्य तत्त्वत्रयस्त्रिंशत्कस्य तदधोवर्तमानत्वाच्च । तथा हि सन्-सद्रूपश्चासौ आशिवश्च-निर्विमर्शप्रकाशरूपत्वेनाहंविमर्शसारप्रकाशरूपाच्छिवात् ईषदूनः शिवः शिवसमीपवर्ती चेति यावत् । तदेव च शान्तचिद्रूपत्वम्, शान्तत्वं हि विमर्शाख्यक्षोभरहितत्वमेव तेषामिष्टम् । विमर्शस्य हि ते विकल्पत्वाशंकया क्षोभत्वमेव शंकंते । न च तद्युक्तम्, विजातीयस्यागन्तुकस्य धर्मस्यैव तत्त्वात् । प्रकाशस्य हि स्वविषयोऽहमिति विमर्शः स्वभावभूत एव । तद्वक्ष्यति :—

"स्वभावमवभासस्य विमर्शं विदुरन्यथा ।
प्रकाशोऽर्थोपरक्तोपि स्फटिकादिजडोपमः ॥"

इति । यस्तु बाह्यविषयोहमिति विमर्शः स बाह्योपरागेण तावद्विजातीय आगन्तुकः क्षोभधर्मोपि वक्तुं शक्यः, परमार्थतः सोपि शैवनये प्रकाशस्वभाव एव । न च शक्तस्य किमपि क्षोभकमिति का कथा शक्तेस्तत्क्षोभकारित्वे, न हि दाहे शक्तो-

ग्निस्तत्र क्षुब्धो दृश्यते इति तावदनधिकारित्वेन तेषां नोक्तमेव। यद्येवं तर्हि तेषां प्रष्टव्यं किं भवन्मते जीवब्रह्मणोरैक्यं वर्तते भिन्नत्वं वा, यदि भिन्नत्वमेव कथयन्ति तर्हि मौनमेव कार्यम् । यदि त्वैक्यं तर्हि श्रुतिप्रमाणं तत्र भवद्भिरपि प्रार्थनीयम्। ननु तेषामत्र प्रमाणम् पृष्टम्, तैस्तत्र

"अयमात्मा ब्रह्म"

"सत्यं चिदात्मा"

"तत्सत्यं चात्मा"

इत्यादिका बह्व्यः श्रुतयः प्रमाणत्वेनोक्ताः। तर्हि वक्तव्यं ताः एवास्माकमपि प्रत्यभिज्ञायां प्रमाणम् । प्रत्यभिज्ञा हि ऐक्यफलैव । जीवेश्वरयोरैक्यसाधने प्रवृत्तत्वात् । ननु प्रत्यभिज्ञा प्रमाणं भवतु, तत्रोक्तासु युक्तिषु श्रुतिप्रमाणं वक्तव्यमिति चेन्न । यत्र लौकिकव्यवहारेणैव प्रत्यभिज्ञासाधनं तत्र का श्रुतिप्रमाणकल्पना। तद्वक्ष्यतिः–

"मार्गो नवः"

इति । फलभेदस्तु लेशतोऽपि न विद्यते एव येन विरोधापत्तिः स्यात् । ननु भातभासमानैकीकरणरूपा प्रत्यभिज्ञात्र न युक्ता। असदेतत्। आत्मा हि भातो भासमानश्च । तदीश्वरत्वं तु तदीयस्वातन्त्र्येण मध्ये विस्मृतं तद्विषयत्वेन प्रत्यभिज्ञायते स ईश्वरोहमेवेति । भासमानस्याप्यात्मनो विस्मृतिर्जायत एवान्यथा दशमस्त्वमसीतिन्यायेन तत्त्वमसीत्युपदेशायोगात् । ईश्वरत्वं च परमपरं चेति द्विविधम्। तत्र परमहमिति स्वमात्रविषयमपरं तु परिमितग्राहकविषयमहमिति ग्राह्यविषयं त्वयमिति च । तदुक्तम्ः–

"परमेश्वरता जयत्यपूर्वा तव सर्वेश यदीशितव्यशून्या।
अपरापि तथैव ते यथेदं जगदाभाति यथा तथा न भाति ॥"

इति। यत्त्वणिमादिकमैश्वर्यजातं तदेतदंशरूपमेव। यदुक्तम्ः–

"तेन स्वातन्त्र्यशक्त्यैव युक्त इत्याञ्जसो विधिः ।"

इति । यद्यपि जीवस्यापि स्वप्राधान्येनाप्यहंपरामर्शो विद्यत एव तथापि सः

"स ह्युक्तो द्वयापेक्षी विनिश्चयः"

इति वक्ष्यमाणनीत्या प्रतियोगीदन्तापरामर्शरूषितत्वेन नैश्वर्यरूपः । अपि त्वनीश्वरतारूप एव। ऐश्वर्यरूपोहंपरामर्शस्तु समस्तेदन्ताहन्तासारत्वेन प्रतियोगिरहित एव । यद्वक्ष्यति :–

"अहंप्रत्यवमर्शो यः प्रकाशात्मापि वाग्वपुः ।
नासौ विकल्पः"

इति। ननु जीवस्य विषयो विकल्परूपः प्रतियोग्यनुविद्धोहंपरामर्शः स्फुट एव, ब्रह्मणस्तु कथं सोस्तीति ज्ञायते। सत्यम् । प्रथमं तावद् भवद्भिरपि ब्रह्मणो जीवाकारत्वमेवोच्यते, अग्निकणन्यायेन ततो जीवप्रादुर्भावकथनात् । अन्यथा द्वैतापत्तेः । तथा:–

"अनेन जीवेनानुप्रविश्य नामरूपे व्याकरवाणि"

इति जीवभावोपि ब्रह्मण एव कथ्यते । तत्र च यदि ब्रह्मणः सा परामर्शशक्तिर्नास्ति जीवस्य कुत आगच्छेत् अग्निचयदाहकशक्तिपूर्वकं तत्कणदाहशक्तिदर्शनात्। ननु देहाद्युपाधिना सात्र स्फुरिता । न, इन्धनोपाधिना जलादपि धूम उत्तिष्ठेत् । परिमितभावस्तु यद्युपाधिकृत उच्यते, उच्यताम् । किं च मायाशक्तिर्भवद्भिरप्यङ्गीक्रियते एव। सा किं जीवनिष्ठा ब्रह्मनिष्ठा वा। यदि जीवनिष्ठा तदा तत्पूर्वसिद्धस्य जीवब्रह्मविभागस्य तत्कृतत्वकथनमयुक्तम् । तदुक्तम् :–

"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला ।
पूर्वसिद्धतमसो न पश्चिमा नाश्रयो भवति नापि गोचरः ॥"

इति । अथ ब्रह्मनिष्ठा तदस्य शुद्धत्वमसम्भवोपहतमेव । तदुक्तम् :–

"अन्योन्यप्रतिघातनाशविधुरं विश्वं कथं भासताम्
मायामात्रमिदं ततोऽतिनिपुणं वेदान्तिनः संश्रिताः।
माया कस्य शिवस्य तर्हि शिवता नैवास्य"

इति। ननु माया परमार्थतः किमपि वस्तु न विद्यते एव येन भवदुक्तचोद्यावकाशः, अपि तु भासमानभेदान्यथानुपपत्त्या सा कल्प्यते एव । तर्हि किंरूपा सा कल्प्यते ?

अज्ञानरूपा इति चेत् तदज्ञानं भावरूपमभावरूपं वेति विवेचनीयम्। यदि ज्ञानाभावरूपं तर्हि किं तेन। न हि घटाद्यभावस्य कुत्राप्यधिष्ठानत्वमुच्यते । मायायास्तु विक्षेपद्वारेण ब्रह्मविषयत्वे जगदधिष्ठानत्वमुच्यते । तथा च श्रुतिः-

"इन्द्रो मायाभिः पुरुरूप ईयते ।"

इति । न च शुद्धस्य ब्रह्मणो मलिनजगदधिष्ठानत्वं युक्तम् । युक्तत्वे वेष्टापत्तिः । इति न किंचिदेतत् । अथ भावरूपम्, किंरूपोऽसौ भाव इति वाच्यम्। अनिर्वाच्य एव स इति चेत् तर्हि त्वया कथमुक्तः । अनिर्वाच्यतयेति चेत्, तर्हि सोऽपि ब्रह्मैव ।

"यतो वाचो निवर्तन्ते"

इति श्रुत्या ब्रह्मण एवानिर्वाच्यत्वकथनात् । ननु स ब्रह्मैव भवतु का हानिः। सत्यम् । एवं च ब्रह्मण एव भवन्मतेपि जगदधिष्ठानत्वमायातं विक्षेपद्वारेण जगदधिष्ठानत्वभूताया मायाया ब्रह्मत्वांगीकारात् तथा च ब्रह्मणो जगदधिष्ठानत्वे शक्तत्वं वाच्यम्। सा च शक्तिस्तस्य किंरूपेति वाच्यम्। स्वस्वरूपभूतेति चेत् का शक्तित्वकल्पना। न हि स एव तच्छक्तिरित्युचितम् । चिद्रूपस्य च शक्तिः विमर्शरूपैवोचिता स्फुटं बुद्धयवच्छिन्ने तदंशे विमर्शकत्वदर्शनात् । किं च जीवाश्रयं ब्रह्मविषयं च मायाकृतमावरणमिष्यते भवद्भिः। तदुक्तम् :-

"जीवाश्रया ब्रह्मपदा ह्यविद्या तत्त्वविन्मता ।"

इति। जीवस्य च ब्रह्मविषयमावरणं स्वावरणमेव फलतः तस्यैव तद्भावासादनात्, अन्यथा भेदापातात् । तत्र च ब्रह्मणो जीवत्वानाक्रान्ते भागे नावरणमेवेति बलादायातम्। स एव प्रकाशः। प्रकाशश्च विमर्शं विनाऽसत्कल्प एव। तदुक्तम् :-

"विकल्पातीतवृत्तित्वात्प्रत्यक्षोऽप्यसि विस्मृतः ।
यथा पुरःस्थितो भावश्चेतसोन्यत्रगामिनः ॥"

इति। स एव चाहंपरामर्श इति। ननु तर्हि तर्केणैवाऽस्यात्र सिद्धिः ? भवतु का हानिः, तर्कोपि हि श्रुत्यनुकूलः प्रमाणमेव । तदुक्तम् :-

"तर्को योगाङ्गमुत्तमम्"

इति। अस्ति चात्र श्रुतिरपिः-

"स ऐक्षत"[1]

इति।

"सर्वज्ञः"

इत्यादि। ईक्षणं ह्यत्र तावद् द्वितीयाभावात् स्वविषयमेवेष्टम्, स एव चाहंपरामर्शः। चिद्रूपो हि भगवान् शक्तत्वेन परामृष्टं स्वमेव जगद्भावेन प्रादुर्भावयति जलमिव स्वं तरंगभावेन। अस्य तु जडत्वेन परामर्शे शक्तत्वं नास्ति। जडो हि स्वपरविषयपरामर्शरहित एव। ननु स्वपरदर्शनमपि तस्य संभवत्येव। असदेतत्। परामर्शरहितं दर्शनं हि प्रतिसंक्रान्तिरूपमेव। तच्च जडे स्फटिकादावपि दृश्यत एव, यद्वक्ष्यति:—

"स्वभावमवभासस्य विमर्शं विदुरन्यथा।
प्रकाशोऽर्थोपरक्तोपि स्फटिकादिजडोपमः॥"

इति। सर्वविषयं ज्ञानं चात्र परिमितापरिमिताहंपरामर्शेदन्तापरामर्शमयमेव, स्वयमेव प्रकाशरूपज्ञानत्वेनास्य स्थितत्वात् इति। ननु स्वानुभव एव भवद्भिः सर्वत्राभिषिच्यते सोप्यत्र वक्तव्यः। सत्यम्। जीवस्तावत्स्वानुभवरूप एवेति का कथा तदनुभवस्य। तत्र च ब्रह्माप्यनुभवरूपमेव।

"अहं ब्रह्मास्मि"

इति अपरोक्षज्ञानेन तदेकत्वासादनात्, अन्यथास्ति ब्रह्मेति परोक्षज्ञानस्यैव स्थितत्वात्, तयोरनुभवानपेक्षित्वे च तद्विमर्शस्यापि तदनपेक्षैव। किञ्च ययोः प्रकाशविमर्शयोर्बलेन सर्वमनुभूयते का तयोरनुभवापेक्षा। न हि दीपदर्शनार्थं दीपान्तरापेक्षा युक्ता, तेनैव तत्प्रकाशनात्। ननु प्रकाशे इयमेव व्यवस्था, विमर्शव्यवस्था तु पृच्छ्यते। अहो प्रमादः। प्रकाशविमर्शयोस्तद्ग्रहणतदान्तर-शब्दनरूपयोः किं भिन्नत्वं युक्तम्। एतच्चाग्रे युक्तिशतैः कथयिष्यति इति नात्र प्रयासो युक्तः। ननु तर्हि सदाशिवतत्त्वं त्वया कथं निर्विमर्शमंगीक्रियते। सत्यम्। तद्धि इदन्तामिश्रतदमिश्रयोरहंपरामर्शयोर्मध्ये सीमात्वेन कल्पितम्। तत एव तदेवमुक्तम्। तस्य हि शुद्धपरामर्शविषयत्वे शिवत्वापातः। इदन्ता-मिश्राहंविषयत्वे त्वीश्वरत्वाद्यापातः। मायाधोवर्तिनोः परिमिताहन्तेदन्तयोरिह

1. This Śruti is found as तदैक्षत। Ch. U. VI. 2. 3.

वृत्त्या तात्पर्य टीकया तद्विचारः
सूत्रेष्वेतेषु ग्रन्थकारेण दृब्धम् ।
तस्मात्सूत्रार्थं मन्दबुद्धीन्प्रतीत्थं
सम्यग्व्याख्यास्ये प्रत्यभिज्ञाविवित्त्यै ॥ ५ ॥

---

कथैव नास्ति । तयोस्तदधोवर्तिग्राह्यग्राहकनिष्ठत्वात्, इह तु शुद्धविद्यादितत्त्वनिष्ठाऽहन्तेदन्ताप्रस्तावात् । परमार्थविचारे तु सदाशिवस्याप्यशुद्धतानिर्गततावदनासादितशुद्धभावाहंपरामर्शयुक्तत्वं विद्यत एव । तद्रहितत्वं तु त्वत्समाश्वासनार्थमेव तावदुक्तम् । ननु तथाप्यस्मदभीष्टमष्टात्रिंशं परमशिवरूपं तत्त्वं वेदान्तिनो न प्राप्ता एव, शिवतत्त्वस्यैव प्राप्तेः। सत्यम्। शिवतत्त्वमेवास्माकमभीष्टमस्ति । परन्तु शक्तितत्त्वस्य भिन्नतया कथनेन तत्ततो भिन्नत्वमिव गतमिति तदैक्यरूपस्य सप्तत्रिंशस्य तत्त्वस्य कथनम् । तच्च वाच्यतां न सहते इति उपदेशकाले तस्याष्टात्रिंशत्वकथनम् । तस्याप्युपदेशविषयत्वे पुनरुक्ते सप्तत्रिंशे एव तत्त्वे विश्रान्तेर्नानवस्था । किञ्च सहृदयतां भजन्तो वेदान्तिनोऽन्यदपि किञ्चित्पृच्छ्यन्ते। ब्रह्मणोक्ते वेदेऽस्माभिः प्रमाणान्वेषणा न कृता। त्वया कथमीश्वरोक्ते आगमशास्त्रे सा कृता । तत्रापि श्रुतिप्रमाणमार्गणं मूढताकार्यमेव। ननु केनेश्वरस्तत्र कर्ता दृष्ट इति चेत्, वेदेऽपि केन स दृष्ट इति वाच्यम्। सनकादिभिः स दृष्ट इति चेत्, मठिकागुरुभिरप्ययं दृष्ट इति किं न सह्यते । नन्वेषां प्रामाण्यं नास्ति । तेषां कथं तदस्ति? महाजनपरिग्रहादिति चेत्, अत्रापि श्रीदुर्वासादिभिः परिग्रहः कृत एव । ननु तत्र बहुभिः कृतः । सत्यम् । महारहस्येषु न सर्वेषामधिकार इत्यलं शान्तिकर्मारम्भे वेतालोत्थापनरूपेण विवादेन। किञ्च बालेनाप्युक्तं युक्तं सदस्मदीयनये प्रमाणमेव, का कथा निःश्रेयसकर्तृकमहारहस्यशास्त्रप्रामाण्ये। तदुक्तं श्रीवसिष्ठेन :—

"युक्तियुक्तमुपादेयं वचनं बालकादपि ।
शेषं तृणमिव त्याज्यमप्युक्तं पद्मजन्मना ॥"

इति । फलिता चिराकांक्षिता वेदान्तिभिः सहृदयता । यस्तु एतेनापि तत्तां नागतः स्ववञ्चकाय तस्मै नम एव कार्यमित्यलं प्रपञ्चेन ।

**सर्वत्राल्पमतौ यद्वा कुत्रापि सुमहाधियि ।**
**न वान्यत्रापि तु स्वात्मन्येषा स्यादुपकारिणी ॥ ६ ॥**

---

नन्वेतेषु सूत्रेषु प्रथमं सूत्रकारेण वृत्तिः कृता, तदनु च तदुपरि स्वयमेव टीका कृता, तस्याष्टीकायाश्च त्वया टीका कृतेति किमयं पिष्टपेषणसहोदरः पुनः प्रयत्न आरब्ध इत्यपेक्षायामाह "**वृत्त्या**" इत्यादि । अत इति शेषः । यतो **ग्रन्थकारेण**—प्रत्यभिज्ञासूत्रकारेण श्रीमदुत्पलदेवेन, **वृत्त्या**–तात्पर्यमात्रे वर्तनं वृत्तिः, लक्षणया तन्निष्ठो ग्रन्थो वृत्तिः, तया, **तात्पर्यम्**—अत्राभिप्राये एतानि सूत्राणि प्रवृत्तानीत्ययमर्थः, **दृब्धम्**—ग्रन्थेन कथितम् । पुनस्तेनैव **तद्विचारः**—तात्पर्यविवेकः, टीक्यतेऽवगम्यतेऽनयार्थ इति टीका तया, दृब्धः, न तु सूत्राणां सम्यगर्थप्राकट्यं कृतमिति भावः । **तस्मात्**—ततः कारणात् । अहमभिनवगुप्ताख्यः **सूत्राणाम्**–सूचनामात्रपराणां कारिकाणाम्, **अर्थम्**–वाच्यार्थम्, **इत्थम्**—अनेन वक्ष्यमाणेन प्रकारेण, **सम्यक्**—स्फुटं कृत्वा, प्रत्यभिज्ञायाः–अत्र वाच्यभूतस्य स एवेश्वरोहमिति भातभासमानानुसन्धानस्य, विविक्त्यै-विवेचनार्थम्, **मन्दबुद्धीन्प्रति**—वृत्त्या टीकया तट्टीकया च सूत्रार्थबोधेऽसमर्थबुद्धीन् उद्दिश्य, **व्याख्यास्ये**—व्याख्याविषयतां नेष्यामि, व्याङ्पूर्वस्य ख्याञः लृटि रूपम्, तथा च नास्य प्रयत्नस्य पिष्टपेषणप्रायत्वमित्यर्थः ।

अस्य विमर्शिन्याख्यस्य ग्रन्थस्य मूलशास्त्रेणैव शिष्यनिवहाविच्छिन्नप्रवृत्तिनिमित्तभूतं परमप्रयोजनाद्ययत्नसिद्धं ज्ञात्वा तथाप्येतद्व्याख्याप्रवृत्त्यर्थमेतस्यावान्तरप्रयोजनाधिकारिनिर्णयं साक्षात्करोति "**सर्वत्र**" इति । **एषा**—करिष्यमाणप्रत्यभिज्ञासूत्रविमर्शिन्याख्या व्याख्या, **सर्वत्राल्पमतौ**—सर्वेषु मन्दबुद्धिषु, एतेन स्वस्य महाग्रन्थकरणे प्रवृत्तावभिमानो निरस्तः । बुद्धिस्थं दुर्बोधताकारणमनुस्मृत्याह "**सुमहाधियि**" इति । सुमहाधियोपि दुर्लभत्वं ज्ञात्वाह "**कुत्रापि**" इति । लाभेपि तस्य मात्सर्यग्रस्तत्वमाशंक्याह "**न वा**" इति। ननु तर्हि व्यर्थैवेयमित्यपेक्षायामाह "**अपि तु**" इति। "**अपि तु**" इत्यवधारितपक्षान्तरद्योतनपरम्, **एषा स्वात्मनि**–स्वस्मिन्नुत्पत्त्या भक्त्यावेशेन च

**ग्रन्थकार: अपरोक्षमात्मदृष्टशक्तिकां परमेश्वरतन्मयतां परत्र संचिक्रमयिषुः, स्वतादात्म्यसमर्पणपूर्वम् अविघ्नेन तत्सम्पत्तिं मन्यमानः, परमेश्वरोत्कर्षप्रह्वतापरामर्शशेषतया परमेश्वरतादात्म्ययोग्यतापादनबुद्ध्या प्रयोजनम् आसूत्रयतिः—**[1]

---

स्वात्मतुल्येषु पुत्रादिषु शिष्येषु च, **उपकारिणी**—विनोदबोधाख्योपकारकारिणी, **स्यात्** । एवं चोपकारोऽवान्तरफलं तत्कामोऽवान्तराधिकारी, संबन्धाभिधेयौ परमावेव नावान्तरावपि टीकाग्रन्थत्वात् । यद्यपि पूर्वश्लोकेऽपि "प्रत्यभिज्ञाविविक्त्यै" इत्यनेनापीदमेव प्रयोजनमुक्तम्, तथापि सप्तम्यन्तैः कृतस्याधिकारिनिर्णयस्यानुरोधेनेहैव प्रकटीकृतम् ।

अथ श्रीपरतत्त्वविषयप्रह्वीभावसर्वोत्कर्षपरामर्शस्वरूपनिर्विघ्नप्रारिप्सितपरिसमाप्तिहेतुमंगलाचरणनिष्ठश्रोतृबुद्धिसमाधानप्रयोजनानुबन्धचतुष्टयपरग्रन्थकरणप्रत्यभिज्ञास्वभावादिश्लोकविवृतिं प्रति सांमुख्यं भजन् प्रथमं तदवतारणोपयोगिनीं त्वराविष्टशिष्यबुद्धिसमाश्वासनार्थं तद्वर्णनीयोद्भावनरूपामवतरणिकां करोति ग्रन्थकारः "**ग्रन्थकारः**" इत्यादिना । **ग्रन्थकारः**-ग्रन्थकर्तृभूतः श्रीमानुत्पलदेवः, परमेश्वरस्य—परमशिवरूपस्य सप्तत्रिंशस्य तत्त्वस्य यः उत्कर्षः—महेश्वरपदवाच्या सर्वतत्त्वेभ्यः उत्तमता, तत्र या प्रह्वतादासपदवाच्यप्रह्वीभावः, तस्या यः परामर्शः—प्रख्योपाख्याक्रमेण परामर्शनम्, तस्य शेषतया-अंगभावेन, विशेषणत्वेनेति यावत् । **प्रयोजनम्**-"समस्त" इत्यादिपदवाच्यम् प्रत्यभिज्ञाशास्त्रप्रयोजकं वस्तु । **आसूत्रयति**-निबध्नाति, योजनावाक्ये स्फुटमस्य दास्यपदविशेषणत्वेन योजनात् । एतेन मंगलस्य शेषित्वमर्थादुक्तम् । प्रयोजनस्य शेषित्वे चतुर्थ्या निर्देशः स्यात् । इत्थंभावे तृतीया । कया हेतुभूतया ? परमेश्वरेण यत्तादात्म्यम्-स एवाहमिति चित्त स्फुरणम्, तत्र या योग्यता तस्याः यदापादनम्—जनविषये प्रापणं तस्य बुद्धचा हेतुभूतया । एतां बुद्धिं कृत्वेति यावत् । प्रयोजनविषयकम् अनयैव हि पुरुषस्याधिकारित्वम् ।

---

1. अपरोक्षात्मनि दृष्टशक्तिकाम्—K. S. S.

**कथंचिदासाद्य महेश्वरस्य**
**दास्यं जनस्याप्युपकारमिच्छन् ।**
**समस्तसंपत्समवाप्तिहेतुं**
**तत्प्रत्यभिज्ञामुपपादयामि ॥ १ ॥**

इह परमेश्वरं प्रति या इयं कायवाङ्मनसां तदेकविषयतानियोजना-लक्षणा प्रह्वता सा नमस्कारस्य अर्थः । सा च तथा कर्तुम् उचिता प्रामाणिकस्य भवति, यदि सर्वतो नमस्करणीयस्य उत्कर्षं पश्येत् । अन्यथा

---

हेतावियं तृतीया। प्रह्वीभावस्य तु निर्विघ्नपरिसमाप्तिहेतुता स्वयमेव योजनीया । ग्रन्थकारः कीदृशः ? **अपरोक्षम्**-स्वसंवेदनसिद्धं यथा भवति तथा, आत्मनि दृष्टा शक्तिः–समस्तसंपत्समवाप्तिं प्रति सामर्थ्यं यस्याः । अन्यथा हि प्रतारकतामात्रं स्यात्, ताम् । परमेश्वरेण-परतत्त्वेन, या तन्मयता-एकीभावः, ताम् । **परत्र**-जनविषये, **सञ्चिक्रमयिषुः**–प्रत्यभिज्ञोपायेन संक्रामयितुं चित्ते स्फुरणशीलां कर्तुमिच्छन् । अन्यथा हि "जनस्याप्युपकारमिच्छन्" इति न ब्रूयादिति भावः । उपकारो हि दास्यरूपा तन्मयतैव। अन्यच्च कीदृशः ? स्वस्य यत्तादात्म्यम्-परमेश्वरेण तन्मयता, तस्य समर्पणम्-"परमेश्वरस्य दास्यमासाद्य" इत्येवमादिश्लोके साक्षात्कथनम्, तत्पूर्वं यत्तत् । **अविघ्नेन**–सुखेन, **तत्संपत्तिम्**-जने परमेश्वरतन्मयतासिद्धिम्, **मन्यमानः**, अत एव तत्कुर्वाण इति शेषः । प्रत्यभिज्ञाकरणप्रतिज्ञा त्वत्र साक्षाद्वाच्यैवेति तच्चर्चा व्यर्थैव । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । "**कथंचित्**" इति ।

अत्र टीकाः–

श्लोकं व्याख्यास्यन्नज्ञेषु नमस्काराकरणशंकामपनोदितुमाह "**इह**" इत्यादि । सः एकः–परमेश्वरः, विषयः–आलम्बनं यस्याः सा तस्या भावः तदेकविषयता, तस्यां नियोजना-प्रेरणा, सा लक्षणम्-स्वरूपं यस्याः सा तादृशी । **प्रह्वता**–प्रह्वीभावः । **अर्थः**–अभिधेयम् । तत्र प्रह्वतायाः कायेनाष्टांगप्रणतिरूपत्वम्, वाचा उच्चारणम्, मनसा परामर्शविषयत्वमिति विभागो ज्ञेयः । **'सा च'** इति । **सा**-प्रह्वता । **'तथा'** शब्दः तदाशब्दार्थे, **प्रामाणिकस्य**–प्रेक्षापूर्वकारिणः । **सर्वतः**–सर्वेभ्यः जडाजडेभ्यः ।

युक्तिम् अपरामृशतः अपरमार्थे[1]ऽपि नमस्कारोद्यतस्य सांसारिकजनमध्य-[2]पातित्वमेव। यथोक्तम् :—

'न विन्दन्ति परं देवं[3] विद्यारागेण रञ्जिताः।'

इति। तावति हि मायीयाशुद्धविद्यारागकलासंचार्यमाणस्य पशुत्वमेव। इतरापेक्षया तु कतिपयाध्वोत्तीर्णतया समुत्कर्षोऽपि स्यात्। तदुक्तम् :—

---

**नमस्करणीयस्य**–त्रिविधनमस्कारविषयीकर्तुमारब्धस्य, **उत्कर्षम्**–सर्वैर्गुणैः श्रेष्ठताम्। **अन्यथा**–उत्कर्षदर्शनाभावे, **युक्तिम्**–उत्कर्षे नमस्कारकरणरूपाम्, **अपरामृशतः**–अविचारयतः। **अपरमार्थे**—परमेश्वरव्यतिरिक्ते जलबुद्बुदप्राये देवताविशेषे, **नमस्कारोद्यतस्य**–नमस्कारे प्रवृत्तस्य, अत्र चाज्ञत्वेनष्टलाभलोभेन वेति शेषः। सांसारिको यो जनः-धनादिलोभेन राजादौ नमस्कारोद्यतः, तन्मध्यपातित्वम्-तन्मध्यगतत्वम्, तत्समानयोगक्षेमत्वम्, तत्सदृशत्वमिति यावत्। अत्रागमं संवादयति "**यथोक्तम्**" इति। उक्तमेवोपन्यस्यति "**वैष्णवाद्याः**" इति। अत्र पदेऽयमर्थः। "**तु**" शब्दः शैवादिभ्यो व्यतिरेकद्योतनपरः। **ये केचिद्वैष्णवाद्याः**–वैष्णवबौद्धप्रभृतयः भवन्ति। ते सर्वे **विद्यया**–किञ्चिज्ज्ञत्वरूपाशुद्धविद्यातत्त्वेन, **रागेण**-रागतत्त्वेन च, समाहारे द्वन्द्वः, **रञ्जिताः**–वैष्णवबौद्धाद्यधरदर्शनेषु आसक्तिं नीताः सन्तः। **परम्**–समस्ततत्त्वोत्तीर्णम्, **देवम्**–क्रीडाशीलम्, **सर्वज्ञम्**–सर्वविषयवर्णयुक्तम्, तथा **ज्ञानेन**-तेनैव सर्वविषयज्ञानेन, शालते इति तच्छीलम्, अर्थादात्मरूपपरमेश्वराख्यं देवम्। **न विन्दन्ति**-स्वेष्टदेवताभावेन न लभन्ते, अन्यथा देवाभासेषु भ्रमायोगात्। तथा च राजादिसेवनपरलौकिकजनवत् पशुत्वमेव तेषामिति भावः। आगमसंवादितेऽर्थे वाक्येन

---

1. अपरमार्थरूपे–K. S. S.
2. सांसारिकपशुजन—K. S. S.
3. From the commentary the first half of this verse seems to have been as follows:—
 "वैष्णवाद्यास्तु ते सर्वे सर्वज्ञं ज्ञानशालिनम्।"

'कस्य नाम करणैरकृत्रिमैः पश्यतस्तव विभूतिमक्षताम्।
विभ्रमादवरतोऽपि जायते त्वां व्युदस्य वरदस्तुतिस्पृहा[1] ॥'

इति श्रीमद्विद्याधिपतिना[2]। एतच्च आगमकाण्डे निरूपयिष्यामः। तस्मात् निखिलोत्कर्षपरामर्शनमपि तत्र स्वीकार्यम्। यद्यपि आयातदृढेश्वरशक्ति-

---

हेतुं कथयति "**तावति**" इति। तदाश्रितं पदं तावत्, 'हि' शब्दो हेतौ, मायीया-अवरोहे मायानन्तरं स्थितत्वेन तत्कार्या, या अशुद्धविद्या–किञ्चिज्ज्ञत्वरूपा, तया या रागकला-रागांशः, तया संभ्रार्यमाणस्य-यत्र तत्र देवाभासेषु भ्रामितस्य, **पशुत्वम्**-लौकिकजननिष्ठः पशुभाव एव भवति। परतत्त्वानभिज्ञत्वात्। ननु तर्हि तस्य तत्पदाश्रयणं व्यर्थमेवेत्यपेक्षायामाह "**इतर**" इति। इतरे-बौद्धादयः लौकिकाश्च, अध्वानः—तत्त्वभूमिकाः। अत्र श्रीविद्याधिपतिमतं संवादयति "**तदुक्तम्**" इति। "श्रीविद्याधिपतिना" तदुक्तमिति व्यवहितेन संबन्धः। अस्य पद्यस्यायमर्थः। **अकृत्रिमैः**–त्वद्विभूतिमयत्वेन सहजैः, करणैः–बाह्यान्तः–करणैः, अन्यथाभानेपि परमार्थतः **तव**–ते संबंधिनीम्, **अक्षताम्**–सम्पूर्णाम्, **विभूतिम्**-तत्त्वषट्त्रिंशकरूपमैश्वर्यम्, **पश्यतः**–स्वभावबलेन गृह्णतः, **कस्य नाम**-वैष्णवादेः अधरदर्शनस्थस्यापि। **त्वां व्युदस्य**—भवन्तं त्यक्त्वा, वरदे-वरदातरि स्वेष्टदेवताविशेषे, स्तुतिस्पृहा-स्तुत्याकांक्षा, **जायते**। न कस्यापी-त्यर्थः। अन्यदेवतानिष्ठा अपि परमार्थतस्त्वन्निष्ठा एवेति भावः। यत्स्वयं भगवतोक्तम् :–

"ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्"

इति। श्रीतन्त्रालोकेपिः–

---

1. वरद स्तुतिस्पृहा—K. S. S.
The editor of the K. S. S. seems to have taken वरद as a vocative.

2. श्रीमद्विद्यापतिना–K. S. S.

**पातस्य स्वयमेवेयमियती परमशिवभूमिरभ्येति हृदयगोचरम्, न तु अत्र स्वात्मीयः पुरुषकारः कोऽपि निर्वहति, सर्वस्य तस्य मायामयत्वेनान्धतमसप्रख्यस्यामायीयं शुद्धप्रकाशं स्वप्रतिद्वन्द्विनं प्रति उपायतानुपपत्तेः, तथापि तदेव तथाविधं रूपं प्रख्योपाख्याक्रमेण स्वात्मपराबभासविषयभावजिगमिषया निःशेषोत्कर्षविशेषाभिधायि-जयत्यादिशब्दानुवेधेन परा-**

---

"ये बोधादतिरिक्तं हि किञ्चिद्वाच्यतया विदुः ।
तेपि बोधं विविञ्चाना बोधाभेदेन मन्वते ॥"

इति । कुतो हेतोः ? **अध्यवरतः**—भेदपदस्थत्वेनाधरदर्शनस्थात्, **विभ्रमात्**—देवाभासे देवत्वज्ञानरूपात् । विपर्ययज्ञानादपीत्यर्थः । स्तुतिस्पृहाव्युदासयोरेककर्तृत्वमाश्रित्य स्थितः क्त्वाप्रत्ययो न दुष्टः । तथा च स्फुटमेव वैष्णवादे राजादिनिष्ठेभ्यः कतिपयाध्वोत्तीर्णत्वमिति भावः । यद्यपि राजादौ नमस्कारोद्यतस्यापि परमार्थतस्तत्परत्वमेव, तथापि बहुव्यवधानतया तदसंकल्प्यमेवेति । नन्वयं तत्त्वभूमिकाविभागः कुत्रोक्तः इत्यत्राह **"एतच्च"** इति । **एतत्**—तत्त्वभूमिकानुरोधेन स्थितमुत्तीर्णत्वादि । उपसंहारं करोति **"तस्मात्"** इति । नमस्कारयोग्यतापादकत्वेनेत्यर्थः । **तत्र**—नमस्कारे, **स्वीकार्यम्**, अनुक्तमप्याक्षेप्तव्यमित्यर्थः । ननु तीव्रतरशक्तिपातस्पृष्टे परमेश्वरोत्कर्षः स्वयमेव स्फुरन्दृष्टः किं तस्य बलात् स्वीकरणेनेत्याशंकापूर्वं तत्स्वीकरणमवश्यकरणीयत्वेन कथयति **"यद्यपि"** इत्यादिना । दृढः—तीव्रतरः, **स्वयमेव**—तद्वाचकशब्दपरामर्शनं विनैव, **इयती**—स्वान्तःकृतसमस्ततत्त्वा, **परमशिवभूमिः**—परमशिवमितिः, परमशिवस्वरूपमिति यावत् । **हृदयगोचरम्**—स्वसंवेदनवेद्यताम् । **"न तु"** इति पक्षान्तरसूचनपरम् । **अत्र**—परमेश्वरोत्कर्षस्फुरणे, **पुरुषकारः**—तद्वाचकशब्दपरामर्शनरूपः, **निर्वहति**—प्रगल्भते । **मायामयत्वेन**—भेदेन स्फुरणानीतेन मायारूपत्वेन । **स्वप्रतिद्वन्द्विनम्**—शत्रुभूतम्, न हि तमसः तेजःसाधने उपायता दृष्टेति भावः । एवमयुक्तत्वं साधयित्वा तत्त्वेपि प्रयोजनवशेनोत्कर्षपरामर्शस्याऽवश्यकर्तव्यतां कथयति **"तथापि"** इति । **तथापि तथाविधम्**—उत्कर्षगुण-

मर्शनीयम्, इति नमस्कारे जयत्यर्थ आक्षेप्यः। जयपदोदीरणेऽपि तादृश-समुत्कर्षातिशयशालिनि स्वात्मानमप्रह्वीकुर्वाणस्य तटस्थस्य परमनात्मोप-कारित्वम् इति समुत्कर्षविशेषाच्छिन्न एव नमस्कारोऽवश्यमभ्यन्तरीकार्यः, इत्यनया युक्त्या जय-नमस्कारैकतरप्रक्रमे अन्यतरस्य अर्थाक्षिप्तता अव-श्यमङ्गीकर्तव्या। वन्दन-नमन-स्मरण-प्रध्यानप्रभृतीनामपि नमस्कार-जय-

---

युक्तम्, तदेव रूपम्–प्रक्रान्तं परमेश्वरस्वरूपमेव न त्वन्यदपि किञ्चित्। अस्य तत्सृष्टत्वेन सर्वोत्कृष्टत्वायोगात्। निःशेषेभ्यो यः उत्कर्षः–ऊर्ध्वपदस्थत्वम्, तस्य यः विशेषः तमभिदधाति–तत्र संकेतितत्वात् कथयतीति तादृशः यो जयत्यादिः शब्दः, आदिग्रहणेनाऽन्येषां पर्यायाणां ग्रहणम्, तस्य योऽनुवेधः–व्याप्तिः तेन, मानसिकतदुच्चारपरामर्शद्वारेणेति यावत्। **परामर्शनीयम्**–विमर्शविषयी-कार्यम्। करणे तृतीया। कया हेतुभूतया? प्रख्या-प्रकृष्टज्ञानरूपः आन्तरः वाच्यविषयः परामर्शः, उपाख्या-तत्समीपवर्ती स्फुटः तद्वाचकनिष्ठः उच्चारः, तयोर्यः क्रमः तेन[1]। स्वात्मपरावभासविषयभावं गन्तुमिच्छा गच्छत्वित्येवंरूपा तया। तत्र प्रख्यया स्वात्मावभासविषयीभावः, अन्तःस्फुरितं हि स्वात्मैव विषयी-कर्तुं शक्तः, उपाख्यया परावभासविषयीभावः, स्फुटमुच्चारितस्य शब्दस्यार्थं हि परोपि ज्ञानविषयीकरोति। फलितं कथयति '**इति**' इति। **इति**–अतः कारणात्, **आक्षेप्यः**–तत्र साक्षादनुक्तोप्याक्षेपविषयतां नेयः। ननु तर्हि केवलमुत्कर्ष-वाचिजयशब्दोदीरणमेव किं न कुर्म इत्यपेक्षायामाह "**जय**" इत्यादि। जय-पदस्य यदुदीरणम्-उच्चारणम् तत्र। तटस्थत्वमत्र नमस्काराकरणरूपं ज्ञेयम्। **अभ्यन्तरीकार्यः**–अध्याहृत्य योजनीयः। तथा चात्रापि आक्षेपस्यावश्य-कार्यत्वमेवेति भावः। एवं युक्तिमुक्त्वा तत्सिद्धं वस्तु कथयति "**इत्यनया**"

---

1. The manuscript has "योऽर्थः तस्य रूपस्य" after तेन; but it does not seem to be connected with the rest of the sentence. Hence it has been omitted.

त्यर्थमात्रपरमार्थत्वाद् इयमेव वर्तनी। अत्रायं पुनर्ग्रन्थकृता तादृक् प्रक्रम आश्रितः, यत्र द्वयमपि इदं स्वशब्दपरामृष्टमेव। एतच्च पदार्थव्याख्यानावसर एव प्रकटीभविष्यति। स्वशब्दपरामर्शश्च सर्वजनहितत्वाद्युक्तियुक्तः, स हि सर्वस्यैव झटिति हृदयंगमः, अर्थाक्षिप्तस्तु कतिचिदेव प्रति स्वप्रतिभोदितवाक्तत्त्वावमर्शासंभवात्, वाक्तत्त्वावमर्शशून्यस्य च प्रकाशस्याप्रकाशकल्पत्वात्। एतच्च अग्रे स्फुटीभविष्यति। तदनेन अभिप्रायेण प्रसिद्धजय-नमः-प्रभृतिशब्दशय्यानाश्लेषेण इमां सरणिम् अनुसरति स्म ग्रन्थकारः।

---

न्यादना। ननु किं जयनमःपदयोरेवेयं वर्तनी, अथवा सर्वेषां तत्पर्यायाणामित्यत्राह "वन्दन" इति। तत्र वन्दननमनयोर्नमस्कारार्थत्वम्। अन्यस्य त्रयस्य तु जयार्थत्वम्। आदिशब्देनान्येषामपि तत्पर्यायाणां ग्रहणम्। ननु भवत्वेवम् अस्मिंस्तु ग्रन्थे तयोरेकमपि न दृश्यते इत्यपेक्षायामाह "**अयम्**" इति। '**पुनः**' शब्दो विशेषे, **प्रक्रमः**-सर्वातिशायिनी परिपाटी, **द्वयम्**, जयार्थः नमस्कारार्थश्चेत्यर्थः। स्वशब्देन-स्ववाचकशब्देन, परामृष्टम्-परामर्शविषयीकृतम्, उक्तमिति यावत्। '**एव**' शब्दोऽन्ययोगव्यवच्छेदपरः। "**पदार्थ**" इति। पदार्थानां यद् व्याख्यानम्-प्रकृतिप्रत्ययविभागेन स्फुटीकरणम्, तस्यावसरे-समये. "**प्रकटीभविष्यति**" इत्यनेन साक्षात्कथननिरासः। तत्र हि महेश्वरपदव्याख्यया सर्वोत्कृष्टत्वं प्रकटीभविष्यति। सर्वोत्कृष्टताया अभावे हि ईश्वरत्वमपि वक्तुमयोग्यमेव, का कथा महेश्वरत्वस्य। दासपदव्याख्यया तु प्रह्वता। न हि स्वात्मानमप्रह्वीकुर्वाणाय वराटिकामपि कोपि ददाति। का कथा सर्वदानस्य। ननु ग्रन्थकृतापि किं न लाघवार्थमाक्षेपादरः कृत इत्यपेक्षायामाह '**स्वशब्द**" इति। ननु किं तर्हि अर्थाक्षिप्तस्य सर्वथा हृदयंगमत्वं नास्तीत्याशंक्याह "**कतिचिदेव**" इति। स्वप्रतिभोदितवाक्तत्त्वावमर्शयुक्तान् कांश्चिदेव प्रतीत्यर्थः। अत्र हेतुमाह "**स्वप्रतिभा**" इति। सर्वेषामिति शेषः। स्वस्य या प्रतिभा-नवनवोल्लेखशालिनी बुद्धिः, तया उदितो यः वाक्तत्त्वावमर्शः-वाक्तत्त्वविषयः अवमर्शः परामर्शः तस्यासंभवात्। एतेन सर्वदा गुरुमुखप्रेक्षिणामाक्षेपा-

**इह यद्यत्किंचन[1] स्फुरति तत्तद्वक्ष्यमाणेश्वररूपस्वात्मप्रथामात्रम्, तत्र तु उपायोपेयभावप्रभृतिः कार्यकारणभावोऽपि यथाप्रकाशं परमार्थभूत एव, प्रकाशस्य अनपह्नवनीयत्वात्। यदाह भट्टदिवाकरवत्सो विवेकाञ्जने :—**

**'प्रकाशश्चैव[2] भावानाम्............।'**

**इत्यादि**

**'............ न शापोक्त्या विलीयते।'**

---

दिसिद्धार्थबोधेऽयोग्यता सूचिता। ननु वाक्तत्त्वावमर्शो मा भवतु ततः किमित्यपेक्षायामाह **"वाक्तत्त्व"** इति। **अप्रकाशकल्पत्वात्**, सद्योजातबालदीपदर्शनस्य यथाऽदर्शनसदृशत्वं भवति तथाऽप्रकाशसदृशत्वादित्यर्थः। **अग्रे**— "स्वभावमवभासस्य" इति कारिकायाम्। प्रक्रान्तां प्रक्रियामुपसंहरति **"तदनेन"** इति। **तत्**-तस्मात्कारणात्। **अनेन**-सर्वहृदयंगमतारूपेण, **इमाम्**-स्वशब्दपरामर्शरूपाम्, समनन्तरोक्तामित्यर्थः। प्रसिद्धजयनमःप्रभृतिशब्दशय्याश्लेषणे आक्षेपस्यावश्यकर्तव्यता स्यादिति भावः।

एवं नमस्कारस्य संभवं प्रसाध्य **"कथंचित्"** इति पदं व्याख्यातुं प्रक्रियां तनोति **"इह"** इत्यादिना। **यद्यत् किञ्चन**-यद्यत्किञ्चिद् भावजातम्। **परिस्फुरति**—भासते। वक्ष्यमाणश्चासौ ईश्वररूपः स्वात्मा तद्रूपा या प्रथा-प्रकाशः तन्मात्रम्। तद्वदहमितिपरामर्शमात्रविषयत्वयोग्यत्वादित्यर्थः। ननु भवत्वेवं ततः किमित्यत्राह **"तत्र"** इति। **तत्र**—स्फुरणशीलभावजातमध्ये, **"तु"** व्यतिरेके, **यथाप्रकाशम्**—प्रकाशभावानतिक्रमेण, न तु मायीयेन स्वेन रूपेणेत्यर्थः। सत्यभूतत्वे हेतुमाह **"प्रकाश"** इति। **अनपह्नवनीयत्वात्**—अपह्नोतुमशक्यत्वात्। यतः प्रकाशमानस्य केनाप्यपह्नवो न कर्तुं शक्यते ततः प्रकाशमानस्य कार्यकारणभावस्यापि परमार्थभूतत्वमित्यर्थः। **'प्रभृति'** शब्देन ज्ञाप्यज्ञापकभावादिग्रहणम्। अत्र वृद्धसंमतिमाह **"यदाह"** इति। **विवेकाञ्जने**, एतन्नामके शास्त्र इत्यर्थः। तत्रत्यं ग्रन्थमाद्यन्ताभ्यामुपलक्षयति **"प्रकाशश्चैव"**

---

1. किंचित्–K. S. S.
2. प्रकाशश्चैष–K. S. S.

इत्यन्तम् । तत्र तु कार्यकारणभावेऽपि क्वचित् परिपूर्णस्वातन्त्र्यलक्षणमाहेश्वर्यनान्तरीयकताक्रोडीकृतानन्तशक्तिचक्रचुम्बितभावभावितप्रथान्तरव्यवधानं चकास्ति; स तु मायीयत्वेन स्थापयिष्यते[1], जडचेतनाद्यवान्तरभेदशतसंभिन्नश्च असौ, तत्कृतश्च सर्वोऽयं निष्पाद्य-निष्पादकभावज्ञाप्य-ज्ञापकभावावभासो लोकव्यवहाररूपः । यत्र तु शुद्धस्वात्मरूपप्रथात्मकानुत्तरशक्तिशालिनिरर्गलस्वात्मप्रकाश एव मायीयप्रथान्तरव्यवधानवन्ध्यो निबन्धनम्, तत्र तस्यैव भगवतः कारणत्वम् । एष च अनुग्रहलक्षणोऽन्त्यः

इति । ननु ततोपि किमित्यत्राह "तत्र तु" इति । तत्र – समस्तकार्यकारणभावमध्य इत्यर्थः । **क्वचित्**–लौकिके, परिपूर्णम्–न तु क्वचित् पराहत्य खण्डितम्, यत्स्वातन्त्र्यलक्षणम्-सर्वत्रानन्यमुखप्रेक्षित्वस्वरूपम्, माहेश्वर्यम्-महेश्वरभावः, तेन नान्तरीयकतया–स्वव्याप्त्या, क्रोडीकृतम्–

"तेन स्वातन्त्र्यशक्त्यैव युक्त इत्याञ्जसो विधिः"

इति तन्त्रालोकनयेन स्वान्तःकृतम्, यच्छक्तिचक्रम्-शक्तिसमूहः, तेन चुम्बिताः-स्पृष्टाः, सारभावेन स्थित्वा व्याप्ता इति यावत्, ये भावाः–पदार्थाः, तैर्भावितम्-प्रकटीकृतम्, यत्प्रथान्तरम्-शुद्धप्रकाशव्यतिरेकेण भासमानं स्वविषयं ज्ञानम्, तेन व्यवधानम्-तत्कृतं परमेश्वररूपस्वात्माऽस्फुरणम् । **चकास्ति**–स्फुरति । अन्यथा सर्वत्र प्रकाशपरमार्थत्वेऽस्येदं कार्यमस्येदं कारणमिति विभागायोगादिति भावः । **मायीयत्वेन**–भेदस्फूर्त्यन्यथानुपपत्त्यागतेन मायाकार्यत्वेन, **स्थापयिष्यते**, इहैवाग्र इति शेषः । "**जड**" इति । जडम्-बीजादि, चेतनम्-पुरुषादि । ननु भवत्वसौ कार्यकारणभावः एवंरूपे, अन्यस्तु कीदृशोस्ति, इत्यपेक्षायामाह "**यत्र तु**" इत्यादि । शुद्धा-व्यतिरिक्तप्रथनीयाऽरूषिता या स्वात्मरूपा प्रथा–अवभासः, तदात्मकः यः अनुत्तरशक्तिशाली-सर्वातिशायिस्वातन्त्र्यशक्तिभूषितः, निरर्गलः–अच्छिन्नप्रसरः,

1. व्यवस्थापयिष्यते–K. S. S.
2. शुद्धप्रथात्मक–K. S. S

**पञ्चमः पारमेश्वरः कृत्यविशेषः परपुरुषार्थप्रापकः, तन्निबन्धनत्वात् परमार्थमोक्षस्य। अन्यत्रत्यो हि अपवर्गः कुतश्चिन्मुक्तिः, न सर्वत इति निःश्रेयसाभास इति वक्ष्यामः। स चायं द्वितीयः कार्यकारणभावो लौकिकान्वयव्यतिरेकसिद्धप्रसिद्धकार्यकारणभावविलक्षणत्वात् स्फुटेन रूपेणासंचेत्यमानः कादाचित्कवस्तुसद्भावोन्नेयपरमार्थः[1] अतिदुर्घटकारित्व-**

स्वात्मप्रकाशः–स्वात्मरूपः प्रकाशः, न तु बाह्यप्रकाशः। **निबन्धनम्**–सारभावेन स्थित्वा स्वरूपोत्पादकं कारणम्, तत्र, तस्मिन् कार्यकारणभावे इत्यर्थः। तस्यैव–स्वात्मप्रकाशस्यैव, कारणत्वम्-कारणभावः। कार्यत्वन्तु अर्थाद् दास्यासादनस्यैव ज्ञेयम्। **अन्त्यः**–अन्तभवः, **पञ्चमः**, सृष्टिस्थितिध्वंसपिधानाऽनुग्रहात्मकपञ्चकनिष्ठपञ्चसंख्यापूरकत्वात्। तत्र पिधानम् संस्कारमात्रतया स्थितस्यापि लयीकरणम्। अनुग्रहः स्वात्मीकरणम्, शेषम् स्फुटमेव। परपुरुषार्थस्य–मोक्षाख्यस्य पुरुषसंबन्धिपरमप्रयोजनस्य, प्रापकः–प्राप्तिकारी। स चेह दास्यासदनरूप एव ज्ञेयः, तत्साधनस्यैवेष्टत्वात्। अत्र हेतुमाह "**तन्निबन्धनत्वात्**" इति। **परमार्थमोक्षस्य**-शिवशासनोक्तस्य महास्वातन्त्र्यासदनरूपस्य महामोक्षस्य। ननु किमपरमार्थभूतोपि मोक्षोस्तीत्यपेक्षायामाह "**अन्य**" इति। अन्यत्र–बौद्धसिद्धान्तादिषु भवः **अन्यत्रत्यः। कुतश्चित्**–मायादेस्तत्त्वात्, न तु शुद्धविद्यादेरपि। तदुक्तम्:–

"रागाद्यकलुषोस्म्यन्तःशून्योहं कर्तृतोज्झितः।
इत्थं समासव्यासाभ्यां ज्ञानं मुञ्चति तावतः॥"

इति। ननु भवत्वसौ कार्यकारणभावस्तादृशस्ततः किमित्यत्राह "**स च**" इति। लौकिकः–भेदरूषितत्वेन लोकसिद्धश्चासौ अत एव अन्वयव्यतिरेकाभ्यां सिद्धश्चेत्यवयवविग्रहः। लोके हि यदन्वये यस्याऽन्वयः यस्य व्यतिरेके च यस्य व्यतिरेकः स तस्य कार्यत्वेन व्यवस्थाप्यते। **असञ्चेत्यमानः**–अतिसूक्ष्मत्वेन ग्रहीतुमशक्यः। ननु तर्हि कथमसौ सत्त्वेन ज्ञायते इत्याह "**कादाचित्क**" इति। कादाचित्कः–कदाचिद्भवः, यो वस्तुसद्भावः–परमार्थमोक्षसद्भावः, तेनोन्नेयः–ज्ञातुं शक्यः, परमार्थः–सत्यं स्वरूपं यस्य तादृशः। कार्यमात्रगम्य इत्यर्थः। यद्यपि

1. कादाचित्कवस्तुसद्भावावभासोन्नीयमानपरमार्थः–K. S. S.

**लक्षणैश्वर्यविजृम्भाभाविताद्भुतभावः प्रथमकोटिसंभावनाशून्यकालिका-[१] कारस्वप्रकाशावरणनिराकरणमनोरथशतदुष्प्राप इत्येवंप्रकारः कथमा[२] द्योतकनिपातसहितेन निरूपितः 'कथंचित्' इति, केनचिच्च प्रकारेण परमेश्वराभिन्नगुरुचरणसमाराधनेन परमेश्वरघटितेनैव। यथोक्तम्:—**

---

परमार्थतः सर्वदा स्थितस्य परमार्थमोक्षस्य कार्यत्वं न संभवति तथापि तदबोधापसारणार्थम् आरोप्य एवमुक्तम्। तत्रापि मुच्यमानविषये एव अस्य सत्त्वज्ञानम् नान्यविषये। अन्यविषयेऽन्यमोक्षस्यास्फुरणात्। तदुक्तम् :—

"सदेहा वा विदेहा वा मुक्तताविषये न[३] वा।
अनास्वादितभोज्यस्य कुतो भोज्यानुभूतयः॥"

इति। अस्यैव कार्यकारणभावस्य कथञ्चिदितिशब्दप्रवृत्तिनिमित्तत्वं साधयति **"अतिदुर्घट"** इति। अतिदुर्घटकारित्वं च स्वात्मतया स्थितस्य विश्वस्य भिन्नतया भासनं भासितस्य तु पुनः स्वात्मभावेन विमर्शनमिति द्विविधम्, तल्लक्षणम्-तत्स्वरूपं यदैश्वर्यम् तस्य विजृंभा-विलसनं तया भावितः—संपादितः, अद्भुतभावः—आश्चर्यकारित्वं यस्य तादृशः। ऐश्वर्यविलसनरूपत्वेन आश्चर्यकारीति यावत्। **"प्रथम"** इति। प्रथमकोटिसम्भावनाशून्यम्-अनादि, कालिकाकारम्—मेघमालावदाकारयुक्तम्, यत्स्वप्रकाशावरणम्—आत्मप्रकाशावरणभूता मायाशक्तिः, तस्य यन्निराकरणम्-अपसारणम्, तस्य यानि मनोरथशतानि-कदैतदुपरंस्यति इत्येवंरूपाणि, तैः दुष्प्रापः। श्रीभगवत्तीव्रतरशक्तिपातं विना प्राप्तुमशक्य इत्यर्थः। **इत्येवंप्रकारः**— प्रोक्तप्रकाररूपः, अनुग्रहरूप इति यावत्। **कथमा**— कथमित्यव्ययेन। **द्योतकनिपातसहितेन**—चिच्छब्दमेलितेन, **निरूपितः**, सूचित इत्यर्थः। परनिष्ठार्थद्योतनमात्रपराणां निपातानां वाचकत्वाभावाद् द्योतकेत्युक्तम्। द्योतकसहितं कथमित्यव्ययमेव दर्शयति **"कथंचिदिति"** इति।

---

1. प्रथमकोटिसंभावनाशून्यःकालिका–K. S. S.
2. थमा–K. S. S.
3. न वा does not yield much meaning here. Could the text have been मुक्तताविषयेऽथवा ?

'संबन्धोऽतीव दुर्घटः...... ।'

इति । 'आसाद्य' इति आ समन्तात् परिपूर्णरूपतया सादयित्वा, स्वात्मोपभोगयोग्यतां निरर्गलां गमयित्वा; इयता विदितवेद्यत्वेन परार्थे शास्त्रकरणे अधिकारो दर्शितः; अन्यथा प्रतारकतामात्रमेव स्यात् । पौर्वकाल्येन सामनन्तर्यम् अत्र विवक्षितम् । अन्यथा तु आसादनतारतम्यप्राप्तौ

अलौकिकमर्थमुक्त्वा लौकिकमपि कथयति "केनचित्" इति । एवकारोऽन्ययोगव्यवच्छेदपरः । अत्रानुकूलं शास्त्रवाक्यमुदाहरति "यथोक्तम्" इति । **संबन्धः**–महागुरोर्भक्तिकलितस्य शिष्यस्य च । "**आसाद्य**" इति पदं व्याख्यातुमुपन्यस्यति "**आसाद्य**" इति । अत्र प्रत्यक्षरं व्याख्यां कर्तुमारभते "**आ समन्तात्**" इति । सदेः णिजन्तस्य क्त्वाप्रत्यये रूपम्, अस्य धातोरनेकार्थत्वेपि गमनमात्रमाश्रित्येयं व्याख्या। निरर्गला स्वात्मोपभोगयोग्यता तु कर्मत्वेनाक्षिप्ता । फलितमाह "**इयता**" इति । **इयता**–"**आसाद्य**" इत्यनेन, **विदितवेद्यत्वेन**–ज्ञातज्ञेयत्वेन। **परार्थे**–परार्थम्, "**दर्शितः**" इति, स्वस्येति शेषः। तदभावे प्रवृत्तस्य दोषमाह "**अन्यथा**" इति। **प्रतारकतामात्रम्**–परवञ्चननिष्ठतामात्रम् । क्त्वाप्रत्ययेनोक्तस्य पूर्वकालस्याऽभिप्रायमाह "**पौर्वकाल्येन**" इति। **पौर्वकाल्येन**–पूर्वकालतया । **सामनन्तर्यम्**–दास्यासादनप्रत्यभिज्ञाशास्त्रोपपादनयोर्मध्ये व्यवधानराहित्यम्। "**अन्यथा**" इति। सामनन्तर्याभावे इत्यर्थः। **तारतम्यप्राप्तौ**–पराकाष्ठायां सत्याम्। तारतम्यप्राप्तिर्हि तारतम्यस्यावसाने संभवति, अन्यथा तस्य यथोत्तरं स्थितस्य का प्राप्तिः । तारतम्यावसानमेव च तारतम्यपराकाष्ठा। **कथं**[१] **शक्यक्रियः**– कथं कर्तुं शक्यः।

"इयं ज्ञानकला राम सकृज्जाताभिवर्धते ।"

इति न्यायेन परतत्त्वे लयासादनेन कर्तुमशक्य इत्यर्थः। यद्यपि देहस्थितिं तावत्संस्कारस्य स्थितिर्युक्तैवाऽन्यथा तत्पाताऽऽपातात्, तथापि शिष्यबोधनार्थमेवमुक्तम्। संस्कारनाशे तु विदेहमुक्तिसमयभाविनि न परस्तिष्ठति, नापि तस्य

1. Though कथं is not found in the manuscript, it must have been there as the explanation includes it.

मायीयमलकलापसंस्कारप्रक्षये कथं परोपदेशः शक्यक्रियः। संभवन्ति हि मायागर्भाधिकारिणो विष्णुविरिंचाद्याः, तदुत्तीर्णा अपि महामायाधिकृताः शुद्धाशुद्धा मन्त्र-तदीश-तन्महेशात्मानः; शुद्धा अपि श्रीसदाशिवप्रभृतयः। ते तु यदीयैश्वर्यविप्रुड्भिरीश्वरीभूताः स भगवान् अनवच्छिन्न-प्रकाशानन्दरूपस्वातन्त्र्यपरमार्थो[1] महेश्वरः, तस्य 'दास्यम्' इत्यनेन तत्प्रत्यभिज्ञोपपादनस्य महाफलत्वम् आसूत्रयति। दीयते अस्मै स्वामिना सर्वं यथाभिलषितम् इति दासः, तस्य भाव इत्यनेन परमेश्वररूपस्वातन्त्र्यपात्रता उक्ता। 'जनस्य' इति, यः कश्चित् जायमानः तस्य, इत्यनेन अधिकारिविषयो नात्र कश्चिन्नियम इति दर्शयति, यस्य यस्य हि इदं स्वरूपप्रथनं तस्य तस्य

---

करणीये उपदेशे शक्तिः। संस्कारं तावत्तु जीवन्मुक्तेषु भेदगलनेऽपि परोपि तिष्ठति, करणीये तदुपदेशे शक्तिरपीति संस्कारपदपरपदशवयपदानां ग्रहणम्। "संस्कार प्रक्षये" इति तु लेखककृतोऽपपाठ एव। येषां महापण्डितानां बुद्धावयमेव पाठः प्रशस्ततया स्फुरति तेभ्यो नम एवेत्यलम्। **"महेश्वरस्य"** इति पदं व्याचष्टे **"संभवन्ति"** इति। संभवक्रियाकर्तृत्वं भजन्ति। मायागर्भेऽधिकारिणः, अशुद्धतारूपभेदप्रधानत्वात्। महामाया—शुद्धविद्या। **शुद्धाशुद्धाः**, भेदाभेदप्रधानत्वात्, विप्रुड्भिः—लेशैः। **ईश्वरीभूताः**—अनीश्वराः सन्तः ईश्वराः सम्पन्नाः। अनवच्छिन्नः—विषयेण परिच्छिन्नतामनीतः, यः प्रकाशानन्दः—प्रकाशरूपः आनन्दः, तद्रूपम्—लक्षणया तत्परामर्शरूपम्, यत्स्वातन्त्र्यं तदेव परमार्थः-

"स्वभावमवभासस्य"

इति वक्ष्यमाणनीत्या सहजः स्वभावो यस्य तादृशः। एतेनास्य भगवतः परमत्वे हेतुरुक्तः। **तस्य**—परमेश्वरस्य, **दास्यम्**—दासभावम् **"आसाद्य"** इत्यस्य कर्मतया स्थितम्। **"इति"** शब्दः स्वरूपनिर्देशार्थः। उपपादनस्य—संपादनस्य। **महाफलत्वम्**—महाफलभावम्। दास्यासादनं प्रतीति शेषः। दास्यपदावयवार्थमाह **"दीयते"** इति। **अनेन**—तद्धितान्तदास्यपदेन। पारमेश्वर-

---

1. अनवच्छिन्नप्रकाशानन्दस्वातन्त्र्य—K. S. S.

**महाफलम्, प्रथनस्यैव परमार्थफलत्वात्, तस्य च प्रतिबन्धकसंमतैरप्रतिबन्धनीयत्वात्, न हि प्रथितमप्रथितमिति न्यायात् । तदुक्तम् : –**

---

स्वातन्त्र्यस्यैव सर्वत्वादिति भावः। **"जनस्य"** इति पदेन सूचनीयं वस्तु प्रकटयति **"यः कश्चिज्जायमानः"** इति । तदुक्तम् :–

"अहो महदिदं कर्म देव त्वद्भावनात्मकम् ।
आब्रह्मक्रमि यस्मिन्नो मुक्तयेऽधिक्रियेत कः ॥"

इति। अधिकारिनियमनिषेधश्चात्र वर्णविभागमपेक्ष्य कृतः। यथा वेदान्तेषूपनीतस्य त्रैवर्णिकस्यैवाधिकारस्तथा नेहेति।

"न मे प्रियश्चतुर्वेदो मद्भक्तः श्वपचोपि वा ।
तस्मै देयं ततो ग्राह्यम्"

इति। न तु सर्वथा, अग्रे जननमरणपीडितस्येत्यनेन वैराग्यस्याधिकारिलक्षणत्वेन सूचयिष्यमाणत्वात्। परमार्थविचारे तु वेदान्तेष्वपि वैराग्ययुक्तस्यैवाधिकारित्वम्। तद्रहितो हि ब्राह्मणोपि श्राम्यमाणः पशुतुल्य एव, तत्सहितस्तु शूद्रादिरपि यथा तथा तच्छ्रवणफलभागी दृश्यत इत्यलं बहुना। अत्र हेतुं वाक्येनाह **"यस्य यस्य"** इति। **यस्य यस्य**–ब्राह्मणादेः शूद्रादेर्वा, **इदम्**–प्रत्यभिज्ञारूपम्। **स्वरूपप्रथनम्**–महेश्वररूपस्वात्मस्फुरणम् । **महाफलम्** समस्तसम्पत्समवाप्तिरूपफलयुक्तदास्यासादनरूपं श्रेष्ठफलम् । यद्यपि समस्तसम्पत्समवाप्त्यपेक्षयाऽवान्तरफलत्वमेवास्य तथाप्यन्यफलापेक्षया महत्त्वमेव । अत्रापि पञ्चम्यन्तं हेतुमाह **"प्रथनस्यैव"** इत्यादि। ननु यदि तस्य कालेन प्रतिबन्धः स्यात् तर्हि न महाफलत्वमित्यपेक्षायामाह **"तस्य च"** इति । **तस्य च प्रतिबन्धकसंमतैः**–प्रतिबन्धकत्वेन मतैः अनभ्यासादिभिः, **अप्रतिबन्धनीयत्वात्**–प्रतिबन्धविषयीकर्तुमशक्यत्वात्। अत्र पूर्वाचार्योक्तं न्यायं हेतुत्वेनाह **"न हि"** इति। अन्यथाऽग्निरपि कदाचिदनग्निर्भवेत्[1] स्फुरणमात्रस्यैव परमार्थतः स्वरूपत्वादिति हेत्वभिप्रायः।

---

1. The manuscript has इति after "अनग्नि" which seems to be a scribal mistake as shown by रेफ over the following letter भ.

'नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥'

इति । परमगुरुपादैरपि शिवदृष्टौ :—

'एकवारं प्रमाणेन शास्त्राद्वा गुरुवाक्यतः ।
ज्ञाते शिवत्वे सर्वस्थे प्रतिपत्त्या दृढात्मना ॥
करणेन नास्ति कृत्यं क्वापि भावनयापि वा ।
सकृज्ज्ञाते सुवर्णे किं सत्यता करणादिना[2] ॥
सर्वदा पितृमात्रादितुल्यदार्ढ्येन सत्यता ।'

---

अत्र श्रीगीतावाक्यमप्युदाहरति **"नेहाभिक्रम"** इति । **अभिक्रमनाशः**–आरम्भनाशः । श्रीसोमानन्दवाक्यमप्युदाहरति **"परमगुरुपादैरपि"** इति । **शिवदृष्टौ**–तत्कृते शिवदृष्टचाख्ये शास्त्रे, उक्तमिति पूर्वेण संबन्धः । किमुक्तमित्यपेक्षायामाह **"एकवारम्"** इति । **शिवत्वे**–स्वात्मनिष्ठे शिवभावे । **करणेन**–आसनबन्धेन, दिव्यकरणेन वा । **भावनया**–परामर्शेन । कथं न कृत्यमस्तीत्यपेक्षायामाह **"सकृत्"** इति । **सकृत्**–एकवारम्, **ज्ञाते**–सम्यक् परीक्षिते सति, **सुवर्णे**–कनके । **करणादिना**–निकषघर्षणादिना, **किं सत्यता**–सत्यसुवर्णत्वं भवति । प्रथममेव निर्णीतत्वात् न भवतीत्यर्थः । कीदृशेन करणादिना ? **सर्वदा**–सर्वकालम्, पितृमात्रादिभिः तुल्यम्–सदृशम्, दार्ढ्यम्–दृढता यस्मिंस्तादृशेन, सेवितेनेत्यर्थः । श्रीवसिष्ठेनाप्युक्तम् :—

"इयं ज्ञानकला राम सकृज्ज्ञाताभिवर्धते"

इति ।

---

1. अतिक्रमनाश–K. S. S. This seems to have been the text of Abhinava, because this is the text which he explains in his own commentary on the Gītā.

2. भावनाकरणादिना–K. S. S.

write except

इति । 'जनस्य' अनवरतजननमरणपीडितस्य इत्यनेन कृपास्पदतया उपकरणीयत्वमाह । अपिशब्दः स्वात्मनः तदभिन्नताम् आविष्कुर्वन् पूर्णत्वेन स्वात्मनि परार्थसंपत्त्यतिरिक्तप्रयोजनान्तरावकाशं पराकरोति । परार्थश्च प्रयोजनं भवत्येव तल्लक्षणत्वात्,[1] न हि अयं दैवशापः स्वार्थ एव प्रयोजनं न परार्थ इति; तस्यापि अतल्लक्षणत्वे[2] सति अप्रयोजनत्वात्; संपाद्यत्वेन अभिसंहितं यत् मुख्यतया तत एव क्रियासु प्रयोजकं तत्प्रयोजनम् । अत एव भेदवादेऽपि ईश्वरस्य सृष्ट्यादिकरणे परार्थ एव प्रयोजनम् इति दर्शयितुं न्यायनिर्माणवेधसा निरूपितम्:—

'यमर्थमधिकृत्य पुरुषः[3] प्रवर्तते तत् प्रयोजनम्'

"जनस्य" इति पदं व्याचष्टे "अनवरत" इति । कृपास्पदतया—कृपाविषयतया । श्लोकस्थस्य "अपि" शब्दस्याभिप्रायमाह "अपिशब्दः" इति । तदभिन्नताम्—उपकरणीयैस्सह स्वस्याभेदम्, एतेनापिशब्दः अपूर्वार्थसंभावनपर इति सूचितम् । न च वाच्यमेतदभिन्नत्वेन तस्याप्येतत्सिद्धम् इति । एतस्य तदैक्यज्ञानेपि तस्यैतदैक्यज्ञानाभावात् स्थितायाः अप्येतत्सिद्धेरसत्कल्पत्वात् । ननु कथं परार्थस्य प्रयोजनत्वं युक्तमित्यपेक्षायामाह "परार्थश्च" इति । तल्लक्षणत्वात्—"यमर्थम्" इत्यादिप्रयोजनलक्षणयुक्तत्वात्, तस्यापि—स्वार्थस्यापि । अतल्लक्षणत्वे—प्रयोजनलक्षणरहितत्वे । ननु किं तत्प्रयोजनलक्षणमित्यपेक्षायामाह 'संपाद्यत्वेन' इति । संपाद्यत्वेन—साध्यत्वेन, अभिसंहितम्—चित्तेऽनुसन्धानविषयीकृतम् । प्रयोजकम्—प्रेरकम् । कदाचिद्धि पुरुषस्य परार्थोपि संपाद्यत्वेनाभिसंहितः प्रयोजकश्च भवतीति भावः । अत्र तर्कमतं सहायीकरोति "अत एव" इति । न्यायस्य-सूत्रसन्दर्भरूपस्य न्यायशास्त्रस्य, निर्माणे वेधसा-ब्रह्मणा, अक्षपादेनेत्यर्थः । किं निरूपितमित्यपेक्षायां तदीयं सूत्रमुदाहरति "यम्" इति ।

1. तल्लक्षणयोगात्—K. S. S.
2. अतल्लक्षणयोगित्वे—K. S. S.
3. In the published editions of the Nyāya-Sūtra the word 'पुरुष' does not forma part of this Sūtra.

इति। 'इच्छन्' इति इच्छाविषयीकृतस्य फलस्य प्रवृत्तौ हेतुत्वं शत्रा दर्शयति। इच्छाशक्तिश्च उत्तरोत्तरम् उच्छूनस्वभावतया क्रियाशक्तिपर्यन्तीभवति—इति दर्शयिष्यामः। उपशब्दः समीपार्थः, तेन जनस्य परमेश्वरधर्मसमीपताकरणम् अत्र फलम्।[1] अत एवाह 'समस्त' इति। परमेश्वरतालाभे हि समस्ताः संपदः तन्निःष्यन्दमय्यः संपन्ना एव, रोहणलाभे रत्नसंपद इव। प्रमुषितस्वात्मपरमार्थस्य हि किम् अन्येन लब्धेन,

---

**अधिकृत्य**–अधिकारविषयतां नीत्वा, आरभ्येति यावत्। यथा तर्कमते ईश्वरस्य सृष्टौ परार्थैव प्रवृत्तिः तथा ममापीहेति भावः। **"इच्छन्"** इति पदं व्याख्यातुमुपन्यस्यति **"इच्छन्"** इति। **फलस्य**–उपकारस्य। **शत्रा**–शतृप्रत्ययेन, तस्य हेतावपि प्रयोगात्। नन्विच्छामात्रेण किं सेत्स्यतीत्यत्राह **"इच्छाशक्तिश्च"** इति। बहिरपीच्छापूर्वैव सर्वा क्रियेति भावः। इषिक्रियायाः कर्मत्वेन स्थितम् **"उपकार"** पदं व्याचष्टे **"उपशब्दः"** इत्यादि। कारशब्दस्य करणार्थः प्रसिद्धेर्नोक्तः। फलितमाह **"तेन"** इति। तथा च दासेतिपदवाच्यं तादात्म्यमुपकारार्थः। दासपदव्याख्यायां हि सर्वं देयत्वेनोक्तम्। सर्वं च परमार्थतः ऐक्यरूपं परमेश्वरतादात्म्यमेव। एतदवलम्बेन **"समस्त"** इति पदं व्याख्यातुमुपन्यस्यति **"अत एवाह समस्त"** इति। **अत एव**, यतः उपकारपदस्य परमेश्वरपूर्णत्वादिधर्मसमीपकरणमर्थः ततः कारणादेवेत्यर्थः। अत्र हेतुमाह **"परमेश्वरता"** इति। **तन्निष्यन्दमय्यः**–परमेश्वरताप्रवाहरूपाः, तत्तरंगभूता इति यावत्। **समस्ताः**–पूर्णतादिरूपाः सर्वाः। **रोहणलाभे**–रत्नाचललाभे सुमेरुलाभे वा। ननु तल्लाभे किमन्यलाभापेक्षा न भवेदित्याशंक्याह **"प्रमुषित"** इति। प्रमुषितः–मायाशक्तिवशेन विस्मृतिं गतः, स्वात्मा एव–प्रकाशरूपः भावनिर्भरश्च परमेश्वररूपः निजात्मैव, परमार्थः–उत्कृष्टवस्तु, यस्य तादृशः तस्य, **अन्येन**–अणिमादिनाऽष्टधैश्वर्येण। न हि

---

1. तत एवाह -K. S. S.

लब्धतत्परमार्थस्यापि तदन्यत् नास्ति यद् वाञ्छनीयम्। यदुक्तं ग्रन्थकृतैव:-

'भक्तिलक्ष्मीसमृद्धानां किमन्यदुपयाचितम्।
एनया वा दरिद्राणां किमन्यदुपयाचितम्॥'

इत्येवं[1] षष्ठीसमासेन प्रयोजनमुक्तम्, बहुव्रीहिणा तु उपायः सूच्यते। 'समस्तस्य' भावाभावरूपस्य बाह्याभ्यन्तरस्य नीलसुखादेः या 'संपत्' संपत्तिः सिद्धिः तथात्वप्रकाशः, तस्याः सम्यक् 'अवाप्तिः' विमर्शरूढिः, सैव 'हेतुः' यस्यां तत्प्रत्यभिज्ञायाम्, तथा हि-स्फुटतरभासमाननीलसुखा-

---

अमुषितरत्नजातस्य वराटिकायां स्पृहा दृश्यते इति भावः। ननु तर्हि तत्प्राप्त्य-नन्तरमन्यलाभापेक्षा भवेदेवेत्याशङ्क्याह "लब्ध" इति। लब्धः सः—स्वात्मरूपः परमार्थो येन तस्य। अत्र ग्रन्थकृतः पद्यमुदाहरति "यदुक्तम्" इति। ननु किमुक्तमित्यपेक्षायामाह "भक्ति" इति। भक्तिः—परमेश्वररूपस्वात्मविषया न त्वन्यदेवताविषया। **एनया**—भक्त्या। नन्वयमर्थः समस्तेत्यादिपदात्कथं निर्गच्छतीत्यपेक्षायामाह "इत्येवम्" इति। **षष्ठीसमासेन**-समस्तसम्प-त्समवाप्तेः हेतुः तमित्येवंरूपेण, **प्रयोजनम्**—समस्तसम्पत्समवाप्तिरूपम्। एतेन दास्योपकारपदयोर्विशेषणत्वमस्य पदस्योक्तम्। नन्वस्य पदस्य किमयमेव समास उत अन्योपीत्यत्राह "बहुव्रीहिणा" इति। **उपायः**, प्रत्यभिज्ञाया इति शेषः। प्रत्यभिज्ञारूपान्यपदार्थप्रधानं बहुव्रीहिमेव विग्रहद्वारेण दर्शयति "समस्त" इति। तथात्वेन—नीलसुखादिभावेन, प्रकाशः—भानम्, प्रमेत्यर्थः। एतेनास्य पदस्य प्रत्यभिज्ञा-विशेषणत्वं कथितम्। ननु कथं नीलसुखादिप्रमा प्रत्यभिज्ञाकारणमित्यपे-क्षायामाह "तथा हि" इति। स्फुटतरं भासमानाः ये नीलसुखादयस्तेषां प्रमायाः अन्वेषणेन—किंमूला इति विचारणेन, बाह्यप्रमाविचारे हि क्रियमाणे तन्मूलभूतस्य परप्रमातुः प्राप्तिरयत्नं सिद्ध्यति घटान्वेषणेनेव मृद इति भावः। "आह" इति। उत्पलदेव इति शेषः। **अन्यत्र**—अन्यग्रंथे। ननु किमाहेत्य-

---

1. इति। एवम्—K. S. S.

दिप्रमान्वेषणद्वारेणैव पारमार्थिकप्रमातृलाभ इह उपदिश्यते । यदाह अन्यत्र:—

'इदमित्यस्य विच्छिन्नविमर्शस्य कृतार्थता ।
या स्वस्वरूपे विश्रान्तिर्विमर्शः सोऽहमित्ययम् ॥'

इति । तथा तत्रैव:—

'प्रकाशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः ।
उक्ता च सैव विश्रान्तिः सर्वापेक्षानिरोधतः ॥
स्वातन्त्र्यमथ कर्तृत्वं मुख्यमीश्वरतापि च ।'

इति । इयता च उपाये अतिदुर्घटत्वाशङ्का पराकृता । यदन्ते निरूपयिष्यति:—

---

त्राह ''इदम्'' इति । **सोऽहमिति विमर्शः**-पराहन्तापरामर्शः भवति । सः कः ? **येदमित्यस्य विच्छिन्नविमर्शस्य**—नीलसुखादिविषयायाः प्रमायाः । **कृतार्थता**—कृतकार्यतारूपा । **स्वस्वरूपे**—परप्रमातरि । **विश्रान्तिः**—लयः भवति । प्रमाता हि नीलसुखादि स्वात्मनि लयीकरोत्येव, अन्यथा तृप्त्ययोगात्, तृप्तिरेव च प्रमायाः प्रमातरि विश्रान्तिः, स एव च परप्रमातृलाभः । न चैतच्छ्रुत्वा नीलसुखादिविवशैरपि परमात्मप्राप्त्यभिमानः कार्यः, बाह्यान्तरभावविरक्तेष्वहमित्यात्मपरामर्शैकनिष्ठेषु देहस्थितिं तावत् अवश्यकर्तव्ये व्यवहारेपि ते आत्मनिष्ठा एव यथा स्युः इत्येवमर्थमस्योपदेशस्य स्थितत्वात् । नीलसुखादिविवशत्वाविवशत्वयोः स्वमन एव साक्षीकार्यम्, अन्यथा स्ववञ्चकत्वापत्तेरित्यलम् । अन्यदपि पद्यमत्रोदाहरति ''तथा'' इति । ''तथा'' शब्दः समुच्चये । **प्रकाशस्य**—नीलसुखादिप्रमायाः । **सर्वापेक्षानिरोधतः**, तृप्तिकृतायाः अपेक्षाभावरूपायाः सर्वत्रोपेक्षाया हेतोरित्यर्थः । विश्रान्तिः का ? ''**स्वातन्त्र्यम्**'' इत्यादि । नन्वियता किं संपन्नमित्यपेक्षायामाह ''**इयता**'' इति । **इयता**-समस्तसम्पत्समवाप्तेः प्रत्यभिज्ञाहेतुत्वकथनेन, **उपाये**-प्रत्यभिज्ञोपाये । नहि

'सुघट एष मार्गो नवः' (४ अ० ३ आ० १६ श्लो०)

इति। 'तस्य' महेश्वरस्य 'प्रत्यभिज्ञा' प्रतीपमात्माभिमुख्येन ज्ञानं प्रकाशः प्रत्यभिज्ञा। प्रतीपम् इति—स्वात्मावभासो हि न अननुभूतपूर्वोऽविच्छिन्नप्रकाशत्वात् तस्य, स तु तच्छक्त्यैव विच्छिन्न इव विकल्पित इव लक्ष्यते—इति वक्ष्यते। प्रत्यभिज्ञा च—भातभासमानरूपानुसंधानात्मिका,

नीलसुखादिप्रमान्वेषणं दुर्घटमिति भावः। अत्र ग्रन्थकृतोऽन्त्यं पद्यमुदाहरति "यत्" इति। अन्त प्रत्यभिज्ञाशास्त्रान्ते। **मार्गः**—उपायः पूर्वैरनुक्तः, तैरान्तरपरामर्शस्यैवोपायत्वकथनात्। "तत्प्रत्यभिज्ञा"इति व्याचष्टे "**तस्य**" इत्यादिना। व्यवहितत्वेपि मुख्यत्वेन महेश्वरस्य तच्छब्देन परामर्शः। "**प्रत्यभिज्ञा**" इति भागं व्याचष्टे "**प्रति**" इति। प्रतिशब्दस्य प्रतीपमित्यर्थः। अभिशब्दस्याऽऽभिमुख्यम्। ज्ञाशब्दस्य ज्ञानम्। तेन पूर्वं ज्ञातस्य मध्ये विस्मृतस्य पुनराभिमुख्येन ज्ञानं प्रत्यभिज्ञेति। यथा सोयं देवदत्त इति। ननु कथमज्ञातपूर्वे परमेश्वरे प्रत्यभिज्ञा युक्तेत्यपेक्षायां[1] "प्रतीपम्" इति पदस्य हेतुदानेन निराकरोति "**प्रतीपम्**" इति। अत्र हेतुमाह "**अविच्छिन्न**" इति। ननु तर्हि कथमज्ञत्वावस्थायां विच्छिन्न इव दृश्यते इत्यत्राह "**स तु**" इति। **सः**—आत्मप्रकाशः। **तच्छक्त्या**—तत्संबन्धिन्या मायाशक्त्या। तेनैव कृतस्य तदवच्छेदस्य सत्यतयाऽवच्छेदत्वं नास्तीति "इव" शब्दप्रयोगः। एवमवयवार्थमुक्त्वा ये द्वे[2] रूपे प्रत्यभिज्ञायां ते अनुकृत्य दर्शयति "**भात**" इति। पूर्वं भातमद्य भासमानं तयोर्यदनुसन्धानम्—एकीकरणम्, तदात्मा यस्याः तादृशी। प्रतिशब्दस्यार्थः अनुसन्धानम्, स एव प्रतीपमित्यस्यापीति पूर्वापरविरोधो न शंकनीयः। पूर्वमुक्तस्यावयवार्थस्य पुनः कथनमज्ञजनकृपाहेतुकं ज्ञेयम्। समुच्चयेन लोके शास्त्रे च सिद्धम् प्रत्यभिज्ञाव्यवहारं

1. आशंकां would have been a better text as it would fit in with "निराकरोति" which otherwise would remain without an object.
2. च ये द्वे रूपे प्रत्यभिज्ञामनुकृत्य—C.

**स एवायं चैत्र—इति प्रतिसंधानेन अभिमुखीभूते वस्तुनि ज्ञानम्; लोकेऽपि एतत्पुत्र एवंगुण एवंरूपक इत्येवं वा, अन्ततोऽपि सामान्यात्मना वा ज्ञातस्य पुनरभिमुखीभावावसरे प्रतिसंधिप्राणितमेव[1] ज्ञानं प्रत्यभिज्ञा—इति व्यवह्रियते; नृपं[2] प्रति प्रत्यभिज्ञापितोऽयम्—इत्यादौ। इहापि**

दर्शयति **"लोकेपि च"** इति। **अन्ततः**, विशेषेणेत्यर्थः। **"एतत्पुत्रः"** इत्यादिना ज्ञानस्य विशेषनिष्ठत्वं स्फुटीकरोति। **सामान्यात्मना वा**–कोप्ययमित्यनेन रूपेण। विकल्पद्वयेपि 'वा' शब्दः प्राधान्यद्योतनार्थः। **ज्ञातस्य**, पूर्वमित्यर्थः। **पुनः**, वर्तमानकाले इत्यर्थः। प्रतिसन्धिना–सोयमिति एकीकरणेन, प्राणितम्-सत्तायुक्तं कृतम्। ननु कुत्रायं व्यवहार इत्यत्राह **"नृपम्"** इति। **नृपं प्रति**–नृपे, **प्रत्यभिज्ञापितः**—निवेदितः, मन्त्रिभिरिति शेषः। अयं भावः। पूर्वं राज्ञा एतत्पुत्र एवंगुणक एवंरूपक इति विशेषेण वा, कोप्ययम् इति सामान्यात्मना वा ज्ञातः पुरुषो मध्ये विस्मृतः सन् पुना राज्ञः समीपं गतस्तेन कोयमिति पृष्टस्तत्र मन्त्रिणस्तस्य राज्ञस्तद्विषयां प्रत्यभिज्ञामुत्पादयन्ति सोयमिति। ततो राजा चोद्बुद्ध-संस्कारः स्वयमपि प्रत्यभिजानाति सोयमिति। तत्र प्रत्यभिज्ञातोऽयमिति व्यवहार इति। **'इत्यादि'** शब्देनान्येषां लौकिकव्यवहाराणां ग्रहणम्। दृष्टान्त-मुक्त्वा दार्ष्टान्तिकमाह **"इहापि"** इति। **'अपि'** शब्दः समुच्चये। **"अभिमुखीभूते"** इत्यत्र सर्वदेति शेषः। न हि मूर्च्छाकालेपि कस्यापि स्वात्मानभिमुखीभूतो युक्तः। तदौन्मुख्यं विना तदवस्थाग्रहणासंभवात्[3]। **तत्प्रतिसंधानेन**–तत्स्मृत्या एकीकरणेन। **ज्ञानम्**–प्रत्यभिज्ञा। तदेवानुकृत्य दर्शयति **"नूनम्"** इति। **नूनम्**—निश्चये, **स एवेश्वरोऽहम्**। दृष्टान्तदार्ष्टान्तिकयोस्त्वयं विशेषः। दृष्टान्ते सणिच्प्रयोगो व्यवहारो दर्शितः, जनसंबन्धिन्या राजनि प्रत्यभिज्ञाया लोकेऽत्यन्तमभीष्टत्वात्। दार्ष्टान्तिके तु तद्रहित एव प्रयोगः स्व-

1. प्रतिसंधितप्राणितम्–K. S. S.
2. नृपतिम्–K. S. S.
3. तदौन्मुख्यं विना तदवस्थाग्रहणासंभवेन तत्स्मृत्या एकीकरणेन ज्ञानं प्रत्यभिज्ञा–C

**प्रसिद्धपुराणसिद्धान्तागमानुमानादिविदितपूर्णशक्तिस्वभावे ईश्वरे सति स्वात्मन्यभिमुखीभूते तत्प्रतिसंधानेन ज्ञानम् उदेति, नूनं स एव ईश्वरोऽहम्-इति। तामेनाम् 'उपपादयामि' इति। उपपत्तिः संभवः, तां संभवन्तीं तत्समर्थाचरणेन प्रयोजकव्यापारेण संपादयामि। तथा हि--संभवति तावद् असौ, अविच्छिन्नप्रकाशत्वात्; निरोधकाभिमतमायाशक्तिसमपसारणमात्रमेव तु तत्र उपपादनम्। प्रत्यभिज्ञोपपत्तौ स्वपरविभागाभावे तदपेक्षं कर्त्रभिप्रायादि असंभाव्यम् इति परस्मैपदप्रयोगः। इत्थं च अत्र श्लोके**

---

संबन्धिन्याः स्वस्मिन् प्रत्यभिज्ञाया इष्टत्वात्, इति। लोकेपि सोयमिति प्रत्यभिज्ञात इति, शास्त्रेपि गुरुणा ईश्वरोहमिति प्रत्यभिज्ञापित इति व्यवहारः संभवत्येवेति नान्यथा भ्रमितव्यम्, केवलमिष्टत्वमात्रमाश्रित्य स्तोकं दृष्टान्तदार्ष्टान्तिकयोर्विशेषः कृत इत्यलम्। **"उपपादयामि"** इत्यस्य व्याख्यां करोति "**ताम्**" इति। उपपूर्वस्य णिजन्तस्य पदेर्लटि रूपम्। "**संभवः**" इति उपपूर्वस्य पदेर्वाच्योर्थ उक्तः। **ताम्**–प्रत्यभिज्ञाम्, स्वयमिति शेषः। णिचाऽर्थं कथयति "**तत्समर्थ**" इति। तस्मिन्–संभवे, समर्थाचरणम्, प्रेषणमिति यावत्, तेन। प्रयोजकः–अत्राहम् उत्पलदेवः, तस्य व्यापारेण-व्यापारभूतेन, **सम्पादयामि**, स्वव्यापारेण प्रेषणरूपेण तां संभवन्तीं संभावयामीत्यर्थः। अन्यथा शशशृङ्गस्यापि संभावनप्रसंगात्। ननु कथमसौ संभवतीत्यत्राह "**तथा हि**" इति। अविच्छिन्नप्रकाशत्वं चास्याः तद्रूपात्मविषयत्वेन ज्ञेयम्। विषयविषयिणोर्हि ऐक्यं स्वयमेव कथयिष्यति। ननु यद्यसौ संभवति तर्हि त्वं किंप्रवृत्त इत्यत्राह "**निरोधक**" इति। निरोधकाभिमता–आवृतिकारित्वेनाभिमता, समपसारणम्–दूरीकरणम्। न हि वातेनापसारितमेघावरणः सूर्यस्तदुत्पादित इति कथ्यते इति भावः। परस्मैपदप्रयोजनं कथयति "**प्रत्यभिज्ञा**" इति। **कर्त्रभिप्रायादि,** मुख्यकर्तुरिष्टत्वादिति। '**आदि**' शब्देनान्येषामात्मनेपदनिमित्तानां ग्रहणम्। **असंभाव्यम्**, सर्वत्रैक्यदर्शनात् संभावयितुमशक्यमित्यर्थः। "**परस्मैपद प्रयोगः**" इति,

"शेषात्कर्तरि"

योजना,–महेश्वरस्य दास्यं समस्तसंपल्लाभहेतुं कथंचित् आसाद्य, जनस्यापि कथंचित् तत्प्रत्यभिज्ञाम् आसाद्य प्रापय्य, उपकारं समस्तसंपल्लाभहेतुभूतं महेश्वरदास्यात्मकम् इच्छन्, तामेव समस्तसंपत्समवाप्तिहेतुकां तत्प्रत्यभिज्ञाम् उपपादयामि। 'आसाद्य' इति आवृत्तियोजने द्वौ णिचौ। इयति च व्याख्याने वृत्तिकृता भरो न कृतः, तात्पर्यव्याख्यानात्। यदुक्तम्:–

'संवृतसौत्रनिर्देशविवृतिमात्रव्यापारायाम्।'

इति। टीकाकारेणापि वृत्तिमात्रं व्याख्यातुमुद्यतेन नेदं स्पृष्टम्, अस्माकं तु सूत्रव्याख्यान एव उद्यम–इति विभज्य व्याख्यातम्। एवं सर्वत्र।

---

इति शेषशब्दाक्षिप्त इति भावः। इत्थं प्रतिपदं व्याख्यां कृत्वा योजनां कर्तुमारभते "**इत्थं च**" इति। नन्वासाद्येत्यस्य कथं प्रापय्येत्यस्य पर्यायत्वं युक्तमित्याशंक्याह "**आसाद्य**" इति। आवृत्त्या–आवर्तनेन, योजने–प्रत्यभिज्ञाख्यकर्मसम्बन्धे, इति भावस्तु।

"णेरनिटि"

इति[1] द्वयोरपि णिचोर्लुप्तत्वादिति हेतुरूपः। ननु वृत्त्यादिषु एतावान् प्रपंचो न दृश्यते इत्यत आह "**इयति**" इति। **भरः**–प्रयत्नः। संवृतः–गूढतात्पर्यः यः सौत्रनिर्देशः तस्य यत् विवृतिमात्रम्–तात्पर्यप्रकटनमात्रं तत्र व्यापारः यस्या वृत्तेः तादृश्याम्। "**न स्पृष्टम्**" इति, व्याख्यानस्य का कथेति भावः। तेषां बुद्धिरेव नात्र व्यापृतेति सूचितार्थः। "**एवं सर्वत्र**" इति, सर्वेष्वेव सूत्रेष्वयं न्याय इत्यर्थः। उपसंहारं करोति "**एवम्**" इति। **गुरुपर्वक्रमः संबन्धः**–गुरुपरंपरासंप्रदायरूपः संबन्धः। अनेनास्योपदेशस्य महागुरुप्रसिद्धत्वमेव मूलत्वेन सूचितम्। नचैतावताऽनुपादेयताशंका कार्या, महारहस्यत्वेन परमोपादेयत्वात्। महारहस्योपदेशा हि कर्णोपकर्णिकयैवागताः। परन्तु कैश्चित्कारुणिकैर्महारहस्यशास्त्रेषूपनिबद्धास्तथापि ते रहस्यत्वेनैव स्थिताः। तज्ज्ञानामपि तत्रानादृतिदर्शनात्। तदुक्तम्:–

"प्रसिद्धिरविगीता हि सत्या वागीश्वरी मता"

इति।

---

1. This "इति" seems rather unnecessary.

एवमनेन श्लोकेन अभिधेयम्, प्रयोजनम्, तत्प्रयोजनम्, तत्प्रयोजनम्, अधिकारिनिरूपणम्, गुरुपर्वक्रमः संबन्ध—इति दर्शितम् । तथा हि—समस्तसंपल्लक्षणो व्याख्यातो योऽर्थः पूर्वं पुण्यपापादौ संसारमूलकारणे हेतुः, स एव प्रत्यभिज्ञायते अनया—इति करणव्युत्पत्त्या उपायः इह लोकोत्तरमार्गं प्रति निर्णीतः, इति अतिदुर्घटकारित्वलक्षणमैश्वर्यम्

'मार्गो नव' ( ४ अ० ३ आ० १६ श्लो० )

---

अविगीतेति पदेनात्र सामान्यजनप्रसिद्धिर्निवारिता। अत एवात्र श्रुतिप्रमाणं प्रार्थयतां प्रौढमेव[1] । कृतश्चात्र पूर्वं भर इति न पुनरायस्यते । कथं दर्शितमित्यत आह **"तथा हि"** इति । आचार्येण कर्त्रा । **उपायः**—समस्तसंपत्समवाप्तिर्हेतुः यस्यां सा तामिति बहुव्रीहिणा उक्तः नीलसुखादिसिद्धिरूपः प्रत्यभिज्ञोपायः कर्म, **अभिधेयत्वेन**-अयमेवेहाभिधेय इत्येवंभावेन, **दर्शितः**-साक्षात्कथितः । कया कृत्वा ? **पूर्वम्**-संसार्यवस्थायाम् । **संसारमूलकारणे पुण्यपापादौ हेतुः**-हेतुभूतः। **समस्तसंपल्लक्षणः**-नीलसुखादिसर्वसंपत्स्वरूपः, **योऽर्थो व्याख्यातः**-समनन्तरं बहुव्रीहिमाश्रित्य प्रत्यभिज्ञोपायतया विवृतः, **स एव प्रत्यभिज्ञायते**-उपायभावेन जनविषये प्रत्यभिज्ञापदं प्राप्यते, **अनया**—अनेन शास्त्रेण, **इति करणव्युत्पत्त्या**-करणार्थघटनासाधनेन । प्रत्यभिज्ञायाः ह्येतावानेवातिशयः । **संसारमूलकारणे**-पुण्यपापादिहेतुभूते नीलसुखादौ एव ययोपायतां[2] तद्विषयप्रमान्वेषणद्वारेण जनः प्रत्यभिजानाति, यः पुण्यपापहेतुत्वेन मम पूर्वं प्रसिद्धः नीलसुखादिर्भावः स एव मोक्षसाधनमिति । अन्यथास्याः व्यर्थत्वमेव स्यात् । तदुक्तम् :—

---

1. Perhaps the word "अनादृतिः" is understood here to complete the sense.

2. यथोपयताम् —C.

**इति शास्त्रान्ते निरूपयिष्यमाणं सूचयता उपायः दर्शितः[1] अभिधेयत्वेन। अत एव**

**'तथा हि जडभूतानाम्' ( १ अ० १ आ० ४ श्लो० )**

**इत्युपक्रमपूर्वकं[2] श्लोकान्तरं भविष्यति। प्रयोजनं च प्रत्यभिज्ञोपायज्ञानम्, तस्य प्रयोजनम् प्रत्यभिज्ञानम्, तस्यापि प्रयोजनं समस्तसंपल्लक्षणपारमैश्व-**

---

"येनैव मुह्यति जडः प्राज्ञस्तरति तेनैव संसारात्"

इति। एतेन श्लोके तच्छब्देन समस्तसंपदिति भागस्यैव परामर्शः न महेश्वरस्येति दर्शितम्। आचार्येण कीदृशेन? **शास्त्रान्ते**-प्रत्यभिज्ञान्ते, **"मार्गो नव"** इत्यनेनार्यभागेन। **निरूपयिष्यमाणम् अतिदुर्घटकारित्वलक्षणम्**-नवोपायीभूतनीलसुखादिमोक्षहेतुकथनरूपदुःसंपाद्यवस्तुसंपादनरूपम्, स्वकीयमैश्वर्यम्, **सूचयता**-जनं प्रति लौकिकोपायस्याभिधेयत्वदर्शनेन सूचनाविषयतां नयता, कथम्? इति। इति किमिति? मया कर्त्रा **स एव**— उत्कर्षः, इह-अस्मिन् शास्त्रे, **लोकोत्तरमार्गं प्रति**-मोक्षं प्रति, **उपायो निर्णीतः**। स एव क इत्यपेक्षायामाह **"समस्त"** इत्यादि **"स एव"** इत्यन्तम्। **"हेतुः"** इत्यन्तम् पूर्ववदेव योजना। **"समस्त"** इत्यस्य भागस्य काकाक्षिवदुभयत्र करणत्वेन योजनम्, अन्यथा संबन्धायोग्यतापातात्। "**अत एव**" इति। **अतः**-यत उपायोऽभिधेयत्वेन दर्शितः ततः कारणात्, **उपक्रमपूर्वकम्**-"**तथा हि**" शब्दद्योत्यारंभपूर्वकम्। **श्लोकान्तरम्**-"प्रत्यभिज्ञोपदर्श्यते" इत्यन्तोपलक्षितश्लोकादन्यः श्लोकः। तत्रैव चोक्तोपायाभिधानोपक्रम इति भावः। **प्रत्यभिज्ञानम्**-जनविषये परमेश्वरस्य नीलसुखाद्युपायस्य च प्रत्यभिज्ञासंपादनम्। **"समस्तसंपत्"** इत्यस्य नीलसुखादिरूपमर्थं कृत्वा प्रथमप्रयोजनत्वं परमेश्वराद्वयप्रथनरूपमर्थं कृत्वा द्वितीयप्रयोजनत्वम्[3]।

---

1. प्रदर्शितः-K. S. S.
2. उपक्रमपूर्वम्-K. S. S.
3. तृतीयप्रयोजनत्वम्-C.

यैकरूपप्रथनम्, ततः परं नास्त्येव, तस्य सर्वपर्यन्तफलत्वादंशांशिकयापि। यदुक्तं मयैव स्तोत्रे :—

'फलं क्रियाणामथवा विधीनां पर्यन्ततस्त्वन्मयतैव देव।
फलेप्सवो ये पुनरत्र तेषां मूढा स्थितिः स्यादनवस्थयैव॥'

इति। एतद् वक्ष्यतिः—

'तदत्र निदधत्पदम्' (४ अ० ३ आ० १६ श्लो०)

इति पादद्वयेन। 'जनस्य' इत्यनेन अधिकारी दर्शितः। यत् निगमयिष्यतिः-

'अनिशमाविशन्' (४ अ० ३ आ० १६ श्लो०)

इति। 'कथंचित्' इत्यनेन गुरुपर्वक्रमः। वक्ष्यतिः —

'महागुरुभिरुच्यते स्म शिवदृष्टिशास्त्रे यथा।'
(४ अ० ३ आ० १६ श्लो०)

इति। एवं प्रत्यभिज्ञातव्यसमस्तवस्तुसंग्रहणेन[1] इदं वाक्यमुद्देशरूपं प्रतिज्ञापिण्डात्मकं च, मध्यग्रन्थस्तु हेत्वादिनिरूपकः,

---

एतदेव च परमप्रयोजनमिति दर्शयितुमाह "ततः परम्" इति। अंशांशिकयापि, लेशाल्लेशेनापीत्यर्थः। अत्र स्वकीयं पद्यमुदाहरति "यदुक्तम्" इति। पर्यन्ततः, आपातेऽन्यफलत्वेऽपि पर्यन्ते चित्तशोधनादिद्वारेण त्वन्मयतैव फलमित्यर्थः। अत्र-अस्यां त्वन्मयतायाम्। मूढा-लक्षणया मूढत्वद्योतिका, अथवा मूढा इति बहुवचनान्तम्, तथा च ये मूढा इति सम्बन्धः, तथा च "खर्परेशरि" इति विसर्गलोपः। सूत्रकारोप्येतद्वक्ष्यत्येवेत्याह "एतत्" इति। केन वक्ष्यतीत्यत आह "तदत्र" इति। गुरुपर्वक्रमः-अस्मादनेन प्राप्तमिति गुरुपरंपरासंप्रदायरूपः संबन्धः। उपसंहारं करोति 'एवम्' इति। प्रत्यभिज्ञातव्यम्—अस्मिन् शास्त्रे प्रत्यभिज्ञाविषयत्वेनाभिधेयम्। इदम्-व्याख्यातम्, वाक्यम् आद्यश्लोकरूपम्। उद्देशरूपम्, नाममात्रेण वस्तुसंकीर्तनात्। आदिशब्देनोदाहरणोपनययोर्ग्रहणम्। पञ्चावयवात्मकम्-प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपपञ्चांगस्वरूपम्। एतेनास्य शास्त्रस्य परार्थानु-

---

1. प्रतिज्ञातव्यसमस्तवस्तुसंग्रहणेन K. S. S.

'इति प्रकटितो मया' ( ४ अ० ३ आ० १६ श्लो० )

इति च अन्त्यश्लोको निगमनग्रन्थः–इत्येवं पञ्चावयवात्मकमिदं शास्त्रं परव्युत्पत्तिफलम् । नैयायिकक्रमस्यैव मायापदे पारमार्थिकत्वम्–इति ग्रन्थकाराभिप्रायः

'क्रियासंबन्धसामान्य' ( २ अ० २ आ० १ श्लो० )

इत्यादिषु उद्देशेषु प्रकटीभविष्यति–इति तावद् ग्रन्थस्य तात्पर्यम् । सुजनश्च लौकिकेश्वरपरिचित ईश्वरविषये जनम् अनुजीविगुण[1]संपन्नं प्रकाशयति, जनविषये च आभिगामिकादिगुणगणसंपन्नम् ईश्वरं पकाशयति–इति इयानर्थः सामान्येन षष्ठीसमासेन दर्शित· 'तस्य प्रत्यभिज्ञा' इति ।

---

मानत्वं साधितम् । ननु किमिति भेदनिष्ठतार्किकवाद आश्रित इत्यपेक्षायामाह **"नैय्यायिक"** इति । **मायापदे**–मायाधोवर्तिभेदोपहततत्त्वनिर्णये, यादृशो यक्षस्तादृशो बलिरिति न्यायानुसारेणेति भावः । ननु त्वया कथमेतत् ज्ञातमित्यत्राह **"क्रियासंबन्ध"** इति। उपसंहारं करोति **"इति"** इति। **इति**–अतः, **तावत्**, अत्र कस्यापि विप्रतिपत्तिर्नास्तीत्यर्थः। **ग्रन्थस्य**–प्रत्यभिज्ञाशास्त्राख्यस्याऽथवाऽऽदिश्लोकरूपस्य । **तात्पर्यम्**–व्यतिरिक्तं लोकसिद्धवस्तु। सामान्यषष्ठीसमासद्योतकं कथयति **"सुजनश्च"** इति। सुजनशब्देन मध्ये विरोधापादकदुर्जनव्यवच्छेदः । अनुजीविनः–भृत्यस्य ये गुणाः–सेवाकारित्वादयः, तैः संपन्नम्–परिपूरितम्। आभिगामिकादिगुणाः–समीपगमनयोग्यतादिरूपा गुणाः, तैः संपन्नम्। आदिशब्देन दातृत्वादिगुणग्रहणम्। समासमेव विग्रहद्वारेण दर्शयति **"तस्य प्रत्यभिज्ञा"** इति । **तस्य**–जनस्येश्वरविषये प्रत्यभिज्ञा तस्येश्वरस्य च जनविषये प्रत्यभिज्ञा इति विग्रहार्थः। ननु समस्तं प्रत्यभिज्ञाशास्त्रं श्रुत्वा जनस्य फललाभः स्यात्, अथवा प्रथमश्लोकश्रवणकाले एवेत्यत आह **"एतत्"** इति । एतस्य–आदिश्लोकस्य,

---

1. उपपन्नम्–K. S. S.

एतच्छ्लोकाकर्णनसमये च शिष्याणाम् एतदर्थसंक्रमणक्रमेण परमेश्वर-तादात्म्यमेव उपजायते तावत्। तथा हि-'जनस्य' इत्याकर्णनात् वयं ते जननमरणपीडिता अपर्युदस्तवृत्तयश्च, अस्माकमयम् उपकारम् इच्छन्, महेश्वरस्य दास्यम् आसाद्य, समस्तसंपत्समवाप्तिहेतुं तत्प्रत्यभिज्ञाम् उपपा-दयति;[1] ततश्च तत्प्रत्यभिज्ञामेवंभूतां वयं प्राप्ता एव, इतीत्थमेव हि अधिकारिणि शास्त्रार्थस्य बिम्बप्रतिबिम्बवत संक्रान्तिः लोड्लिङादीनां विषयीभवति[3] प्रथमपुरुषार्थे उत्तमपुरुषार्थे पर्यवस्यति, न तु ताटस्थ्येन;

योऽर्थः तस्य संक्रमणम्–सिद्धत्वेनान्तःस्फुरणम्, तस्य यः क्रमः तेन। **"शिष्याणाम्"** इत्यधिकारिग्रहणम्। अन्यथा कामनारहितानां शिष्याणामपि तदापत्तेः, फलकामनाविष्टा एव हि फलोपायश्रवणकाले एव तल्लाभभाज इव तिष्ठन्ति नान्ये। **"तावत्"** इति, कस्याप्यत्र विप्रतिपत्तिर्नास्ती-त्यर्थः। ननु कथमेतदित्यत्राह **"तथा हि"** इति। **तथा हि**–तथा दृश्यताम्, **अधिकारिणि**–फलकामनाविष्टे पुरुषविशेषे। **जनस्येत्याकर्णनात्**–मनोगतजननमरणपीडाद्योतकजनस्येतिशब्दश्रवणेन, **इतीत्थम्**–इत्यनेन प्रका-रेण। **शास्त्रार्थस्य**–वक्ष्यमाणस्य शास्त्राभिधेयस्य। **बिम्बप्रतिबिम्बवत्**–बिम्बप्रतिबिम्बन्यायेन। **संक्रान्तिः**–मनसि स्फूर्तिः स्यात्। कस्मिन् सति? **लोड्लिङादीनां विषयीभवति**–वाच्यतां गते। **प्रथमपुरुषार्थे**–नाम्नि। **उत्तमपुरुषार्थे**–अस्मदि। **पर्यवस्यति**–विश्राम्यति सति, **अयमुपपादयति**,

1. ततश्च प्रत्यभिज्ञाम्–K. S. S.
2. एव इति। इत्थम्–K. S. S.
3. 'इति' after "विषयीभवति", as found in K.S.S., was probably not a part of Bhāskara's text of the Vimarśinī as he does not explain it and as he is likely to have done so considering that it must have the meaning of 'because'
4. प्रथमपुरुषार्थः–K. S. S.

**अधिकार्यनधिकारिणोः प्रतिपत्तौ विशेषाभावप्रसङ्गात्। आरोग्यकामाः शिवां सेवन्तां सेवध्वम्[1]–इति वा वाक्यार्थस्य सेवामहै–इत्येवंरूपेण अधिकारिणि द्वितीया[2] कक्ष्या संक्रान्तौ, तृतीयकक्ष्यामेव[3] भाविकोटिपतितामपि पुरुषार्थ-**

---

वयं प्राप्ता इत्येवमित्यर्थः। आदिशब्देन लटो ग्रहणम्। परमार्थतः उपपादयामीति श्लोके स्थितत्वेन शिष्यबुद्धौ स्फुरितस्य लटः प्रथमपुरुषस्य तत्रास्थितत्वात् च्विप्रयोगः। **"प्रथमपुरुषार्थे"** इति मध्यमपुरुषस्याप्युपलक्षणम्, तस्यापि क्वचित्प्रयोगे उत्तमपुरुषार्थे पर्यवसानात् यथात्रैव लक्ष्यमाणे उदाहरणे, **"सेवध्वम् सेवामहै"** इति। इति- इत्थम्, कथम्? **ते वयं जननमरणपीडिताः**– अत एवापर्युदस्ता–पर्युदासविषयतां न नीता वृत्तिर्येषां तादृशाश्च, अधिकारित्वेन गृहीता इति यावत्, भवामः। **अस्माकमग्रम्**–आचार्यः, **उपकारमिच्छन् महेश्वरस्य दास्यभाग्माद्य** समस्तसंपत्समवाप्तेः हेतुम्–कारणभूताम्। **तत्प्रत्यभिज्ञाम्**–ईश्वरप्रत्यभिज्ञाम्। **उपपादयति**–संपादयति, **ततश्च**–तस्मात्कारणाच्च, **वयमेवंभूताम्**–समस्तसंपत्समवाप्तिहेतुभूताम्, **तत्प्रत्यभिज्ञां प्राप्ता एव**, उपायलाभस्यैवाधिकारिविषये उपेयलाभरूपत्वात्। **"न तु ताटस्थ्येन"** इति। तु- व्यतिरेके। अधिकारिणि ताटस्थ्येन नायमुपपादयति। "किमस्माकं तेन" इति तटस्थभावेन संक्रान्तिर्न भवति। अत्र हेतुमाह **"अधिकारि"** इति। अत्र दृष्टफलस्य हि आयुर्वेदस्य वाक्यं दृष्टान्तत्वेन कथयति **"आरोग्यकामाः"** इति। आरोग्यकामनायुक्ताः, **शिवाम्**–हरीतकीम् **"सेवन्ताम्"** इति लोटः प्रथमपुरुषप्रयोगयुक्तस्य, **"सेवध्वमिति वा"** मध्यमपुरुषप्रयोगयुक्तस्य, **वाक्यार्थस्य**–पदसमूहवाच्यस्य, **सेवामहै इत्येवंरूपेण**–उत्तमपुरुषे पर्यवसानरूपेण, **संक्रान्तौ द्वितीया कक्ष्या** भवति। वाक्यप्रयोगस्यैव प्रथमकक्ष्यत्वात्। कुत्र ? **अधिकारिणि**–आरोग्यकामनाविष्टे पुरुषविशेषे। कीदृशे ?

---

1. सेवेध्वम्–K. S. S.
2. द्वितीयकक्ष्यासंक्रान्तौ–K. S. S.
3. तृतीयकक्ष्यायामेव–K. S. S.

संपत्तिम् अकालकलितस्वरूपानुप्रवेशेन स्वात्मीकृताम् अभिमन्यमाने, तत एव विततसंवित्सुन्दरपरामर्शे पूर्णताभिमानप्रतिलम्भात्, अन्यस्य तु अनेवंरूपत्वेनैव अनधिकारिता[1] ताटस्थ्यप्राणा—इति । तदास्ताम् अवान्तरमेतत् अतिगहनं च—इति स्थितमेतत् । एतेन श्लोकेन[2] ईश्वरसांमुख्यं विनेयानां प्रयोजनादिप्रतिपादनं च क्रियते—इति ।

**तृतीयकक्ष्यामेव**-तत्सेवनरूपां तृतीयकक्ष्यामेव, **भाविकोटिपतिताम्**-चतुर्थकक्ष्यायां भाविनीम्, **पुरुषार्थसम्पत्तिम्**–आरोग्यसंपत्तिम्, **स्वात्मीकृताम्**–प्राप्ताम्, **अभिमन्यमाने**–वस्तुसौन्दर्यबलेन अभिमानविषयतां नयति । केन? अकालकलितम्-कालास्पृष्टम्, यत्स्वरूपम्-चिन्मात्राख्यं निजं स्वरूपम्, तत्रानुप्रवेशेन-स्वभावबलसिद्धेनावेशेन । पुनः कीदृशे ? पूर्णताभिमानस्य यः प्रतिलम्भः–प्राप्तिः, ततः, वितता–व्याप्तिं गता संविद् यस्य तादृशश्चासौ सुन्दरश्च परामर्शो यस्य तादृशे । अतिकामनाविष्टो हि काम्योपायप्राप्तिसमय एव तृप्तो दृश्यते इति न कोपि विरोधः। ननु य एवं न संपद्यते तस्य का वार्तेत्यत्राह "**अन्यस्य**" इति । **अनधिकारिता**–अधिकारिताया अभावः, **आस्ताम्**, अलमित्यर्थः। सिद्धमर्थं संगृह्य कथयति "**स्थितम्**" इति । **स्थितम्**, सिद्धमित्यर्थः। **विनेयानाम्**–शिष्याणाम्, "**इति**" शब्दः समाप्तौ आद्यश्लोकसमाप्तिं सूचयति ।

---

अहमामर्शमात्रेण जगतो यः स्वसूत्रणाम् ।
करोत्युपोद्घातमयीं हृदये तं स्तुमः शिवम् ॥

एवं शास्त्रसमाप्तिप्रयोजनं मंगलं संपाद्य प्रथमं स्थिते ज्ञानाधिकाराख्यप्रथमविमर्शे प्रथमाह्निकव्याख्यानिर्विघ्नसमाप्तये स्वेष्टदेवताभूतं श्रीशिवं स्तौति आह्निकतात्पर्यं च सूचयति "**अनन्त**" इति।

---

1. अधिकारिता–K. S. S.
2. Bhāskara considers the first verse to be a maṅgalaśloka and does not give it a number at all. The numbering, in his case, begins with the next śloka 'कर्तरि ज्ञातरि". The K. S. S. edition, however, counts from the maṅgalaśloka itself.

अनन्तभावसंभारभासने स्पन्दनं परम्।
उपोद्घातायते यस्य तं स्तुमः सर्वदा शिवम् ॥

ननु ईश्वरस्य सिद्धिरेव कर्तव्या। केयं सिद्धिः ? न तावत् उत्पत्तिः, नित्यत्वात्। नापि ईश्वरसिद्धिकारादयस्तस्योत्पत्तिं विदधते। ज्ञप्तिः सिद्धिरिति चेत्, अनवच्छिन्नप्रकाशस्य प्रमाणव्यापारोपाधेयप्रकाशात्मकसिद्ध्यनुपयोग एव। ननु अनवच्छिन्नस्तदीयः प्रकाश—इति कथमेतत्; नीलसुखादिप्रकाशे[1] हि तत्प्रकाशः कुतः ? तदप्रकाशेऽपि सुप्तमूर्छादौ नितराम्[2], स्वप्रकाशेऽपि वा ईश्वरे प्रमातॄणां किं वृत्तं येन तेषां प्रमाणव्यापारानुपयोग इत्याशङ्क्याह:—

अत्र टीका:–

वयं तं शिवम्–प्रकाशस्वभावं सर्वानन्दकारिणम् परमात्मानम्। स्तुमः–सर्वोत्कृष्टतया भावयामः। तं कम्? अनन्तः–अपरिच्छिन्नः, यो भावसम्भारः–स्वान्तर्निमग्नः पदार्थसमूहः तस्य भासने–अहमिति स्वान्तःप्रदेशात् इदमिति वहिरवभासने। **यस्य परं स्पन्दनम्**–स्वरूपात् किंचिच्चलनरूपः अहमिति सामान्यस्पन्दः। **उपोद्घातायते**–

"चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते"

इति। तथा उप–समीपे तदादावेव हन्यते–टंक्यते दीनारे इव राजनामात्र शास्त्राभिधेयम् इति उपोद्घातः, स इवाचरति, भाविनः पदार्थसमूहस्य सामान्यस्पन्दे एव प्रथमं स्थितत्वात्, अन्यथा निर्गमासंभवप्रसंगात्। अनेन चोपोद्घाताह्निकमिदमिति सूचितम्, उपोद्घातत्वं चास्य वक्ष्यमाणसर्वशास्त्रार्थद्योतकत्वेन ज्ञेयम्।

एवं मंगलं संपाद्य प्रथमश्लोकोपन्यासार्थमवतरणिकां करोति "**ननु**" इति।

1. घटसुखादिप्रकाशे–K. S. S.
2. नतराम्–K. S. S.

**कर्तरि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे।
अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः ॥ १॥**

अत्र टीकाः–

**"ननु"** इति पूर्वपक्षवादिप्रश्ने। **कर्तव्या**–अवश्यकरणीया। अन्यथा तद्विषयत्वेन प्रतिज्ञाताया: प्रत्यभिज्ञाया उपपादनासंभवादिति भावः। अत्र वादी विकल्पं करोति **"केयम्"** इति। किंशब्दः प्रश्नाक्षेपवाची। उत्पत्तिरूपांसिद्धिं नाशयितुमाह **"न तावत्"** इति। ननु तर्हि कथं वादिनः तदुत्पत्तिं कथयन्तीत्यत्राह **"नापि"** इति। पुनः शिष्यप्रश्नमाशंकते **"ज्ञप्तिः"** इति। अत्राप्युत्तरमाह **"अनवच्छिन्न"** इति। **अनवच्छिन्नप्रकाशस्य**-स्वप्रकाशत्वेन सततमवभासमानस्य नित्यप्रकाशरूपस्य च, अर्थादीश्वरस्य। प्रमाणव्यापारोपाधेयः–प्रमाणव्यापारसाध्यत्वेन तदवच्छेद्यो यः प्रकाशः–ज्ञप्तिः, तदात्मिका या सिद्धिः तस्या अनुपयोग एव भवति। न हि सूर्यस्य प्रकाशे दीपापेक्षा युक्तेति भावः। तदुक्तम्:–

उपायजालं न शिवं प्रकाशयेत्
घटेन किं भाति सहस्रदीधितिः।
विचारयन्नित्थमुदारदर्शनः
स्वयंप्रकाशं शिवमात्मवित्खलु॥

इति। तथाः–

अपरोक्षे भवत्तत्त्वे सर्वतः प्रकटे स्थिते।
"यैरुपायाः प्रतन्यन्ते नूनं त्वां न विदन्ति ते"

इति। अत्र पूर्वपक्षवादी **"ननु"** इति आक्षेपं करोति। **अनवच्छिन्न इति कथमेतत्**, तदीयप्रकाशस्यानवच्छिन्नप्रकाशत्वं न युज्यते इत्यर्थः। एतदेव समर्थयितुमाह **"नील"** इति। **कुतः**, न भवतीत्यर्थः। न हि नीलज्ञानमेवेश्वरज्ञानमिति भावः। तर्हि नीलाद्यप्रकाशे तत्प्रकाशोऽस्त्वित्यत्राह **"तत्"** इति। नितरां कुत इति योजना, अतिशयेन नास्तीत्यर्थः। अनवच्छिन्नप्रकाशत्वमभ्युपगम्यापि प्रमाणव्यापारानुपयोगं प्रत्याह **"स्वप्रकाशे"** इति। **प्रमातृणाम्**–ईश्वरप्रमातृणाम्, **किं वृत्तम्**– सम्पन्नम्। **स्वप्रकाशेऽपि**, अनवच्छिन्नप्रकाशत्वसाधकस्वप्रकाशत्वयुक्तेऽपीत्यर्थः। **इत्याशङ्क्य**–प्रश्नोत्तरपूर्विकां शंकां कृत्वा। **आह**, कथयतीत्यर्थः।

इह क ईश्वरे कीदृशे कीदृशेन प्रमाणेन अस्ति इति ज्ञानलक्षणां सिद्धिम्, नास्तीति ज्ञानलक्षणं वा निषेधं कुर्यात् ? प्रमाता इति चेत्, स एव कः ? देहादिर्जडः उत तदन्यो वा कश्चित् आत्मादिशब्दवाच्यः ? सोऽपि स्वप्रकाशस्वभावो वा न वा ? देहादिर्जडः इति चेत्, स एव स्वात्मनि असिद्धः परत्र कां सिद्धिं कुर्यात् ? आत्मापि अस्वप्रकाशो जड एव तत्तुल्ययोगक्षेमः । स्वप्रकाशस्वभावः इति चेत्, कीदृशेन स्वेन रूपेण भाति[1] ? यदि परिनिष्ठितसंविन्मात्ररूपेण, तदा संविदां भेदनम् , भेदितानां च अन्तरनु-

एवमवतरणिकां कृत्वा प्रथमं श्लोकमुपन्यस्य व्याचष्टे । **"कर्तरि"** इति ।

अत्र टीका :—

पद्यं भंग्या व्याख्यातुमारभते "इह" इति। इह—ईश्वराधीनसिद्धिके जगति। **कः**—तदन्तर्गतः को भावः, **कीदृशे**—किंगुणे ईश्वरे। सर्वत्रात्र किंशब्दः प्रश्नाक्षेपपरः। शिष्योत्तरं शंकते **"प्रमाता"** इति। **प्रमाता**—तार्किकादिः। सांख्यादीनां[2] लौकिकस्यात्रोपेक्षाविषयत्वात्। गुरुरत्र शिष्यं प्रति प्रश्नयति "**स एव**" इति । किंशब्दस्यार्थं विभज्य दर्शयति "**देहादि**" इति। आदिशब्देन बुद्ध्यादेर्ग्रहणम्। **तदन्यः**—देहादेरन्यः चिन्मात्ररूपः। आदिशब्देनान्येषां पर्यायाणां ग्रहणम्। शङ्कितस्य द्वितीयपक्षस्यापि द्वैविध्यं शंकते '**सोपि**" इति । **सोपि**—तदन्योपि। पक्षद्वयमध्यात् प्रथमं पक्षमनुवदति "**स एव**" इति। **स एव**—देहादिरेव, **असिद्धः**—बुद्धिप्रमात्रधीनसिद्धिकत्वेन सिद्धिरहितः, **परत्र**—स्वव्यतिरिक्ते ईश्वरे। द्वितीयपक्षस्य प्रथमं प्रकारं बहुवक्तव्यत्वेन तावदवस्थाप्य द्वितीयं प्रकारं प्रत्याह "**आत्मा**" इति। तस्य-देहादेः, तुल्यौ योगक्षेमौ, अप्राप्तस्य शभस्य लब्धिः

1. आभाति—K. S. S.
2. सांख्यादिषु लौकिकस्यात्रोपेक्षाविषयत्वात्—C. As it stands, the sentence is not very clear, but becomes quite intelligible when it is amended as printed.

**संधानेन अभेदनं न स्यात्; तेन स्वतन्त्रस्वप्रकाशात्मतया तावत् स भासते, तथाभासमानश्च कीदृशमीश्वरं साधयेत् निषेधेत् वा ? कर्तृज्ञातृस्वभावम् इति चेत्, ननु स प्रमातैव तथाभूतः इति कोऽन्यः सः ? ननु सर्वकर्तृत्व-सर्वज्ञत्वे प्रमातुर्न स्तः; न खलु सर्वशब्दार्थौ ज्ञातृकर्तृत्वयोः स्वरूपं भिनत्ति,**

योगः, तद्रक्षणं क्षेमः, तौ यस्य सः, तत्तुल्य इति यावत्। द्वितीयपक्षस्य स्थापितं प्रथमं प्रकारमपि स्वाभीष्टत्वेन विभज्य वक्तुमारभते **"स्वप्रकाश"** इति। स्वशब्दार्थव्याकरणं प्रति शिष्यं प्रेरयति **"कीदृशेन"** इति। **भाति**–स्वं प्रति स्फुरति। कीदृशेनेत्याक्षिप्तपक्षद्वयमध्यादेकं दूषयति **"यदि"** इति। परिनि–ष्ठितम्–शान्तत्वेन स्वरूपमात्रे स्थितं यत्संविन्मात्रं तदेव रूपं तेन। अत्र प्रति-समाधानं करोति **"तदा"** इति। **भेदनम्**–विषयग्रहणकाले विभागं कृत्वा-ऽन्योऽन्यतः भेदेन भासनम्, **अभेदनम्**–स्मृतिसमये एकीकरणम्। अन्यथा स्मृत्यसंभवप्रसंगात्। स्मर्ता हि स्मृतिकाले नीलादिविषयं पूर्वापरं ज्ञानद्वय-मेकविषयताकरणेनैकीकरोत्येव। तदेव स्मरणमुच्यते। एतेन वेदान्तमतनि-रासः कृतः। ते एव हि शान्तस्य परिनिष्ठितस्य ज्ञानमात्रस्यात्मत्वं कथयन्ति। [1] शान्तत्वे च भेदनाभेदने असंभवोपहते एव। यत्तु तेऽपि विषयोपरागं नेच्छन्ति तेन विज्ञानवादात् स्वस्य निष्कृतिमेव कुर्वन्ति न तूत्तमपदमाश्रयन्तीत्यलम् महात्मसु चोदनाभिः। द्वितीयं तु स्वाभीष्टसाधकत्वेनाश्रयति **"तेन"** इति। **तेन**–यतः पूर्वोक्तं न युज्यते तत इत्यर्थः। स्वतन्त्रः–संविदां भेदनाभेदनयोः समर्थः। **स**–आत्मा, **तथाभासमानश्च**–स्वतंत्रप्रकाशभावेन स्फुरंश्च। कीदृशमित्याक्षिप्त–पक्षद्वयमध्ये कर्तृत्वादिरहितस्येश्वरत्वमत्यन्तमयोग्यं ज्ञात्वा शिष्यार्थं द्वितीयमा-श्रित्येष्टापत्तिं साधयति **"कर्तृ"** इति। **"ननु"** इति प्रतिवचने। **तथाभूतः**–कर्तृज्ञातृस्वभावः, **इति**–अतः कारणात्। **सः** ईश्वरः। पुरःस्थितस्यात्मन एवेश्वरत्वे किमर्थमन्यमीश्वरं साधयाम इति भावः। अत्र शिष्यप्रश्नं शंकते **"ननु"** इति। तथा च प्रमातुरीश्वरत्वं न युक्तमिति प्रष्टुरभिप्रायः। अत्रोत्तरमाह **"न खलु"** इति।

1. शान्तत्वे च भेदने–C

**भेददर्शनेऽपि ईश्वरज्ञानचिकीर्षायत्नादेर्नित्यस्य विषयेण अकारणभूतेन अनाधेयातिशयत्वात्। प्रकाशमानतानयनमेव विषयत्वम् इति चेत्, अप्रकाशस्वभावस्य तथात्वमनुचितम्—इति वक्ष्यामः। प्रकाशमानस्वभावत्वे विषयोऽपि सर्वात्मना प्रकाश एव निमग्न इति प्रकाशः प्रकाशते—इत्येतावन्मात्रपरमार्थत्वे कः सर्वज्ञासर्वज्ञविभागः?, प्रमाणमपि एवं सिद्धत्वा-**

---

न हि कणभावचयभावयोरग्नेः स्वरूपभेद इत्युत्तरवाक्याभिप्रायः। नैयायिकदर्शनसिद्धं वस्तु हेतुत्वेनाश्रयति **"भेद"** इति। **अकारणभूतेन**–आलंबनकारकतया कारणभावमगतेन। **अनाधेयातिशयत्वात्**–आधातुमशक्यातिशयत्वात्, अन्यथा नित्यत्वासंभवादिति भावः। अत्र भेददर्शनमसहमानस्य शिष्यस्य चोद्यं शङ्कितम् **"प्रकाश"** इति। तथा चालम्बनकारकरूपविषयप्रतिपादनपरस्य भेददर्शनस्य हेतुत्वेनाश्रयणमयक्तमिति भावः। स्वयमेवाङ्गीकृतसिद्धान्तस्य शिष्यस्य शंकितं चोद्यमेव स्वाभीष्टसाधकत्वेनाश्रयति **"अप्रकाशमान"** इति। **तथात्वम्**–प्रकाशमानतायां नयनम्। न हि प्रयत्नशतैरपि अग्निरनग्नितां नेतुं शक्यते इति भावः। अवशिष्टं प्रकाशमानतास्वभावत्वमाश्रित्य स्वाभीष्टं साधयति **"प्रकाशमान"** इति। **प्रकाश एव निमग्नः**– ब्रुडितः, ततो भेदेनाभासात्। अग्निकण इवाग्निचये इति भावः। ननु निमज्जतु ततः किमित्यत्राह **"इति"** इति। **इति**–अतः कारणात्। **प्रकाशः**–विषयरूपः प्रकाशलेशः, **प्रकाशते**–महाप्रकाशः साक्षाद् भवति। **एतावन्मात्रपरमार्थत्वे** सति **कः सर्वज्ञासर्वज्ञविभागः**; अयं जीवः असर्वज्ञः अयमीश्वरः सर्वज्ञ इति विभागो न भवति। परमार्थतः सर्वत्रैकप्रकाशरूपत्वादिति भावः। तदुक्तम् :–

"नीलं पीतं सुखमिति प्रकाशः केवलः शिवः।
अमुष्मिन् परमाद्वैतप्रकाशात्मनि कोपरः॥"

इति। नन्वर्थाक्षिप्तस्य "कीदृशेन प्रमाणेन" इत्यस्य का वातत्यपेक्षायामाह **"प्रमाणम्"** इति। **एवम्**, प्रमातृवदित्यर्थः। **सिद्धत्वासिद्धत्वाभ्याम्**–जडत्वाज-

**सिद्धत्वाभ्यां पर्यनुयोज्यम्; एवं सिद्धिरपि । तस्मात् विषयाभिमतं वस्तु शरीरतया गृहीत्वा तावत् निर्भासमान आत्मैव प्रकाशते विच्छेदशून्यः, सुषुप्तमपि प्रति प्रकाशत एव, अन्यथा स्मृत्ययोगात्; प्रकाशस्य च नित्यत्वात् विच्छेदहेतोरभावेन, अन्यप्रमात्रपेक्षया च प्रकाशमानत्वात्, स्वपर-**

---

द्धत्वापादिताभ्याम्, **पर्यनुयोज्यम्**–पर्यनुयोगविषयीकार्यम् । तथा चास्यापि प्रमातृवत्प्रकाशरूपत्वे ईश्वरत्वमेवायातीति भावः । ननु पद्ये गृहीतायाः भेदेन स्फुरणशीलायाः सिद्धेः किं कुर्म इत्यत्राह "**एवम्**" इति । **सिद्धिरपि**, प्रमात्रादिवत्प्रकाशरूपैवेति भावः । "**अपि**" शब्दः उक्तसमुच्चयार्थः । तेनेहोक्तस्य निषेधस्य ग्रहणम्, तस्यापि प्रकाशरूपतानपायात् । विदधानस्य तु साक्षात्क्रियत्वेन कर्तृनिष्ठतायोगेन प्रकाशस्वभावमहेश्वररूपत्वमयत्नसिद्धं ज्ञात्वा ग्रहणं न कृतम् । "**विदधीत**" इति विपूर्वस्य धाञः लिङि रूपम् । फलितमाह "**तस्मात्**" इति । **विषयाभिमतम्**–विषयभावेन लौकिकैरभिमानेन गृहीतम् । **वस्तु**–नीलादिरूपं बाह्याभ्यन्तरं वस्तु । **शरीरतया**–स्वरूपत्वेन । एतेन नीलसुखादिप्रकाशेऽपि आत्मप्रकाशः फलितत्वेनोक्तः । नन्वेवं भवतु, सुषुप्तिमूर्छादौ स्फुटं स्थितस्य तदप्रकाशस्य किं कुर्मः इत्याह "**सुषुप्तमपि**" इति । **सुषुप्तमपि प्रति**, सुषुप्तविषयेऽपीत्यर्थः । अत्र हेतुत्रयमाह "**अन्यथा**" इति । **अन्यथा**–आत्मप्रकाशाभावे । तत उत्थितस्येति शेषः । सुषुप्तेरुत्थितो हि न किंचिदवेदिषमिति तामवस्थां स्मरत्येव, स्मरणं च गृहीते एव संभवति । ग्रहणं चात्मानं विना न सम्भवति । तस्य च स्वप्रकाशत्वमेवेति सुषुप्तिस्मृतिमंगीकुर्वतः आत्मप्रकाशनमप्यङ्गीकार्यमेव । न च मास्तु स्मृतिरिति वाच्यम्, स्वानुभवस्यापह्नवायोगात् । तदपह्नवकारिभ्यस्तु नम एवेत्यलम् । द्वितीयं हेतुमाह "**प्रकाशस्य**" इति । "**च:**" समुच्चये, **विच्छेदहेतोः**–देशकालादेर्विच्छेदकारणस्य, न हि प्रकाशसिद्धं देशकालादि तं विच्छिन्नीकर्तुं शक्तम् । तृतीयमप्याह "**अन्य**" इति । न हि अन्यसुषुप्तावन्यः सुप्तो भवति । तथा च तत्रात्मनः प्रकाशः स्फुट एवेति भावः । नन्वन्यप्रमातृषु प्रकाशेनेतरस्य किमायातमित्यपेक्षायामाह "**स्वपर**" इति । **तत्स्पृष्टस्य**–तेन प्रकाशेनोत्पादितस्य । तदुक्तम् :—

प्रमातृविभागस्य तत्सृष्टस्य मायीयत्वेन वक्ष्यमाणत्वात् । स चायं स्वतन्त्रः । स्वातन्त्र्यं च अस्य अभेदे भेदनम्, भेदिते च अन्तरनुसंधानेन अभेदनम्—इति बहुप्रकारं वक्ष्यामः । एतदेव[1] अस्य पारमेश्वर्यं मुख्यमानन्दमयं रूपम्—इति पूर्वमुपात्तं 'कर्तरि' इति । तदेव तु स्वातन्त्र्यं विभज्य वक्तुं 'ज्ञातरि' इति पश्चान्निर्दिष्टम् । ज्ञानपल्लव-

"परव्यवस्थापि परे यावन्नात्मीकृतः परः।
तावन्न शक्यते कर्तुं यतो बुद्धः परः परः ॥"

इति। न च तत्सृष्टस्तस्यैव विच्छेदं कर्तुं शक्तः किमुत मायीय इति भावः। भागेन प्रकाशमानेऽपि मेघान्निर्गते आकाशे लौकिकोऽप्याकाशः प्रकाशते इति व्यवहरत्येव। नन्वयं प्रमाता प्रकाशतां नाम पुनः स कीदृशोऽस्तीति न विद्म एवेत्यपेक्षायामाह **"स चायम्"** इति। ननु तस्य स्वातंत्र्यं किंरूपमस्तीत्यत्राह **"स्वातन्त्र्यं च"** इति । **अभेदे**—परमार्थतः नीलादिसंविदां सुखादिसंविदां च संवित्त्वेनैकत्वेऽपि, **भेदनम्**—भिन्नविषयतोपाधिना भेदेन भासनम् । **भेदिते च**—भेदेन भासिते संविज्ञाते च, **अभेदनम्**—स्मृतिसमये अलौकिके मोक्षसमये चैकविषयत्वेन भासनम्, स्वात्मनि विश्रान्तिदानेन लयीकरणं चेति यावत्। नानाविधाः संविदो हि अन्तरार्थतोऽपि तत्त्वादुत्थाय तत्रैव लयीभवन्ति । **वक्ष्यामः**, इहैवाग्रे इति शेषः। ननु तत्स्वातंत्र्यमत्र केन पदेनोक्तमित्यत्राह **'तदेव'** इति । आचार्येण **तदेव**-स्वातंत्र्यमेव, वक्तुमिति शेषः। **वक्तुम्**-"स्वतंत्रः कर्ता"इति सूत्रावष्टम्भेन कथयितुम्, **"कर्तरि" इति**-एतत्पदम्, **उपात्तम्**, कदा ? **प्रथमम्**. कुतः ? **'इति'**, इति कुतः ? **एतदेवास्य**—आत्मनः, **पारमेश्वर्यम्**—माहेश्वर्यरूपम् । **मुख्यम्**—प्रधानम्, **आनन्दमयम्**—तत्कार्यविश्वोद्भावनाऽन्यथानुपपत्त्याऽऽनन्दनिर्भरितम्, **रूपम्**—स्वरूपं भवतीति। मुख्यस्यैव हि प्रथममुपादानं युक्तमिति भावः। नन्वेतेनैव सर्वं गतमिति किमर्थमुक्तं 'ज्ञातरि' इतीत्यपेक्षायामाह **"तदेव तु"** इति । तत्—कर्तरीत्यनेन द्योतितम् । अत्र हेतुमाह **"ज्ञान"** इति। **ज्ञानपल्लवस्वभावा**—

1. तदेव–K. S. S.

**स्वभावैव हि क्रिया—इति वक्ष्यते । तेन सर्वक्रियास्वतन्त्रे सर्वशक्तिके—इति यावद् उक्तं भवेत् तावदेव 'कर्तरि ज्ञातरि' इति । इयमेव च संवित्स्वभावता । संविदिति तु उच्यमाना विकल्प्यत्वेन प्रमेयतां स्पृशन्तो सृष्टत्वात् न परमार्थसंवित्—इति वक्ष्यामः । कर्ता ज्ञाता च महेश्वर—इत्यभिधानेऽपि स एव प्रकार आपतेत्, इति यथा यथा प्रमेयभूमिकापादनन्यक्कारकलङ्कपरिहारः शक्यः तथा तथा यावद्गति यतितव्यम्, इति भूतविभक्त्या निर्देशः कृतः । उपदेशावसरे हि सर्वात्मना तावत् सा प्रमेयता अस्य परिहर्तुम् अशक्या । 'स्वात्मनि' इति,**

---

ज्ञानपुष्टीभावरूपा, बीजापेक्षया तत्पुष्टीभावरूपस्य तादृग्बीजसहस्रोत्पादकस्य द्रुमस्य स्फुटैव मुख्यतेति न कोपि विरोधः । फलितमाह "**तेन**" इति। **तेन**–तस्मात्, '**इति**', इत्यनेनेत्यर्थः । **यावत्**–यावत्परिमाणो गुणगणः। सप्तमीप्रयोगानामभिप्रायं वक्तुमाह "**इयमेव च**" इति। **इयम्**–स्वातंत्र्यरूपा। **विकल्प्यत्वेन**–शब्दस्पर्शगतेन विकल्पविषयत्वेन, **प्रमेयताम्**-शब्दप्रमाविषयताम्। **सृष्टत्वात्**–प्रमेयतास्पर्शेनागतात् सृज्यमानत्वात् । ननु तर्हि कर्तृत्वज्ञातृत्वरूपस्य स्वातंत्र्यस्य विधिरेव किं न कृतः, किमिति प्रमेयताऽऽपादकस्य सप्तम्युक्तस्यानुवादस्यैवाश्रयणं कृतमित्यपेक्षायामाह "**कर्ता च**" इति । **इत्यभिधानेपि**–एवं विधिभावेन कथनेपि। **स एव प्रकारः**–प्रमेयतास्पर्शरूपः, न हि शब्दस्पृष्टं केनाप्युपायेन प्रमेयतामतिवर्तितुं शक्तम्। यदुक्तम् :–

"यदभिन्नं स्वसंवित्तौ तत्परस्य यदोच्यते।
तदा भिन्नमिवाभाति शाब्दीं भूमिमुपागतम् ॥"

इति। तर्हि किं कार्यमित्यत्राह "**यथा**" इति। **यथा यथा**–येन येन प्रकारेण, प्रमेयभूमिका-प्रमेयावस्था, **यावद्गति**–यावदुपायम्, **यतितव्यम्**–स्वयमेव यत्नः कार्यः। यद्यप्यान्तरपरामर्शेऽप्येतन्न संभवति तथापि शिष्येषु नैर्विकल्प्यापादननिमित्तमेतदुक्तम्। **भूतविभक्त्या**–अनुदेशयोग्यसिद्धवस्तुवाचिन्या ङिप्रत्ययरूपया

स्वस्मिन् अनपायिरूपे स्वभावे इत्यनेन वैशेषिकाद्यभिमतजडात्मवाद-निरासः। 'आदिसिद्धे' इति, अविच्छिन्नप्रकाशे इत्यर्थः। 'महेश्वरे' इति, एतदेव माहेश्वर्यं यद् अनवच्छिन्नप्रकाशत्वेन ज्ञातृकर्तृत्वधारोपारोहः। 'अजडात्मा' इति, यस्य तु वैशेषिकादेर्जड आत्मा स सिद्धिं करोतु ईश्वर-विषयाम्; अन्यस्तु सांख्यादिर्निषेधम्; सांख्योऽपि विषयावभासनरूपं ज्ञानं बुद्धिधर्ममिच्छन् आत्मानं वस्तुतो जडमेव उपैति; न च जडात्मा स्वात्म-न्यपि दुर्लभप्रकाशस्वातन्त्र्यलेशः किंचित् साधयितुं निषेद्धुं वा प्रभविष्णुः पाषाण इव; न च अजडात्मनोऽपि एतद् उचितम्, तथा हि—स स्वात्मनि सिद्धिमित्थं कुर्यात्—यदि अस्य सोऽभिनवत्वेन भासमानः पूर्वं न भासते,

---

सप्तमीविभक्त्या। स एव हि वाक्यभेदानापादकत्वेन श्रेष्ठतरः। एकवाक्यत्वं हि पद्ये पुष्टतावहमिति भावः। **"स्वात्मनि"** इति पदं व्याचष्टे **"स्वात्मनि"** इति। **वैशेषिकाद्यभिमतः**, तथाऽसन्नपि तैः स्वाभिमानेन कथित इति भावः। आदिशब्देन नैयायिकादेर्ग्रहणम्। **"आदिसिद्धे"** इत्यस्यार्थं वक्तुमाह **"आदि"** इति। एतच्च समनन्तरमेव साधितम्। **"महेश्वर"** पदं व्याचष्टे **"महेश्वरे"** इति। **धारा**—परा काष्ठा। **"अजडात्मा"** इति पदस्याभिप्रायं वक्तुमाह **"अजडात्मा"** इति। तु—व्यतिरेके। अजडः आत्मा यस्य वैशेषिकादेः स अजडात्मेति विग्रहोऽनेन द्योतितः। **सांख्यः**—अनीश्वरः। आदिशब्देन बौद्धादेर्ग्रह-णम्। सांख्यः पुरुषस्य चेतनत्वं वदति इति जडात्मवादित्वमेव तस्य न सम्भवति का कथा ईश्वरनिषेधस्य, चेतनत्वांगीकारेणैव ईश्वरांगीकाराद् इत्यपेक्षायामाह **"सांख्योऽपि"** इति। ज्ञानस्य बुद्धिधर्मताकथनमात्रेणैव तस्य जडात्मवादित्वमायातं तेन च तत्सिद्ध ईश्वरांगीकारोऽपि शशविषाणतुल्य एवेति भावः। ननु ततोऽपि किमित्यत्राह **"न च"** इति। तर्ह्यजडात्मैवात्र प्रवृत्तिं करोतु इत्यत्राह **"न च"** इति। कथं नोचितमित्यत्राह **"तथा हि"** इति। **सः**—अजडात्मवादी, **अस्य**—अजडात्मवादिनः, **सः**—आत्मा। तर्हि न भासनमेवास्त्वित्यत्राह **"न भासनम्"**

न भासनं चेत् जडतैव । निषेधं च इत्थं विदध्यात्—यदि स न प्रकाशते तथा च जडः, न च जडस्य एतत् युक्तम् इत्युक्तम्, नापि अजडस्य; तस्मात् संवित्प्रकाश एव घटादिप्रकाशः, न त्वसौ स्वतन्त्रः कश्चित् वास्तवः; प्रकाश एव च आत्मा; तत् न तत्र कारकव्यापारवत् प्रमाणव्यापारोऽपि नित्यत्ववत् स्वप्रकाशत्वस्यापि तत्र भावात् ॥ १ ॥

ननु कारकव्यापारः प्रमाणव्यापारश्च यदि ईश्वरे न संभवति, तर्हि प्रत्यभिज्ञापयामि—इति यो व्यापार उक्तः स कतमो व्यापारः—इत्याशङ्क्याह :—

---

इति । अत्रोत्तरमाह "जडतैव" इति । तर्हि तन्मतेप्यात्मनो जडतैवापतेदिति भावः । सिद्धिं प्रत्याख्याय निषेधमपि प्रत्याचष्टे "निषेधं च" इति । ननु तेनापि किमित्यत्राह "तथा च" इति । तथा च, निषेधे कृतेपि सतीत्यर्थः । न हि आत्मभानरहितस्याजडत्वमिति भावः । ननु ततोपि किमित्यत्राह "न च" इति । उक्तम्, समनन्तरमिति शेषः । पूर्वं प्रत्याख्यातमपि अजडपक्षं व्यवहितमाशंक्य पुनः परामृशति "नाप्यजडस्य" इति । नाप्यजडस्यैतद्युक्तमिति व्यवहितेन सम्बन्धः । उपसंहारं करोति "तस्मात्" इति । असौ–घटादिप्रकाशः । स्वतंत्रः–प्रकाशव्यतिरेकेण सत्तायुक्तः । फलितमाह "तत्र" इति । कारकव्यापाराभावस्य सर्वान् प्रति सिद्धत्वेन दृष्टान्तत्वम् । स्वप्रकाशत्वस्य भावः प्रमाणव्यापाराभावे हेतुः ॥ १ ॥

अथ द्वितीयस्य श्लोकस्यावतरणिकां करोति "ननु" इति ।

अत्र टीका :–

उक्तः, "तत्प्रत्यभिज्ञामुपपादयामि" इत्येतेनेत्यर्थः । कतमः, कस्य सम्बन्धीत्यर्थः । एवमवतरणिकां कृत्वा द्वितीयश्लोकमुपन्यस्य व्याचष्टे । "किन्तु" इति ।

---

1. अनाभासनम्–K. S. S.
2. प्रकाशव्यतिरेके न सत्तायुक्तः–C. This sentence is a little doubtful. We amend it as printed.

**किंतु मोहवशादस्मिन्दृष्टेऽप्यनुपलक्षिते।**
**शक्त्याविष्करणेनेयं प्रत्यभिज्ञोपदर्श्यते ॥ २ ॥**

स ईश्वरस्वभाव आत्मा प्रकाशते तावत्, तत्र च अस्य स्वातन्त्र्यम् इति न केनचिद्वपुषा न प्रकाशते, तत्र अप्रकाशात्मनापि प्रकाशते प्रकाशात्मनापि, तत्रापि प्रकाशात्मनि सर्वथा प्रकाशात्मना प्रकाशो भागशो वा; भागशः प्रकाशने सर्वस्य व्यतिरेकेण अव्यतिरेकेण वा, कतिपयस्य व्यतिरेकेण अव्यतिरेकेण वा, उक्तप्रकारपूर्णतया वा; तदमी सप्त प्रकाराः। तत्र प्रथमः प्रकारो जडोल्लासः, अन्त्यः परमशिवात्मा, मध्यमा जीवा-

---

अत्र टीका :–

सूत्रे **"किन्तु"** शब्दः समनन्तरोक्तपक्षान्यपक्षद्योतनार्थः। **"मोह"** इत्यस्यार्थं विवृणोति **"सः"** इति। सः–कर्तृज्ञातृस्वभावः। **"तावत्"** इति। बालोपि नात्र विवदते इति भावः। **तत्र च**–प्रकाशकर्तृत्वे च। इति, स्वातंत्र्याद्धेतोरित्यर्थः। **न केनचिद्वपुषा**, सर्वभावेनेत्यर्थः। **न प्रकाशते**, अपि तु प्रकाशते इत्यर्थः। सर्वाणि ज्ञानानि तत्स्वरूपभूतान्येवेति भावः। सर्ववपुषा प्रकाशं विभज्य कथयति **"तत्र"** इति। तत्र, तत्र सतीत्यर्थः। **अप्रकाशात्मना**–वेद्यभावेन। **प्रकाशात्मना**–वेदकभावेन। तत्र प्रकाशात्मना प्रकाशत्वेन द्वितीयः। स एव भागशः सर्वस्य व्यतिरेकेण तृतीयः। अव्यतिरेकेण चतुर्थः। कतिपयस्य व्यतिरेकेण पंचमः। अव्यतिरेकेण षष्ठः, स एव प्रकाशात्मना प्रकाशः। उक्ता ये प्रकाराः–षट्प्रकाराः तैः परिपूर्णतया सप्तमः प्रकारः। सप्तमप्रकारस्य तृतीयप्रकारत्वेऽपि सर्वप्रकारागूरकत्वेन भागशः प्रकाशावान्तरभेदचतुष्कानन्तरं कथनं न विरोधावहम्। अन्यथा तूक्तप्रकारपरिपूर्णताकथनमयुक्तं स्यात्। एवं चाप्रकाशात्मना प्रकाशः प्रकाशात्मना प्रकाशः उक्त–प्रकारपरिपूर्णतया प्रकाशः इति भेदत्रयमेव फलति। प्रकाशात्मना प्रकाशस्य पञ्चधात्वेन प्रकारसप्तकसिद्धिः। ननु भवन्त्यमी प्रकाराः ततः किमित्यत्राह **"तत्र"** इति। तत्र, प्रकारसप्तकमध्ये इत्यर्थः। **प्रथमः**—अप्रकाशात्मना प्रकाशः।

**भासाः, सैव भगवतो माया विमोहिनी नाम शक्तिः, तद्वशात् प्रकाशात्मतया सततम् अवभासमानेऽपि आत्मनि भागेन अप्रकाशनवशाद् 'अनुपलक्षिते' सर्वथा हृदयंगमीभावमप्राप्ते अत एव पूर्णतावभासनसाध्याम् अर्थक्रियाम् अकुर्वति, तत्पूर्णतावभासनात्मकाभिमानविशेषसिद्धये 'प्रत्य-**

---

**जडोल्लास**, वेद्यजृंभणेत्यर्थः । तस्य स्वग्रहणेऽपि परापेक्षत्वादिति भावः । **अन्त्यः**—उक्तप्रकारपरिपूर्णतया प्रकाशात्मना प्रकाशः । **परमशिवात्मा**—सप्तत्रिंशरूपपरशिवरूपः । अन्तःकृततत्त्वषट्त्रिंशकस्यैव तत्त्वस्य परशिवत्वात् । **मध्यमाः**—सर्वात्मना प्रकाशादयः पञ्च । तत्र प्रथमतृतीयस्य[1] शिवता, शुद्धप्रकाशरूपत्वात् । जीवत्वं चास्य महापूर्णत्वाभावमात्रकृतमेव ज्ञेयम्, न भेददर्शित्वकृतम्, अन्येषां तु भेदभेदाभेददर्शित्वकृतम् । एतच्चात्र प्रमातृनिर्णये स्वयमेव स्फुटीभविष्यति । भवत्वेवं ततः किमित्यत्राह **"सैव"** इति । **सैव**— जीवाभासरूपैव । मायायाश्च शुद्धविद्यानन्तरं स्थितत्वेपि शिवपदं तावदुपर्यपि स्पर्श आगमेषूक्त एव । अन्यथा एकस्य परमशिवस्यैव परमार्थतोवस्थाने का तद्व्यतिरिक्ततत्त्वषट्त्रिंशत्कचर्चा स्यादित्यलम् । **तद्वशात्**—तस्याः मायायाः सामर्थ्यात् । **"दृष्टे"** इति पदं व्याचष्टे **"प्रकाश"** इति । न हि स्वात्मा कस्याप्यदृष्टः, यथातथाकल्पितस्य तददर्शनस्य परमार्थतः तद्दर्शनत्वानपायात् । अन्यथा मया न दृष्ट इति अस्मच्छब्दप्रयोगासंभवात् । वाच्यस्फूर्तिं विना वाचकप्रयोगायोगादिति भावः । **'अस्मिन्'** इति पदस्य व्याख्यां करोति, **"अस्मिन्"** इति । **भागेन**— वेद्यरूपेण स्वांशेनानन्दरूपेणांशेन वा । न हि मायावशो वेद्यं स्वात्मतया प्रकाशरूपमात्मानं वानन्दरूपतया गृह्णाति । एतेनाक्षिप्तं वस्तु कथयति **"अत एव"** इति । **अर्थक्रियाम्**— अतितृप्तिरूपाम् । **तस्य**—आत्मनः, पूर्णतावभासात्मकः—

---

1. "प्रथमतृतीय" seems to be a समाहारद्वन्द्व meaning 'the first and the third'. These refer to Śiva and Mantramaheśvara which constitute the first and the third प्रमातृs of the above-mentioned group of five.

भिज्ञा' व्याख्यातपूर्वा प्रदर्श्यते, कथम्? 'शक्तेः' ईश्वरनिष्ठत्वेन प्रसिद्धाया दृक्क्रियात्मिकायाः, 'आविष्करणेन' प्रदर्शनेन, अभिमानसाध्यार्थक्रियाणां तदभिमानसिद्ध्या विना असिद्धेः; तथा च दृष्टान्तं दर्शयतिः—

'तैस्तैरप्युपयाचितैः, (४ अ० ३ आ० १७ श्लो०)।

इति। एतदुक्तं भवति—न कारकव्यापारो भगवति, नापि ज्ञापकव्यापारोऽयम्, अपि तु मोहापसारणमात्रमेतत्, व्यवहारसाधनानां प्रमाणानां तावत्येव विश्रान्तेः। घटोऽयमग्रगः प्रत्यक्षत्वात्—इत्यनेन हि घटो न ज्ञाप्यते प्रत्यक्षेणैव प्रकाशमानत्वात्, अन्यथा पक्षे हेत्वसिद्धेः, केवलं मोहमात्रमपसार्यते। यश्चायं मोहस्तदपसारणं च यत्, तदुभयमपि भगवत एव विजृम्भामात्रम्, न तु अधिकं किंचित्—इत्युक्तं वक्ष्यते च ॥२॥

---

निजपूर्णतास्फुरणरूपः यः अभिमानविशेषः तस्य सिद्धये। परमार्थतस्तु सा सिद्धिः सर्वदैव सर्वेषामस्ति, अन्यथा तन्मलपरिमिताहंभावस्फुरणायोगात्। परन्तु परमेश्वरमायावशेन तदभिमान एव नास्ति गृहगतखातगुप्तनिधेः दरिद्रस्येव गृहस्थितनिध्यभिमानः। अतस्तन्मात्रमेव साध्यते इति भावः। **"इयम्"** इत्यस्य व्याख्या **"व्याख्यात"** इति। **कथम्,** केन करणेन इत्यर्थः। **प्रसिद्धायाः,** सर्वजनेष्विति शेषः। **दृक्क्रियात्मिकायाः**-ज्ञानक्रियारूपायाः, **आविष्करणेन**-प्रदर्शनेन, त्वयि अपि सास्तीत्येवंप्रकटीकरणेन, **'प्रदर्शनेन'** इति णिजन्तप्रयोगः, सूत्रे उक्तमपि हेतुं साधकतया उपादधाति **"अभिमान"** इति। नन्वेतेन किमुक्तं भवति इत्यत्राह **"एतत्"** इति। **तावत्येव**—मोहापसारणमात्रे एव, **अन्यथा**—भेदेन प्रकाशमानत्वाभावे। **पक्षे**—घटे, हेतोः—प्रत्यक्षत्वादित्यस्य। **मोहमात्रम्**—घटविषयः केवलो मोहः। ननु यदि मोहस्य तदपसारणस्य च सत्यत्वं तर्हि साधयितुमारब्धस्य महाद्वैतस्य तिलाञ्जलिरेवेत्यत्राह **"यश्चायम्"** इति। **विजृम्भामात्रम्**-शक्तिविलसितमात्रम्। **न तु** तद्व्यतिरिक्तं किंचिदिति भावः ॥२॥

**ननु परिदृश्यमाने भावराशौ किमीया शक्तिराविष्क्रियते कं च प्रति इति। जडानां तावत् न ज्ञानात्मिका शक्तिरस्ति, क्रियात्मिकापि स्वातन्त्र्यप्राणा स्वातन्त्र्यव्यपगमाद् असंभावनाभूमिरेव; तथा च रथो गच्छति--इत्यादौ उपचारं केचन प्रतिपन्नाः, न च जडान्प्रति व्यवहारसाधनम् उचितम्; अथ अजडजीवज्जनताधिकारेण उभयमपि, तर्हि सर्वस्य स्वात्मा महेश्वर—इति दूरतरं विप्रकर्षिता प्रत्याशा, तदेतद् आशङ्क्य निरूपयतिः—**

---

अत्र तृतीयश्लोकस्यावतरणिकां करोति "**ननु**" इति।

अत्र टीका :–

**भावराशौ**—जडाजडपदार्थमध्ये। **किमीया**–कस्य सम्बन्धिनी, त्वयेति शेषः। **कं च प्रति,** कं चोद्देश्यमुद्दिश्येत्यर्थः। स्वयमेव विभागं करोति "**जडानाम्**" इति। **तावत्**, प्रथममित्यर्थः। "**नास्ति**" इति, जडत्वं हि ज्ञानक्रियाशक्तिराहित्यमेवेति भावः। ननु तर्हि कथं रथो गच्छतीत्यादिव्यवहार इत्यत आह "**तथा च**" इति। **उपचारम्**– मञ्चाः क्रोशन्तीत्यादिवत् सादृश्यादिसम्बन्धनिमित्तां प्रयोजनपरां लक्षणाम्, **केचन**— तार्किकादयः। **प्रतिपन्नाः**—अंगीकृतवन्तः। शैवे नये परमार्थतः मुख्यत्वेनैव सर्वत्र ज्ञानक्रियायोगात् केचनेत्युक्तम्। न चोचितमिति सम्बन्धः। तेषां व्यवहारकर्तृत्वासम्भवादिति भावः। **उभयम्**– कथं वा शक्त्याविष्करणं व्यवहारसाधनं चाजडानां शक्तेरजडान् प्रत्याविष्करणरूपयुगलम्। अजडानामत्र शक्तेराविष्करणादिति भावः। **सर्वस्य**–जडाजडरूपस्य भाववृन्दस्य, **दूरतरं विप्रकर्षिता**-अतिदूराद् दूरतरं प्रापिता। **प्रत्याशा**—अनाशासने प्रवृत्ता आशा प्रत्याशा। चोदितं संकल्पयति "**तदेतत**" इति। **निरूपयति**— निर्णयविषयतां नयति। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य तद्व्याख्यां करोति। "**तथा हि**" इति।

**तथा हि जडभूतानां प्रतिष्ठा जीवदाश्रया।**
**ज्ञानं क्रिया च भूतानां जीवतां जीवनं मतम् ॥ ३ ॥**

'तथा हि' इति युक्त्युपक्रमं द्योतयति, दृश्यतां किल इत्यर्थः। 'तथा' इत्यनेन साध्यं सूच्यते, हिना हेतुरित्यन्ये, प्रकृतं साध्यं हेतुसिद्ध्यायत्तमुपक्रम्यते इत्यर्थः। तेन इति बुद्धिवर्तिना, तत एव[1] स्मर्यमाणेन ग्रन्थेन वर्णयिष्यमाणेन प्रकारेण यस्मात् सर्वमेतद् युक्तम् इति 'तथा हि' इति शब्दस्य वार्थः। इह तावत् भावराशिर्यथा विमृश्यते तथा अस्ति, अस्तित्वस्य प्रकाशं शरणीकुर्वतः प्रकाशप्राणितदेशीयं विमर्शम् आश्रित्य समुन्मे-

---

अत्र टीका:—

**"तथा हि"** इति पदस्य व्याख्यां करोति "तथा हि" इति। युक्तिः—शक्त्याविष्करणरूपः उपायः, तस्या उपक्रमः—आरम्भः, तम्, **द्योतयति**—सूचयति, निपातानामत्रैव शक्तत्वात्। अस्यैव संकेतितं वाच्यार्थमपि कथयति "**दृश्यताम्**" इति। **"तथा"** इत्यवयवस्य '**दृश्यताम्**" इति व्याख्या, **'हि'** इत्यस्य तु "**किल**" इति। अन्यमतमाह "तथा" इति। **प्रकृतं साध्यम्**—प्रत्यभिज्ञारूपं साधनीयं वस्तु। पक्षान्तरमाह "तेन" इति। **"तथा"** इत्यस्य "तेन" इति व्याख्या। **तत एव**-बुद्धिपरिवर्तित्वेनैव, बुद्धौ स्फुरत्त्वेनैव, **ग्रन्थेन**—प्रत्यभिज्ञारूपेण कारिकासन्दर्भेण, **"यस्मात्"** इति **'हि'** शब्दार्थः, **"सर्वम्"** इत्यादि शेषः। वाक्यार्थं वक्तुं प्रक्रियां तनोति "**इह**" इति। **इह**—भासमाने जगति। **विमृश्यते**—विकल्प्यते। **अस्ति**—सत्तां भजति। अत्र हेतुमाह '**अस्तित्वस्य**' इति। **अस्तित्वस्य**—नीलाश्रयायाः सत्तायाः। **शरणीकुर्वतः**-साधकत्वेनाश्रयतः। प्रकाशप्राणितः—अनुभूतसत्ताकः, देशः—नीलाख्यः प्रकाशविषयः, तस्य सम्बन्धिनम्, तद्विषयमिति यावत्। अथ प्रकाशस्य प्राणितदेशीयः—प्राणितकल्पः, तम्। प्रकाशो हि विमर्शसारः विमर्शोऽपि

---

1. अत एव—K. S. S

षात्, अविमृष्टं हि यदि वस्तु तन्न नीलं न पीतं न सत् न असदिति कुत इति पर्यनुयोगे किमुत्तरं स्यात्। तेन यद् यथा यावत् अबाधितं विमृश्यते तत् तथा तावत् अस्ति, तत एव देशकालाकारविततात्मानोऽपि द्रव्यक्रियासंबन्धादयः एकत्वेन परमार्थसन्त इति वक्ष्यते

'क्रियासंबन्धसामान्य' (२ अ० २ आ० १ श्लो०)

इत्यादिना, ततश्च विततमपि इदं विश्वं संक्षेपविमर्शदशाधिरोहे जडं

---

प्रकाशसार इति भावः। देशीयरः प्रयोगमाश्रित्य इयं व्याख्या[1]। **विमर्शम्**–नीलमिदमिति विकल्पम्, **आश्रित्य समुन्मेषात्**–स्फुरणात्। अन्यथा दृष्टनीले सद्योजातबालेपि तत्सत्ता समुन्मिषेदिति भावः। अत्र समर्थनं करोति **"अविमृष्टम्"** इति। **वस्तु**–सत्तायुक्तो नीलाख्यो भावः। **यद्यविमृष्टम्**–विकल्पविषयीकृतं न स्यात् तदा तद्वस्तु नीलमपि सत् नीलं न भवति। तथा सदपि सत् सत् न भवति। तथा **न पीतम्,** पीतमित्यनीलोपलक्षणम्, अनीलमपि न भवति। तथा सदपि न भवति। संक्षेपतः अनिर्वाच्यं भवतीति यावत्। **इति**–अतः। **कुतः इति पर्यनुयोगे**–कुत इदं नीलं कुत इदं सत् एवं केनचिदाक्षेपे क्रियमाणे, तद्वस्तु किम् उत्तरं यस्य तत्तादृशं स्यात्। यथा तदस्ति तदपि न वक्तुं शक्यते। यथा च नास्ति तदपि न वक्तुं शक्यते। केवलं मौनदशैवायातीति भावः। फलितमाह **"तेन"** इति। **तेन**, यतः सतः साधने विमर्शस्यैव सामर्थ्यं ततः कारणादित्यर्थः। यद् वक्ष्यतिः–

"सा स्फुरत्ता महासत्ता"

इति। यावत्तावच्छब्दाभ्यां बाधानन्तरं तत्तथा मा भवतु न तेन कापि हानिरिति द्योतितम्। एतदवष्टम्भेन वक्ष्यमाणसिद्धान्तमपि फलत्वेनाह **"तत एव"** इति। **एकत्वेन**–निर्विशेषविमर्शभावेन। केन वक्ष्यते इत्यपेक्षायामाह **"क्रिया"**

---

1. The commentary from "अथ प्रकाशस्य" to "इयं व्याख्या" is found in the MS. after "सत्तायुक्तो नीलाख्यो भावः" As it is another explanation of "प्राणितदेशीयम्", we have changed its position as printed.

**जीवच्च—इत्येतावता द्वयरूपेण अस्ति । तत्र जडा अपि विमृश्यमाना न स्वतन्त्रा भवन्ति, विमृश्यमानता हि तेषां न स्वशरीरविश्रान्तः कोऽपि धर्मः जडत्वाभावप्रसंगात्, मम नीलं भाति मया नीलं ज्ञायते इति । तेषाम् 'जडभूतानां' चिन्मयत्वेऽपि मायाख्यया ईश्वरशक्त्या जाड्यं प्रापितानाम्, 'जीवन्तं' प्रमातारमाश्रित्य 'प्रतिष्ठा' तत्प्रमात्राभिमुख्येन अवस्थानम्, ततो जडा नाम न पृथक् सन्ति । यथोक्तं ग्रन्थकृतैव: —**

---

इति । एतच्चैतस्याः कारिकायाः व्याख्यायां स्फुटीभविष्यतीति नायस्तम् । नन्वेतेन किं सम्पन्नमित्यत्राह **"ततश्च"** इति । तत्र—जडाजडयोर्मध्ये, **विमृश्यमानाः**—किंरूपा इति विकल्पविषयीकृताः, **स्वतन्त्राः**—स्वाधीनसत्ताकाः । कुतो नेत्यपेक्षायामाह **"विमृश्य"** इति । **विमृश्यमानता**—विमर्शविषयीभावः । स्वशरीरे—स्वस्वरूपे, विश्रान्तः—स्थितियुक्तः, विमर्शस्य प्रमातृधर्मत्वादिति भावः । तर्हि स धर्मः कुत्र विश्रान्तोऽस्तीति चेत् चेतनेष्विति ब्रूमः, एतदेव हि चेतनत्वं यद्विमर्शसामर्थ्यम्, तथा च वक्ष्यतिः—

"स्वभावमवभासस्य विमर्शं विदुरन्यथा ।"

इति । इति चेतसि कृत्वा हेतुमाह **"जडत्वाभाव"** इति । ननु तर्हि तेषां जडानां कथं सिद्धिरस्तीत्यपेक्षायामाह **"मम नीलम्"** इति । **"मम नीलं भाति मया नीलं ज्ञायते"** इति भानक्रियाकर्तृत्वेन ज्ञानक्रियाविषयत्वेन च । **तेषाम्**—जडानाम्, **चिन्मयत्वेपि**—परमार्थदृष्ट्याश्रयणेन चिद्रूपत्वेपि सति । **मायाख्यया ईश्वरशक्त्या**—स्वात्मविस्मृतिरूपया मायाशक्त्या, **जाड्यं प्रापितानाम्**—वेद्यभावमानीतानां सताम् । **जीवन्तं प्रमातारम्**—षष्टचन्ततृतीयान्तास्मच्छब्दवाच्यमजडं ग्राहकम् । **आश्रित्य**—स्वविषयीभूतभानज्ञानाख्यक्रियाद्वयाश्रयत्वेनापेक्ष्य, **"प्रतिष्ठा"** इत्यस्य व्याख्यां करोति **"तत्"** इति । तस्य प्रमातुः—षष्ठचन्ततृतीयान्तास्मच्छब्दवाच्यस्य प्रमातुः, आभिमुख्येन—सांमुख्येन, ग्राह्यतयेति यावत् । **अवस्थानम्**—स्वरूपलाभरूपावस्थितिः, भवति इति शेषः । फलितमाह "ततः" इति । **पृथक्**, ग्राहकमनपेक्ष्येत्यर्थः । **न सन्ति**—स्वरूपं न लभन्ते । अत्र ग्रन्थकृद्वाक्यमुदाहरति **"यथोक्तम्"** इति । तदुक्तमेवाह **'एवम्'** इति ।

**'एवमात्मन्यसत्कल्पाः प्रकाशस्यैव सन्त्यमी ।**

**जडाः प्रकाश एवैकः स्वात्मनः स्वपरात्मभिः ॥'**[1]

**इति । स एव हि स्वात्मना सन्**[2] **वक्तव्यो यस्य अन्यानुपहितं**[3] **रूपं चकास्ति; न च भारूपानुपहितं**[4] **जडं नाम किञ्चित्, तेन जडानां हि शक्तिरा-**

---

तत्रत्यं पूर्वं न्यायमपेक्ष्य एवंशब्दप्रयोगः। **एवमात्मनि**–मायया सिद्धे जडरूपे स्वस्मिन्। **असत्कल्पाः**–विमर्शासमर्थत्वेनासद्रूपाः। **अमी जडाः**–नीलादयः वेद्याः, **प्रकाशस्यैव सन्ति**–प्रकाशसम्बन्धिन एव भवन्ति। तद्ग्राह्यताकाले एव स्वरूपलाभात् परतंत्रा एव भवन्तीति यावत्। अतः **एकः**–केवलः, **प्रकाश एव स्वात्मनः अस्ति**–स्वप्रकाशत्वेन स्वग्रहणे परापेक्षाभावेन स्वसम्बन्धी भवति, स्वतंत्रो भवतीति यावत्। तदुक्तम् :–

"सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम्।
सामुद्रो हि तरंगः क्वचन समुद्रो न तारङ्गः ॥"

इति। कीदृशः ? **स्वपरात्मभिः**–वेदकभावेन वेद्यभावेन च, उपलक्षितः, सर्वभावेन स्वयमेव स्थितत्वात्। तदुक्तम् :–

"वेद्यं वेदकतामाप्तो वेदकः संविदात्मताम्।
संवित्त्वदात्मा चेत्सत्यं तदिदं त्वन्मयं जगत् ॥"

इति। उदाहृतेऽर्थे हेतुमाह **"स एव हि"** इति। **स्वात्मना सन्**–स्वसम्बन्धित्वेन स्थितः, **अन्यानुपहितम्**—ग्राहकतया स्थितेनान्येन न विच्छिन्नीकृतम्। ननु जडमपि तादृशमेव भवत्वित्यत आह **"न च"** इति। **भारूपानुपहितम्**–प्रकाशरूपेण ग्राहकेणानवच्छिन्नीकृतम्। फलितमाह **"तेन"** इति। **निरुत्थानम्**–उत्थानासहम्। एतेन पूर्वार्धं व्याख्यातम्।

---

1. K.S.S. gives only a part of the quotation. But Bhāskara's text of the Vimarśinī had it in full.
2. स्वात्मा सन्–K. S. S.
3. अन्यानुपाहितम्–K. S. S.
4. भारूपानुपाहितम्–K. S. S.

**विष्क्रियते जडान्प्रति – इत्येतत् तावत् निरुत्थानमेव । ये तु अन्ये जडेभ्यो जीवन्त – इति नाम प्रसिद्धाः तेषामपि शरीरप्राणपुर्यष्टकशून्याकाराः**

अत्र च किंचिद् वक्तव्यं वर्तते । परमार्थदृष्टिस्तावदास्ताम्, बाह्यदृष्टचापि जडानामपि ज्ञानक्रियारूपा चेतनता विद्यत एव । तथा हि । वृक्षास्तावत् स्फुटं तद्युक्ताः । अन्यथा तेषां स्वं प्रति रसाकर्षणं योग्यदेशे मूलप्रसारणमारोहणं च न युज्यते । ततः तदङ्गिभूता भूरपि चेतनैव, न हि निर्जीवस्याङ्गिनोऽङ्गं सजीवं दृष्टम् । जलस्य नियमेन निम्नदेशगमनरूपा क्रिया ज्ञानपूर्विकैवानुमीयते । तस्य ज्ञानाभावे तत्र गमनायोगात् । ज्ञानक्रिये एव च चेतनत्वमित्युक्तम् । तेजसश्च ऊर्ध्वज्वलनरूपा वायोश्च तिर्यग्गमनरूपस्वभावा क्रिया तादृश्येवेति तयोरपि स्फुटा चेतनता। अवशिष्टस्याकाशस्य च दहरत्वेन कर्णशष्कुल्यवच्छिन्नत्वेन च चेतनता स्फुटतमैवेति सर्वत्र ज्ञानमनुमीयत एव । यस्तु तां तत्रोपाधिकल्पितां मन्यते स जलादपीन्धनोपाधिना धूममुत्थापयतु किमस्माकं तेन सह चर्चाभिः । यत्तु तेऽन्योन्यं स्वविषयैः प्रमातृभिः सर्वत्र चित्राः कथा न कुर्वन्ति तत्स्वभावविजृम्भितम्, स्फुटं चेतनत्वेन स्थितस्यापि चक्षुषस्तददर्शनात् । वागिन्द्रिय एव तदवगमात् । तर्हि स्वभाववाद एवास्तु, भवतु सर्वत्र का नो हानिः । अन्तर्यामिशुद्धचित्तत्त्ववशेनेन्द्रियाणां सा शक्तिरस्तीति चेत्सत्यम्, सर्वत्र तद्वशेनैव सास्तीति सर्वं जडमेवोच्यताम्, अजडमेव वेति किं विशेषकल्पनाभिः । परमार्थविचारे तु,

"भावव्रात हठाज्जनस्य हृदयान्याक्रम्य यन्नर्तयन्
　　भङ्गीभिर्विविधाभिरात्महृदयं प्रच्छाद्य संक्रीडसे ।
यस्त्वामाह जडं[1] स्वयं सहृदयंमन्यत्वदुःशिक्षितो
　　मन्येऽमुष्य जडात्मता स्तुतिपदं त्वत्साम्यसंभावनात् ॥"

इति नीत्या सर्वेषां भावानां स्वरूपमपि चिन्मयमेवेति एकप्रकाशवाद एव सर्वत्र सुप्रतिष्ठितः । यस्तु ग्रन्थकृता विशेष उक्तः स स्फुटत्वास्फुटत्वकृतः, अथवा जडानामुपदेशानर्हत्वमपेक्ष्यैवमुक्तमिति न विरोध इत्यलम् ।

उत्तरार्धं व्याख्यातुं प्रक्रियामाह "**ये तु**" इति । शरीरम्–स्थूलशरीरम्, पुर्यष्टकम्, लक्षणया बुद्धिः । **जडा एव,** न तु चेतनाः, स्वग्रहणे परापेक्षत्वात्, न हि देहस्य

1. यस्त्वामाह जडं जडः T. A., Vol. I. 306. K. S. S.

तावत् जडा एव इति तेषामपि किमुच्यते । अत एव घटशरीर-[1] प्राणसुखतदभावरूपं सत् यल्लग्नं भाति तदेव जीवरूपभूतं सत्यम्; तस्य च आपाते यद्यपि बहुत्वं भाति तथापि तत् जडात्मकवेद्यशरीराद्युपाधेः । ततस्तत् अपारमार्थिकम् अन्योन्याश्रयात्, जीवा हि जडभेदात् भेदभा-

स्वग्राहकत्वम्, तदवच्छिन्नस्य चिदंशस्यैव तत्त्वात् । एवं प्राणादावपि ज्ञेयम् । **तेषामपि**—अजडसम्बन्धिनां शरीरादीनामपि । "**किमुच्यते**" इति, तेषामपि ज्ञानक्रिये न युक्ते इति भावः । तर्हि केषां शक्तिराविष्क्रियते इत्यपेक्षायामाह "**अत एव**" इति । तदभावः—घटादीनामभावः । **यल्लग्नम्**—यन्निष्ठं सत्, **भाति**—अस्तित्वेन स्फुरति । ननु यदि जीवस्य सत्यभूतत्वं तर्हि तस्य बहुत्वादैक्यस्यासम्भव इत्यत आह "**तस्य च**" इति । **आपाते**—विवेकात्पूर्वम् । **तत्**—बहुत्वभानम् । वेद्याः—नीलादयः, शरीरादयः—देहप्राणादयः, त एवोपाधिः तस्मात् । अयं जीवो बहुः, जीवत्वाद्, इति प्रयोगे स्फुटं वेद्याद्युपाधेः स्थितत्वम्, बहुत्वे साध्यभूते व्यापकत्वात् । यत्र हि वेद्यादित्वं तत्रावश्यं बहुत्वम्, जीवत्वे साधने चाव्यापकत्वात् ।

"एको देवः सर्वभूतेषु गूढः"

इति श्रुतेः गूढस्य जीवत्वात्,

"एतेन जीवेनानुप्रविश्य नामरूपे व्याकरणवाणि"

इति श्रुतेः[2] । तदुक्तम्:—

"साध्यव्यापकत्वे साधनाव्यापकतोपधिः"

इति । फलितमाह "**ततः**" इति । **ततः**, उपाधेर्हेतोरित्यर्थः । **अपारमार्थिकम्**—असत्यभूतम् । न ह्युपाधिसिद्धस्याऽऽकाशादिबहुत्वस्य भेद-वादेऽपि सत्यत्वमिति भावः । अत्रापि हेतुमाह "**अन्योन्याश्रयात्**" इति । तमेव दर्शयति '**जीवा हि**' इति । हि—यस्मात् । **जीवाः**—

1. एवं घटशरीरप्राण—K. S. S.
2. As two श्रुतिs are quoted, a च after the second 'श्रुतेः' seems necessary.

गिनः जडाश्च जीवभेदात्, एतद्देहोऽयम् एतद्वेद्योऽयम्—इति भेदम् उपेयुः, नीलपीतादिभावभेदास्तु[1] प्रमातृसंलग्नतया भेदभूमिमेव[2] परमधिरूढा[3] इति। किं तेन[4]। तदयं जीवानामभेद एव संपन्न इति जीवन् प्रमाता—इति जातम्। जीवनं च जीवनकर्तृत्वं तच्च ज्ञानक्रियात्मकम्, यो हि जानाति च करोति च स जीवति - इत्युच्यते। तदयं प्रमाता ज्ञानक्रियाशक्तियोगाद्

चेतनाः। **जडभेदात्**-देहादिभेदाद्धेतोः, **भेदभागिनः** सन्तः, एष देहो येषां ते, एते वेद्या येषां ते, **इति भेदमुपेयुः**-प्राप्नुवन्ति, अन्यथैकप्रकाश-मात्ररूपत्वात्, तथा **जडाश्च**—देहादयः, एतस्य देह एतस्य वेद्य इति भेदमुपेयुः। अन्यथान्यदेहादावन्यदेहादिभावापातात्। नन्वजडानामसत्यभूत-वेद्यदेहाद्युपाधिप्रभावागतं बहुत्वमसत्यमेव। भवतु, जडानां तु सत्यभूतजडतावशेना-गतं तत्सत्यमेव भवेदित्यत आह **"नील"** इति। **नीलपीतादिभावभेदाः**-नीलपीतादयो भावविशेषाः। आदिशब्देनान्येषां बाह्यानामान्तराणां सुखादीनां च ग्रहणम्। **भेदभूमिम्**— नीलादिभावेन भासनरूपां भेदकक्ष्याम्। **परम्**— केवलम्। **अधिरूढाः**- आश्रितवन्तः। **"इति"** शब्दः प्रमेयपरिसमाप्तौ। ननु तर्हीष्टस्यैक्यस्य सिद्धिर्नास्त्येवेत्यत्राह **"किं तेन"** इति। **तेन**—तेषां भेदभूम्यारो-हणेन। **किम्**, अस्मिन् समये जीवैक्यमात्रस्यैव प्रकृतत्वान्न तेन कापि हानिरित्यर्थः। जीवैक्ये सिद्धे जडैक्यस्यायत्नसिद्धत्वमेवेति भावः। फलितमाह **'तदयम्'** इति। **अयम्**— समनन्तरसाधितः। परमं फलितमाह **"इति"** इति। **इति**—अतः कारणात्। **जीवन्प्रमाता इति**—एको जीवनकर्ता प्रमातेति, **जातम्** सिद्धमित्यर्थः। नन्वेतेन प्रकृतयोः ज्ञानक्रिययोः किमायातमित्यत्राह **"जीवनम्"** इत्यादि। **तच्च**—जीवनक्रियाकर्तृत्वं च। कथमित्यपेक्षायामाह **'यो हि'** इति।

1. नीलपीतादिभेदस्तु–K. S. S.
2. प्रमातृसंलग्नतया अभेदभूमि–K S. S.
3. परमारूढ–K. S. S.
4. इति किं तेन–K. S. S.

**ईश्वर — इति व्यवहर्तव्यः पुराणागमादिप्रसिद्धेश्वरवत्; तदप्रसिद्धावपि सर्वविषयज्ञानक्रियाशक्तिमत्त्वस्वभावमेव ऐश्वर्यं तन्मात्रानुबन्धित्वादेव सिद्धम्; तदपि च कल्पितेश्वरे राजादौ तथा व्याप्तिग्रहणात्, यो यावति ज्ञाता कर्ता च स तावति ईश्वरो राजेव, अनीश्वरस्य ज्ञातृत्वकर्तृत्वे स्वभावविरुद्धे यतः, आत्मा च विश्वत्र ज्ञाता कर्ता च — इति सिद्धा प्रत्यभिज्ञा।**

---

अन्यथा मृतस्यापि जीवत्वं स्यादिति भावः। युक्त्या साधितमात्मन ईश्वरत्वमनुमानेनापि साधयति **"तत्"** इति। **तत्**, यतो जीवनं ज्ञानक्रियाकर्तृत्वरूपं ततः कारणादित्यर्थः। अयं प्रमातेति पक्षः, ईश्वर इति व्यवहर्तव्य इति साध्यम्, ज्ञानक्रियाशक्तियोगादिति हेतुः, पुराणागमादिप्रसिद्धेश्वरवद् इति उदाहरणम्। पुराणागमादिषु च सर्वज्ञः सर्वकर्ता चेश्वरः प्रसिद्ध इति आत्मापि तादृश एवानुमातव्य इति भावः। ननु येन पुराणागमादि न श्रुतं तस्य कथं तद्दृष्टान्तेनात्मविषय ईश्वरताबोधः सिद्ध्येदित्यत्राह **"तदप्रसिद्धौ"** इति। **तदप्रसिद्धावपि**—पुराणागमाद्युक्तेश्वराप्रसिद्धौ सत्यामपि। **ऐश्वर्यम्**—परमेश्वरभावः। तन्मात्रस्य-सामान्यज्ञानक्रियाशक्तिमात्रस्य, न तु सर्वविषयस्य, योनुबन्धः—योगः सोस्यास्तीति तन्मात्रानुबन्धी तस्य भावस्तत्त्वं तस्मात्। **सिद्धम्**—आत्मनि निष्पन्नं भवति। तथा चैवंप्रयोगः, अयमात्मा सर्वविषयज्ञानक्रियाशक्तिमान्, ज्ञानक्रियाशक्तियोगात्। अत्रान्वयव्यतिरेकव्याप्तिं स्वयमेव दर्शयितुमाह **"तदपि"** इति। **तदपि**—ज्ञानक्रियाशक्तियोगेनैश्वर्यसाधनमपि। **कल्पितेश्वरे**—कृत्रिमेश्वरे, लोभादिना लौकिकेश्वरतया संभाविते इति यावत्। **तथा व्याप्तिग्रहणात्**—ज्ञानक्रियायोगैश्वर्ययोर्व्याप्तिग्रहणात। तत्रान्वयव्याप्तिमनुकृत्याह **"यो यावति"** इति। व्यतिरेकव्याप्तिमर्थतो दर्शयति **'अनीश्वरस्य'** इति। यो यावतीश्वरो न भवति स तावति ज्ञाता कर्ता च न भवति, यथा सामान्यपुरुषः। उपनयं करोति **"आत्मा च"** इति। तस्माद् विश्वेश्वर इति निगमनं स्वयमेव कार्यं तस्यैवेष्टत्वात्। फलितमाह **"इति"** इति। **इति**—अतः कारणात्। **प्रत्यभिज्ञा**—नूनं स एवेश्वरोऽहमिति प्रत्यभिज्ञानम्। अत्र च ज्ञानक्रियायोगमात्रेणापि सर्व—

**ज्ञानक्रियाशक्ती एव स्वाभाविक्यौ अप्ररूढभेदोन्मेषे सदाशिवेश्वरौ, भेदस्य सामान्यतः प्ररोहे विद्याकले, विशेषतः प्ररोहे बुद्धिकर्मेन्द्रियगण**[1] **इव भवि·**

---

विषयज्ञानक्रियायोगरूपमैश्वर्यमग्निकणदृष्टान्तेन सिद्धचति । कणभावेन स्थितो-ऽप्यग्निर्महेन्धनचयदाहेपि समर्थ एव दृश्यते । ननु तर्हि राजन्यपि कथं न तन्मात्रेण सर्वविषयं तदनुमितिविषयतां नयाम इति चेत्सत्यम्, आत्मभावमपेक्ष्य तस्यापि पक्षतैव बाह्यदेहापेक्षया त्वसाविह दृष्टान्तीक्रियते । देहश्च सर्वेश्वरभावे न युक्ततां भजते स्फुटं नश्वरत्वात् । अत एव समनन्तरं कल्पितेश्वर इत्युक्तमित्य-लम् । श्रीपरमेश्वरस्थितयोः ज्ञानक्रियाशक्त्योरेव सदाशिवादिभावं कथयति **"ज्ञान"** इति । शिवशक्त्योरेवाद्वैतावस्थायाः परमेश्वरतेति न तयोर्ज्ञानक्रियारूपत्वकथनम् । **स्वाभाविक्यौ**—परमेश्वरस्वभावाव्यभिचारिण्यौ । अप्ररूढः—बीजभावेन स्थितत्वा-दंकुरभावमगतः, भेदोन्मेषः—इदंतारूपभेदस्फुरणं ययोः ते । अहंभावप्रधानत्वादिति भावः । तद्वक्ष्यतिः—

"निमेषोन्तः सदाशिवः"

इति । यद्यपीश्वरस्य भेदाभेदयोस्समधृततुलापुटन्यायेन समप्राधान्यम्, तथापि समीपवर्तित्वेन समकक्षतया सदाशिवेन सह ग्रहणम् । अथवा ज्ञानशक्तेः सदाशि-वत्वम् । क्रियाशक्तेरीश्वरत्वम् । एवं ज्ञानशक्तेर्विद्यात्वं क्रियायाः कलात्वम् । तथा ज्ञानस्य बुद्धीन्द्रियगणत्वं क्रियायाः कर्मेन्द्रियगणत्वमित्युत्तरत्रापि योज्यम् । सामान्यतः प्ररोहः सम्यगस्फुरणकृतो ज्ञेयः । विद्या—किंचिज्ज्ञत्वरूपाशुद्धविद्या । **"इव"** शब्दः परमार्थतो भवनासम्भवद्योतनपरः । अत एवासम्भवद्योतनपरस्य **लृटः** प्रयोगः । एतेन ज्ञानक्रियाशक्त्योरैश्वर्यरूपत्वं साधितम् । सदाशिवादेरेव परमेश्वरैश्वर्यरूपत्वात् । ननु सर्वत्र भाववृन्दे परमार्थतः चेतनव्यवहारयोग्यत्वेपि किमिति **"जीवताम्"** इत्यनेन प्रमातार एव चेतनतया निर्दिष्टा इत्याशंकाया-माह **"जडा"** इति । **च**ः तुशब्दार्थे । **अन्ये च**—अन्ये त्वित्यर्थः । **आपाते**, उपदेश-काले इत्यर्थः । न तु **संवित्**—सर्वभावेन स्थितः प्रकाशः, **आपाते भाति, इति**—

---

1. बुद्धिकर्मेन्द्रियगण इति भविष्यति—K. S. S.

ष्यति। जडा इति अजीवन्तः, अन्ये च जीवन्त – इत्यापाते तावद् भाति न तु संविदापाते भातीति[1] जीवतामिति जङ्गमा एव अमी इत्थं निर्दिष्टाः ॥३॥

ननु ज्ञानक्रिये एव कथं सिद्धे यत ऐश्वर्यव्यवहारः प्रसाध्यते[2] – इति शङ्कां शमयितुमाह:—

**तत्र ज्ञानं स्वतः सिद्धं क्रिया कायाश्रिता सती।**
**परैरप्युपलक्ष्येत तयान्यज्ज्ञानमूह्यते ॥ ४ ॥**

---

अतः कारणात्, **जीवतामिति**–जीवतामिति शब्देन, **जङ्गमा एव**–लक्षणया प्रमातार एव। **इत्थम्,** चेतनया ज्ञानक्रियारूपया, **निर्दिष्टाः**, कथिता इत्यर्थः ॥ ३ ॥

अथ चतुर्थश्लोकस्यावतरणिकां कर्तुमाह **"ननु"** इति।

अत्र टीका :–

*यतः*–याभ्यां ज्ञानक्रियाभ्यां तत्सिद्धेर्वा। **ऐश्वर्यव्यवहारः**, आत्मनीति शेषः। **प्रसाध्यते**, प्रकर्षेण साधनविषयतां नीयते इत्यर्थः। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"तत्र ज्ञानम्"** इति।

अत्र टीका :–

तत्र प्रथमं ज्ञानस्य स्वतःसिद्धत्वं साधयति **"अहम्"** इति। स्वप्रकाशः–प्रकाशविषयत्वेन तद्वत् स्वग्रहणे परानपेक्षः, योऽहंपरामर्शः–प्रकाशाश्रयः तद्विषयश्चाहमित्यान्तरो विमर्शः, तत्र परिनिष्ठितम्–भित्तौ इव चित्रं लग्नम्। **ज्ञानं नाम**–ज्ञानाख्यं वस्तु भवति, न तु पृथग् लब्धसत्ताकं भवति। तथा चाहं[3]–परामर्शवत् स्वप्रकाशत्वरूपं स्वतःसिद्धत्वमस्य स्फुटमेवेति भावः। कथम् ?

---

1. न तु संविदापाते भाति। जीवताम्–K. S. S.
2. प्रसाध्येत–K. S. S.
3. तथा चार्थपरामर्श–C.

**अहं जानामि, मया ज्ञातं ज्ञास्यते च—इत्येवं स्वप्रकाशाहंपरामर्श-[1] परिनिष्ठितमेव इदं ज्ञानं नाम, किं तत्र अन्यत् विचार्यते, तदप्रकाशे हि विश्वम् अन्धतमसं स्यात्, तदपि वा न स्यात्, बालोऽपि हि प्रकाश-विश्रान्तिमेव संवेदयते । तदुक्तम्ः—**

---

**अहं जानामि मया ज्ञातं ज्ञास्यते चेत्येवम्,** अनेन प्रकारेणेत्यर्थः । तत्राहमिति मयेति चाहंपरामर्शः । जानामीत्यादिना ज्ञानपरामर्शः । प्रयोगत्रयं कालत्रयव्याप्तिप्रदर्शनार्थम् । ननु किमत्रान्यदपि किंचिद् वक्तव्यमस्ति न वेत्यपेक्षायामाह **"किं तत्र"** इति । अहंविमर्शे निष्ठस्य ज्ञानस्य स्वतःसिद्धत्वे किमपि वक्तव्यं नावशिष्यते आबालप्रसिद्धत्वादिति भावः । पूर्वोक्तमेव समर्थयति **"तत्"** इति । तस्य—अहंविमर्शनिष्ठज्ञानस्य, अप्रकाशे । **विश्वम्**—सर्वो भाववर्गः, **अन्धतमसम्**—घनान्धकाररूपम्, ग्रहीतुमशक्यत्वादिति भावः । तदुक्तम् :—

"प्रकाशाख्यस्त्वमेवैकः सर्वेऽन्ये तमसा समाः"

इति । तथाः—

"संवित्तत्त्वं स्वप्रकाशमित्यस्मिन् किं नु युक्तिभिः ।
तदभावे भवेद्विश्वं जडत्वादप्रकाशकम्" ॥

इति च । अपवादान्तरमाह[2] **"तदपि"** इति । **तदपि**—अन्धतमसमपि, तमो-ग्रहणेऽपि च प्रकाशस्यैव सामर्थ्यात् । न हि नेत्रद्वारेणासंचरितप्रकाशः जात्यन्धः तमोपि ग्रहीतुं शक्नोति, अदर्शनमात्रस्यैव तद्गतत्वात् । अभावरूपस्यादर्शनस्य नीलरूपस्वरूपाद् द्रव्यस्वरूपाद्वा तमसो भिन्नत्वात् । आबालमेतत् सिद्धमित्याह **"बालोपि"** इति । **प्रकाशे**—अहंविमर्शस्य तन्निष्ठस्य ज्ञानस्य च सारतया स्थितेऽहंप्रकाशे, **विश्रान्तिं संवेदयते**—परेष्वनुभवविषयतां नयति । महच्चिदं

---

1. इत्येवं प्रकाशाहंपरामर्श—K. S. S.
2. चापदनन्तरमाह—C.

**'विज्ञातारमरे केन विजानीयात् ।'** (बृ० २।५।१९)

**इति। तन्निह्नवे हि कः प्रश्नः, किम् उत्तरं च स्यात्-इति। तत्र च**[1]

---

देहीति प्रयोगे हि ज्ञायते अनेनात्मा लब्ध इति। अन्यथा मह्यंशब्दप्रयोगायोगात्,[2] चौरादिको विदिः, तथा च चेततीत्यर्थः। अत्र श्रुतिमपि प्रमाणयति **"विज्ञातारम्"** इति। अहंपरामर्शनिष्ठज्ञानात्तहर्यप्रमाता[3] विज्ञाता, **अरे**–लोकाः प्रेक्षापूर्वकारिणः, **तं विज्ञातारम् केन**–किं फलमुद्दिश्य, **जानीयात्**, तस्यैव विश्रान्तिस्थानतया तद्विषयस्य[4] तद्व्यतिरिक्तस्य ज्ञानस्य व्यर्थत्वाज्ज्ञाने प्रवृत्तिमेव न कुर्यादित्यर्थः। तथा **केन**–प्रमाणेन **जानीयात्** तत एव लब्धसिद्धेः प्रमाणस्य तत्र व्यापारायोगात्। तदुक्तम् :–

"प्रमाणान्यपि वस्तूनां जीवितं यानि तन्वते।
तेषामपि परो जीवः स एव परमेश्वरः॥"

इति। तथा **केन**–रूपेण, **जानीयात्**, नीरूपस्य तस्य ज्ञानं न संभवत्येवेत्यर्थः। तदुक्तम् :–

"भ्रमो न लभ्यते यस्य भ्रान्तान्तःकरणैरपि।
दूरगैरपि यस्यान्तो दुर्गमस्तं स्तुमो मृडम्॥"

इति। "अन्तः" शब्दो ह्यत्र परमार्थतः स्वरूपवाच्येव। दुर्गमः, दुर्ज्ञेय इत्यर्थः। अथ च **केन**–केन रूपेण स्वयं स्थित्वा तं **जानीयात्**, स्वयमेव तद्रूपेण स्थितत्वान्न तं ज्ञातुं शक्नोति। व्यतिरिक्तस्यैव ज्ञानविषयत्वसंभवादित्यर्थः। तदुक्तम् :–

"आत्मा यदि भवेन्मेयस्तस्य माता भवेत्परः।
पर आत्मा तदानीं स्यात् स परो यस्तु मीयते॥"

---

1. तत्र जानामि–K. S. S.
2. The manuscript has "अभावान्ना" after "मह्यंशब्दप्रयोगायोगात्", but it seems quite unnecessary. Hence we have omitted it.
3. The text here seems a little obscure.
4. तद्विषयतद्व्यतिरिक्तस्य ज्ञानस्य—C.

**जानामि—इत्यन्त:संरम्भयोगोऽपि भाति, येन शुक्लादेर्गुणात् अत्यन्तजडात्**

इति। सर्वथा विज्ञातुर्विषयत्वं न युक्तमिति श्रुत्यभिप्रायः। तथा चान्यश्रुतयः—

"यस्यामतं तस्य मतं मतं यस्य न वेद सः।
[1]
विज्ञातमविजानतामविज्ञातं विजानताम्॥"

तथा :—

"यद्वेद्यं तज्जडम्"

इति। नन्वेतेनास्य निह्नव एवायात इत्यत्राह **"तन्निह्नवे"** इति। **तन्निह्नवे**—तस्य विज्ञातुरपलापे, प्रष्टुर्वक्तुश्च निह्नवापातादिति भावः। तदुक्तम् :—

"असन्स एव भवति असद् ब्रह्मेति वेद चेत्"

इति। एतदुक्तं भवति, विज्ञातुर्ग्रहणापेक्षैव नास्ति, स्वयमेव ग्रहीतृत्वेन स्थितत्वात्। न च तस्यैव तद्ग्रहणं युक्तमन्यत्वापत्तेः। न च तद्ग्रहणे सामग्र्यपि युज्यते सर्वस्याः तस्याः तत एव सिद्धेस्तं प्रत्युपायत्वायोगात्। नन्वहंविमर्शनिष्ठत्वद्वारेण ज्ञानस्य प्रकाशरूपं स्वतःसिद्धत्वं भवतु, क्रियाया अपिशब्दद्योतितं तत्कथं संभवेदित्यत्राह **"तत्र च"** इति। **तत्र च** सति **जानामीत्यन्तः**, उपलक्षणं चैतत्, तेन जानामीत्यादित्रयमध्ये, **संरंभयोगोऽपि भाति**[2]—कृत्प्रत्ययवाच्यस्पन्दयोगोऽपि, **भाति**—अहंपरामर्शनिष्ठज्ञानवत् स्वप्रकाशत्वेन स्फुरति। **येन**—भानेन[3], **जानामीतिवपुः**—प्रकृतिप्रत्ययविभागकल्पनया ज्ञानक्रियानिष्ठं जानामीति अस्य स्वरूपम्, **अत्यन्तजडात्**-स्वग्रहणे सर्वदा परापेक्षत्वाद् अतिशयेन जडात्। **शुक्लादेर्गुणात्**, तमपेक्ष्येति

1. तथा is found between "वेद सः" and "विज्ञातमविजानताम्" in the manuscript. As both these form one whole, its proper place seems to be just before "यद्वेद्यं तज्जडम्" as printed. Further, the usual form of this sruti is "अविज्ञातं विजानतां विज्ञातमविजानताम्" Kena. U. II. 3.
2. "भाति" here seems to have been quoted unnecessarily as it comes later, where it is explained.
3. येन भावेन—C.

**जानामि–इति–वपुः चित्स्वभावताम् अभ्येति; स च संरम्भो विमर्शः क्रियाशक्तिर्भवति[1]। यदुक्तम् अस्मत्परमेष्ठिश्रीसोमानन्दपादैः—**

**'घटादिग्रहकालेऽपि घटं जानाति सा क्रिया।'**

**इति। तेन आन्तरी[2] क्रियाशक्तिः ज्ञानवदेव स्वतः सिद्धा स्वप्रकाशा, सैव तु स्वशक्त्या प्राणपुर्यष्टकक्रमेण शरीरमपि संचरमाणा स्पन्दनरूपा सती**

---

यावत्। **चित्स्वभावताम्**–चिद्रूपताम्, **अभ्येति**–प्राप्नोति। आन्तरं प्रमातृरूपं ज्ञानं प्रति ग्राह्यत्वेपि बाह्यं शुक्लादिगुणं प्रति प्रमाणभावमासाद्य ग्राहकत्वात्। अभ्येतु ततः किमित्यपेक्षायामाह **"स च"** इति। **विमर्शः**–विषयावसायरूपः। **स च संरंभः**–जानामीत्यन्तर्गतस्तिङ्वाच्यः स्पन्दः, **क्रियाशक्तिर्भवति**, अन्यथा तिङ्प्रयोगायोगादिति भावः। अत्र शिवदृष्टिवाक्यमुदाहरति **"यदुक्तम्"** इति। घटादिग्रहणकालेऽपि यद् घटं जानातीति भवति सा क्रिया भवति। न तु करण-कालिकं करोमीत्येतदेव क्रिया भवतीत्यपिशब्दाभिप्रायः। सिद्धं स्वाभीष्टं प्रकटयति **"तेन"** इति। **आन्तरी**–प्रमाणरूपा न तु कायव्यापाररूपा। **ज्ञानवदेव**, अहं-परामर्शनिष्ठविज्ञातृरूपज्ञानवदित्यर्थः। ननु यदीयमेव क्रिया तर्हि काये यः स्पन्दः प्रत्यक्षं दृश्यते स किमस्तीत्यत्राह **"सैव"** इति। **सैव**–आन्तरी क्रियैव। **स्वशक्त्या**–निजसामर्थ्येन। **व्यापारात्मिका**–व्यापाररूपा। **मायापदे**–भेदे, **विषयः**–गोचरः। तदुक्तम्:–

"लोकेऽपि किल गच्छामीत्येवमन्तःस्फुरैव या।
सा देहं देशमक्षांश्चाप्याविशन्ती गतिक्रिया॥"

इति। एतेन द्वितीयवाक्यव्याख्या[3] सम्पन्ना। **"अपि"** शब्दः पूर्वकालीनस्वतःसिद्ध-

---

1. क्रियाशक्तिरुच्यते–K. S. S.
2. आन्तरीयक्रियाशक्तिः–K. S. S.
3. द्वितीयव्याख्या––C. The preceding lines are not a second explanation of the text, but the explanation of the second part of Utpala's kārikā as divided by भास्कर. The word "वाक्य" seems to have been left out.

**व्यापारात्मिका[1] मायापदेऽपि प्रमाणस्य प्रत्यक्षादेर्विषयः । सा च परशरीरादिसाहित्येन अवगता स्वं स्वभावं ज्ञानात्मकमवगमयति[2], न च ज्ञानम् इदन्तया भाति, इदन्ता हि अज्ञानत्वम्, न च अन्यद्वस्तु[3] अन्येन वपुषा भातं भातं भवेत्, तत् ज्ञानं भात्येव परम्, भाति च यत् तदेव अहमित्यस्य**

त्वसमुच्चयपरः । कार्यरूपायाः कायक्रियायाः कारणरूपं ज्ञानं प्रति हेतुत्वं तृतीयवाक्येनोक्तं कथयति **"सा च"** इति। **साहित्येन**–सहचरत्वेन, **स्वं स्वभावम्**–उपादानत्वेन[4] निजस्वरूपम्, **अवगमयति**–भवितव्यमिति तर्करीत्यावगमविषयतां नयति । एतेन ज्ञानस्य परसिद्धत्वमपि कथितम् । अत्र च घटान्मृदूहनं स्वयमेव दृष्टान्तीकार्यम्। नन्वेतेन स्वज्ञानस्य परज्ञानेन सह भेद एवायातस्तथा चाभीष्टस्याऽद्वैतस्य वन्ध्यातनयसोदर्यत्वमेव स्यादित्यत आह **"न च"** इति । **ज्ञानम्**–विज्ञातरूपम् । **इदन्तया**–इदमिति बुद्ध्या, **न च भाति**–अहंनिष्ठत्वेनैव तस्य समनन्तरं साधनात् । कुतो न भातीत्यत आह **"इदन्ता"** इति। **हि**–यस्मात्, **इदन्ता अज्ञानत्वम्** एव भवति ज्ञानव्यतिरिक्तेषु घटादिष्वेव तत्प्रयोगात् । नन्वत्र ज्ञानमिदन्तयैव भातमिति किं कुर्म इत्यत आह **"न च"** इति । **अन्यद्वस्तु अन्येन वपुषा**–स्वरूपेण, **भातं भातं** न भवेत्, अन्यथा रजतभावेन भातायाः शुक्तेरपि भातत्वप्रसंगात् । ननु तर्हि तज्ज्ञानम् अभातमेव भवत्वित्यत आह **"तत्"** इति। **तज्ज्ञानं परम्**–केवलम्, **भात्येव** । यथा तथा कल्पिते तदभानेपि साक्षितया

1. व्यापारव्याहारात्मिका–K. S. S.
2. ज्ञानात्मकं गमयति–K. S. S.
3. अन्यदन्येन वपुषा–K. S. S.
4. उपादानत्वेन निजस्वरूपम् । भूतमवगमयति–C. The word "भूतम्" cannot be connected with "अवगमयति" nor can it be a part of the explanation of "स्वं स्वभावम्" because of "ज्ञानात्मकम्" which follows "स्वं स्वभावम्" as a viśeṣaṇa. The full stop after "निजस्वरूपम्" and the word "भूतम्" both seem to be unnecessary.
5. अत्र च घटो मृदा नहनम्–C.

**वपुः इति परज्ञानमपि स्वात्मैव; परत्वं केवलम् उपाधेर्देहादेः, स चापि विचारितो यावत् न अन्य इति विश्वः प्रमातृवर्गः परमार्थत एकः प्रमाता स एव च अस्ति । तदुक्तम्[1]:—**

**'…प्रकाश एवास्ति स्वात्मनः स्वपरात्मभिः ।'**

**इति । ततश्च भगवान् सदाशिवो जानाति इत्यतः प्रभृति क्रिमिरपि**

---

स्थितत्वात् । अन्यथाऽभानासिद्धेः। ननु सदा भानेन तस्य किमायातम् इत्यत आह **"भाति च"** इति। यच्च भाति तत् **अहमित्यस्य**–अहंपदवाच्यस्य विज्ञातुः, **वपुः**–स्वरूपं भवति। **"इति"** इति। **इति**–अतः कारणात्। **परज्ञानमपि**–परकायक्रिय-यार्थादूहितं[2] परज्ञानमपि, **स्वात्मैव** भवति परस्मिन्सदा भानात्, एतद्विषय इदन्ताभान-स्यान्यथासिद्धत्वाच्च। ननु भासमानं परत्वं कुत्रापसारयाम इत्यत आह **"परत्वम्"** इति। आदिशब्देन प्राणादेर्ग्रहणम्। न हि घटद्वयान्तर्गतयोराकाशयोर्भिन्नत्वं युक्तमिति भावः। ननु तर्हि परत्वापादक उपाधिरेवापसार्य इत्यपेक्षायामाह **"स चापि"** इति। **"यावत्"** शब्दोऽवधारणे, **स च**–उपाधिश्च, **यावद्विचारितः** विचारित एव सन्। **अन्यः**–प्रकाशरूपप्रमातृव्यतिरिक्तो न भवति। न ह्याकाश आकाशस्योपाधित्वं युक्तम्, तद्व्यतिरिक्तस्य घटादेरव तद्दर्शनात्। फलितमाह **"इति"** इति। **इति**–अतः कारणात्, **विश्वः**-सर्वः, **प्रमातृवर्गः**-प्रमातृसमूहः, **परमार्थतः एकः प्रमाता** भवति। मध्ये स्थितस्योपाधेरपि तद्भावेन स्फुरणात्। **स एव च**–एकः प्रमाता एव। **अस्ति**–परमार्थःसन्भवति, प्रमातृभेदस्योपाधिकल्पितत्वेन परमार्थेनासत्त्वात्। यस्त्वाह एकप्रमातृवादे एकस्य सुखादिनाऽन्येषामपि कथं न तद्युक्तत्वं दृश्यते स देहात्मभ्रान्त्या ग्रस्त एव, यतो यत्र देहादेरपि असत्यत्वकल्पनं तत्र तत्सिद्धस्य सुखादेः कथैव का, भवतु वा सोपि, तस्यापि तत्त्वान्न कापि हानिरित्यलं भगवदनुग्रहमात्रप्राप्यवस्तुनि व्यर्थैर्वाग्जालैः। अत्र वृद्धसम्मतिमाह **"तदुक्तम्"** इति। इदं च गतार्थमिति न पुनरायस्तम्। एतेन सिद्धमर्थमाह **"ततश्च"** इति। फलतः सदाशिवक्रमिज्ञान-

---

1 यदुक्तम्–K. S. S.

2. परकायक्रिययार्थहितम्–C.

**जानाति — इत्यन्तम् एक एव प्रमाता इति फलतः सर्वज्ञत्वं प्रमातुः। एवं कर्तृत्वेऽपि वाच्यम्। यदुक्तम् अस्मत्परमेष्ठिभिः शिवदृष्टौ :—**

**घटा मदात्मना वेत्ति वेद्म्यहं च घटात्मना।**
**सदाशिवात्मना वेद्मि स वा वेत्ति मदात्मना॥**
**नानाभावैः स्वमात्मानं जानन्नास्ते स्वयं शिवः।'**

---

योरेकत्वसाधनेन मध्यगानामन्येषामपि ज्ञानानामेकत्वमेवायातम्, ज्ञानैक्ये च तद्रूपाणां प्रमातॄणामप्यैक्यमेव सिद्धम्, तथा चैकस्यैव सर्वज्ञत्वमायाति। **इति फलतः**— फलभावेन, न तु साक्षादित्यर्थः। तदुक्तम् :—

"यैव चिद् गगनाभोगभूषणे व्योम्नि भास्करे।
धराविवरकोशस्थे सैव चित्कीटकोटरे॥"

इति। एतेन लौकिकसर्वज्ञतानिरासः। ननु ज्ञातृत्वमेवं भवतु कर्तृत्वस्य का वार्तेत्यत्राह "**एवम्**" इति। कर्तृत्वपल्लवत्वादिति भावः। अत्र श्रीसोमानन्दवाक्यमुदाहरणत्वेनाह "**घटो मदात्मना**" इति। **घटः**—वेदनविषयभूतो घटः। **मदात्मना**—वेदकरूपस्य मम स्वरूपेण, **वेत्ति**—स्वविषयं वेदनं प्रति कर्तृत्वं भजति।

"यावन्न वेदका एते तावद्वेद्याः कथं प्रिये।"

इति नयेन वेदनेच्छाकाले मद्भावेन स्फुरणात्। **अहं च घटात्मना वेद्मि**— मद्भावासादनप्राप्तवेदकभावघटस्वरूपेण चाहं वेद्मि। ममापि घटग्रहणकाले घटभावासादनात्। अन्यथा ग्रहणासद्भावात्। तदुक्तम् :—

"व्यतिरिक्तस्य बुद्धत्वे सर्वं बुद्धं न किं भवेत्।"

इति। एवं विषयपरिमितप्रमात्रोरैक्यमुक्त्वा अपरिमितप्रमातृपरिमितप्रमात्रोरपि तत्कथयति "**सदाशिव**" इति। "**वा**" शब्दः चार्थे, सदाशिवज्ञानं ममैव ममापि ज्ञानं तस्यैवेत्यर्थः। न हि कणभावेन चयभावेन च स्थितस्याग्निद्वयस्य कदापि भेदो युक्तः, कणानामेव चयत्वादिति भावः। "**आदि**" शब्देनान्येषां तत्रत्यवाक्यानां

इत्यादि। 'ऊह्यते' इत्यनेन ज्ञानस्य प्रमेयत्वं न निर्वहति—इति दर्शयति, अन्यथा हि अनुमीयते—इति ब्रूयात्।

तदेवं येषां तार्किकप्रवादपांसुपातधूसरीभावो न वृत्तोऽस्मिन् संवेदनपथे, ते इयतैव आत्मानमीश्वरं विद्वांसो घटशरीरप्राणसुखतदभावान् तत्रैव निमज्जयन्त ईश्वरसमाविष्टा एव भवन्ति। ततोऽयम् उपोद्घातः। उप इति आत्मनः समीपे टङ्कवत् ईश्वरप्रत्यभिज्ञानलक्षण[1] उत्कर्षो हन्यते विश्राम्यते येन; एतावदेव च अस्य ग्रन्थस्य तात्पर्यम्—इति। ततोऽपि

---

ग्रहणम्। एवं स्वपरज्ञानयोरेकत्वं प्रसाध्य **"ऊह्यते"** इत्यस्याभिप्रायं वक्तुमाह **"ऊह्यते"** इति। अनुमानविषयस्य प्रमेयत्वं सर्वैरुच्यते न तर्कविषयस्येति भावः।

अस्याह्निकस्य मंगलश्लोकेन द्योतितम् उपोद्घातत्वं साधयितुमाह **'तत्"** इति। **तदेवं** सति, **न वृत्तः**—न संपन्नः, **संवेदनपथे**—ज्ञानमार्गे, **इयता**—उपोद्घातत्वेन स्थितेन श्लोकचतुष्केनैव। **तत्रैव**—ईश्वररूपे परमात्मन्येव। **निमज्जयन्तः**—अन्तर्भावयन्तः, तद्भावेनैव पश्यन्त इति यावत्। **ईश्वरसमाविष्टाः**—प्राप्तेश्वरप्रत्यभिज्ञाः। **"भवन्ति"** इत्यनेन समावेशस्य सिद्धत्वमेव कथयति, अन्यथा भवेयुरिति ब्रूयात्। नीलसुखादिविवशानामेतेनेश्वरसमावेशाभिमानो निरस्तः। न हि तेषु नीलसुखादिनिमज्जनं संभवति, निमज्जने हि प्राप्तेषु तेषु यथोचितं भोगः, अप्राप्तेषु त्ववहेलैव भवति। तत्र च स्वमन एव साक्षितया ग्राह्यम्, अन्यथा स्ववञ्चकत्वापत्तेरित्यलम्। एतेन सिद्धमर्थमाह **"ततः"** इति। **ततः**, यतः समस्तशास्त्राभिधेयः समावेशः एतेनैव सिद्धयति ततः कारणादित्यर्थः। अन्यदपि निर्वचनमुपोद्घातशब्दस्य करोति **"उप"** इति। टंकः—पाषाणदारणः, **ईश्वरप्रत्यभिज्ञानलक्षणः**—ईश्वरोहमिति प्रत्यभिज्ञारूपः। ननु कथमेतेनोपोद्घातत्वम् इत्यत आह **"एतावत्"** इति। **एतावदेव**—आत्मनि उत्कर्षविश्रामणमेव। अन्यदपि

---

1. ईश्वराभिज्ञानलक्षणः—K. S. S.

अयम् उपोद्घातः । उपांशु अवितत कृत्वा उदिति शास्त्रस्य ऊर्ध्व एव हन्यते अपसार्यते प्रमेयविषयो व्यामोहो येन—इति । गत्यर्थत्वाद्वा हन्तेर्ज्ञानमर्थः, ज्ञायते प्रमेयं येन इति । केचित्तु गतिं स्त्रियं गच्छति—इत्येतद्विषयमेव हन्त्यर्थमाहुः । एवं श्लोकचतुष्टयार्थभावनादार्ढ्यादेव लभ्यते परमशिवः । इति शिवम् ॥ ४ ॥

इति श्रीमदाचार्योत्पलदेवशिष्य—श्रीमदाचार्यलक्ष्मणगुप्तदत्तोपदेश-श्रीमदाचार्याभिनवगुप्तविरचितायां श्रीप्रत्यभिज्ञाविमर्शिन्यां ज्ञानाधिकारे उपोद्घातः ।

इति प्रथममाह्निकम् ॥ १ ॥

---

निर्वचनमाह **"उपांशु"** इति। **अविततम्**—स्तोकम्, संक्षेपेणेत्यर्थः । **प्रमेयविषयः**—प्रत्यभिज्ञाविषयः । "घात" इत्यवयवस्यान्यमप्यर्थमाह **"गत्यर्थत्वात्"** इति । गत्यर्थो ज्ञानार्थ इति नीतेरित्यर्थः । **प्रमेयम्**—स एवेश्वरोऽहमित्येवंरूपम् । केषांचिन्मतेन ज्ञानार्थसाधकं गमनार्थं प्रत्याख्यातुमाह **"केचित्तु"** इति । केचित्तु **गतिम्**—गमनरूपम् । इत्येष एव विषयः यस्य तादृशम् । **हन्त्यर्थमाहुः**—कथयन्ति । इत्येषः कः? **"स्त्रियं गच्छति"** इति । स्त्रियं गच्छतीति स्थाने एव स्त्रियं हन्तीति प्रयोज्यम् । नान्यत्र हिंसार्थवाचकत्वादिति तेषां भावः। फलितं सिद्धान्तमाह **"एवं श्लोकचतुष्टय"** इति । दार्ढ्यात्—अहर्निशं सेवनेन, विमर्शनेनेति यावत् । **लभ्यते**—प्रत्यभिज्ञाविषयतां नेतुं शक्यते। आदिश्लोकस्य मंगलप्रयोजन—परत्वमपेक्ष्य श्लोकचतुष्टयेत्युक्तम् । **परमशिवः**—स्वान्तःकृततत्त्वषट्त्रिंशत्कः सप्तत्रिंशः श्रीपरमेश्वरः। **"इति"** शब्दः समाप्तौ । **"शिव"** पदं मंगलवाचकं परतत्त्वसूचनपरं च । इति शिवम् ॥४॥

इति श्रीभास्करकण्ठविरचितायां श्रीप्रत्यभिज्ञासूत्रविमर्शिनीटीकायां श्री—भास्कर्याख्यायां ज्ञानाधिकारे प्रथममाह्निकं समाप्तम् ।

---

1. इत्येतद्विषयामेव—K. S. S.
2. इत्यवसायस्य—C.

# अथ द्वितीयमाह्निकम् ।

पूर्वपक्षतया येन विश्वमाभास्य भेदतः ।
अभेदोत्तरपक्षान्तं नीयते तं स्तुमः शिवम् ॥

## द्वितीयमाह्निकम्

ओम्[2] ! पूर्वपक्षमयद्वैतमद्वैतान्मध्यपक्षतः[3] ।
निष्क्रष्यान्ते परद्वैतपक्षवन्तं शिवं स्तुमः ॥

ओम् । अथ ज्ञानाधिकारे द्वितीयाह्निकव्याख्याया निर्विघ्नपरिसमाप्तिकामनया समस्ताह्निकाभिप्रायसूचकं मंगलश्लोकमुपनिबध्नाति **"पूर्वपक्ष"** इति ।

अत्र टीका :–

**येन**—उत्तरार्धे तच्छब्दोक्तेन श्रीपरमशिवेन । **विश्वम्**—षट्त्रिंशत्तत्वात्मकं जगत् । **पूर्वपक्षतया**—प्रतिसमाधेयपूर्वपक्षभावेन । **भेदतः आभास्य**— निजेच्छया भेदतः–इदन्ताग्रहणप्राणभेदेन, आभासविषयतां नीत्वा । अभेद एव–अहन्ताप्राणा एकता एव, उत्तरपक्षः–स्थापनीयः पक्षः, स एवान्तः–अवसानं तम्, **नीयते**–प्राप्यते । वयं **तं शिवं स्तुमः**–सर्वोत्क्रष्टतया भावयामः । एतेन परशिवक्रीडारूपत्वं जगत उक्तम्, क्रीडाविष्टाः स्वतन्त्रा हि किंचिद्वस्तुतः

1. पक्षान्तर्नीयते–K. S. S.
2. श्लोक–C. This word is always found in the manuscript at the beginning of an आह्निक without any विभक्ति ।
3. पूर्वपक्षमयाद्वैत–C. Considering that Bhāskara mostly expresses in his introductory verse the same idea as is found in that of अभिनव, the better reading seems to be "पूर्वपक्षमयद्वैत"

**इह यत् पमार्थरूपं तद् आशङ्क्यमानप्रतिपक्षप्रतिक्षेपेण निरूपयिष्यमाणं सुष्ठुतमां स्पष्टीकृतं भवति । यदाह भट्टनारायणः :—**

**'नमस्ते भवसंभ्रान्तभ्रान्तिमुद्भाव्य भिन्दते ।**
**ज्ञानानन्दं च निर्द्वन्द्वं देव वृत्वा विवृण्वते ॥'**

---

उत्पाद्य स्वयं नाशयन्ति । एतेन मंगलश्लोकेनेदमाह्निकं पूर्वपक्षरूपमित्यपि सूचितम् ।

एवं मंगलं संपाद्याह्निकतात्पर्यं समस्तव्यस्तत्वेन कथयन्नाह "इह" इति ।

अत्र टीका :–

**इह**–अस्मिन् शास्त्रमार्गे, **परमार्थरूपम्**–तात्पर्यविषयत्वेन परमाभिधेयरूपम् । आशंक्यमानाः–वादिभिः शंकितुमारब्धाः, न तु संभवसहाः, ये प्रतिपक्षाः–विरुद्धाः नाशकाः अपरमार्थभूताः प्रतिद्वन्द्विनः पक्षाः, तेषां यत् प्रतिक्षेपणम्–प्रतिसमाधानं तेन । अत्र वृद्धसंमतिमाह "**यदाह**" इति । **हे देव**–विश्वोद्भावनन्यक्काररूप–क्रीडाशील । **ते**–अस्मच्छब्दप्रयोगयोग्यत्वेऽपि भक्त्यतिशयास्वादेन भिन्नतया भावनेन युष्मच्छब्देन भाविताय भवते । **नमः**—अस्मत्कर्तृकः प्रह्वीभावोऽस्तु । कीदृशाय भवते ? भवे–रागद्वेषमये संसारे, ये संभ्रान्ताः–विस्मृतस्वात्मत्वेन देहादावात्मभ्रमयुक्ता ये जीवाः, तेषां भ्रान्तिम्–प्रोक्तरूपं भ्रमम्, तत् **उद्भाव्य**–प्रकटीकृत्य, **भिन्दते**–तीव्रतरशक्तिपातेन पुनर्विदारकाय, अत एव **ज्ञानानन्दम्**–आत्मप्रकाशरूपमानन्दम् । कीदृशम् ? **निर्द्वन्द्वम्**–विषयसुखरूपद्वन्द्वव्यतिरिक्तम् । **वृत्वा**–मायाशक्त्यावरणविषयतां नीत्वा, **विवृण्वते**–तदपसारणेन प्रकटीकुर्वते । एतेन मध्ये विस्मृतं वस्तु पुनः प्राप्तमतिशयेनानन्दकारि भवतीति भ्रान्त्युद्भावनमपि कृपाहेतुकमेवेति द्योतितम् । ननु ततः किमित्यत्राह "**तत्रेह**" इति । **तत्र**— पूर्वोक्ते वस्तुनि सति, अनात्मानीश्वरे–आत्माऽभावेश्वराभावौ, वदन्तीति तेषाम् । भ्रान्तिः–अनात्मानीश्वरताज्ञानरूपो विपर्यासः, **तदुद्भावनम्**, अन्यथा भ्रान्तिभेदनस्य निर्विषयत्वापातादिति भावः । एकादशकमेवाद्यन्ताभ्यामुपलक्षयति "**ननु**" इति ।

तत्रेह अनात्मानीश्वरवादिनां भ्रान्तिभेदनपूर्वकं परमार्थं विवरीष्यन् तदुद्भावनं तावत् एकादशभिः श्लोकैः करोति

'ननु स्वलक्षणाभासम् ........................... ।'

इत्यादिभिः

'.............................तेन कर्तापि कल्पितः ॥'

इत्यन्तैः । तत्र श्लोकद्वयेन आत्मनो ध्रुवस्य दृश्यानुपलब्ध्या अभाव उक्तः प्रत्यक्षात्मवादिनः प्रति । तत्र श्लोकत्रयेण स्मृत्यनुसंधानं संस्कारात् सिद्धम् इति अन्यथासिद्धत्वात् आत्मानुमानाय न पर्याप्तम्—इति प्रोक्तम् अनुमेयात्मवादिनः प्रति । तत्र श्लोकेन ज्ञानादिगुणैर्गुणिनि प्रतिपत्तिः—

---

सामस्त्येनोक्त्वा व्यस्तत्वेनापि कथयति "तत्र" इति । **तत्र**—एकादशमध्ये, **ध्रुवस्य**— नित्यस्य । "**दृश्य**" इति । दृश्यस्य-सत्त्वे द्रष्टुं योग्यस्य, या अनुपलब्धिः–अप्राप्तिः, तया प्रमाणभूतया, अनुपलब्धस्यापि पक्षस्य स्वरूपविप्रकर्षेणाभावसाधनं नोचितमिति "**दृश्य**" इत्युक्तम्, **प्रत्यक्षात्मवादिनः प्रति**—शैवान्[1] प्रति, त एव हि नित्यमात्मानं प्रत्यक्षं वदन्ति । स्मृतिरूपमनुसंधानं **स्मृत्यनुसंधानम्, अनुमेयात्मवादिनः**–तार्किकादीन्, **प्रति**। सप्तमाष्टमयोः कृत्यमाह "**एवम्**" इति। नवमस्य कृत्यमाह "तत" इति। **एकेन,** श्लोकेनेति पूर्वेण संबन्धः । "**इति**" शब्दः नवमश्लोककृत्यसमाप्तिपरः । "**वदता**" इत्यस्य पूर्वेण संबन्धः । एकादशस्य कृत्यमाह "**श्लोकेनैव**" इति । **तत्र**–स्थिरे आत्मनि । उपसंहारं करोति "**इति**" इति । **इति**, एवमित्यर्थः । ननु

---

1. वाद्वान्–C. This word is not clear, but it cannot be 'बौद्धान्' because the first two verses represent the बौद्ध view. We have taken it to be शैवान् because the ślokas in question are intended to refute the शैव view.

इति अनुमानं निरस्तम् । एवम् आत्मानं निराकृत्य, ततो ज्ञानक्रियाशक्ति-संबन्धरूपमैश्वर्यं निराकर्तुं ज्ञानस्य स्वरूपमेव व्यतिरिक्तं बाह्यन्तरमते, सांख्यमते च अयुज्यमानम्—इति निरूपितं श्लोकद्वयेन । तत एकेन क्रिया नाम न काचित् क्वचिदपि अस्ति—इति कथितम् । तत्र साधकं प्रतिक्षिप्य बाधकं च उपन्यस्यति । ततः संबन्धस्य श्लोकेन नास्तित्वं प्रतिपादितं प्रमाणाभावं वदता । श्लोकेनैव तत्र बाधकं प्रमाणमुक्त्वा, न आत्मा स्थिरो नापि ज्ञातृत्वकर्तृत्वलक्षणम् अस्य ऐश्वर्यम्—इति स्वपक्ष उपसंहृतः—इति पूर्वपक्षस्य पिण्डार्थः ।

---

सर्वमेतत् स्वयं स्फुटीभविष्यतीति किं प्रथमत एव प्रपंचः कृत इति चेत् शिष्यबुद्धि-समाधानार्थमिति ब्रूमः । ग्रन्थार्थव्याख्याकरणं प्रतिजानीते "**अथ**" इति । ग्रन्था-नाम्—कारिकासूत्ररूपाणाम्, अर्थः—अभिधेयम्, **व्याख्यायते**, विव्रियते इत्यर्थः ।

अथावतरणिकां विनैव प्रथमं द्वितीयं च श्लोकमुपन्यस्य व्याचष्टे । "**ननु**" इति ।

अत्र टीका :—

"**ननु**" शब्दस्य वाच्यमाह "**ननु**" इति । **आक्षेपे**— अभियोगे, न तु प्रश्ने तस्येहायुक्तत्वात् । तमेव प्रकटयति "**इह**" इति । **तावत्**—प्रथमम्, अयुक्तत्वे हेतु-माह "**स्थिरस्य**" इति । "**अपि**" शब्दः समुच्चये, आत्मन इति शेषः । **अप्रकाश-नात्**—प्रकाशनाभावात् । एतदेव समर्थयितुमाह "**तथा हि**" इति । **तथा**, दृश्यतां किलेत्यर्थः । **घटप्रकाशः**—घटविषयं निर्विकल्पज्ञानम् । **विकल्पः**—सविकल्पज्ञानम् । **प्रत्यभिज्ञा**—सोयमित्युभयजं ज्ञानम् । **स्मृतिः**— स इति संस्कारजं ज्ञानम् । **उत्प्रेक्षा**—भवितव्यमिति तर्कज्ञानम् । "**आदि**" शब्देन इदं वा इदं वा इति संशयज्ञानं गृह्यते । **प्रकाशन्ते**—स्वप्रकाशतया स्फुरन्ति । एकघटविषयत्वेऽपि कल्पितं भेदमपेक्ष्य "**भिन्नविषयाणि**" इत्युक्तम् । "**तत्र**" इति, **तत्र**—ज्ञानषट्कमध्ये । **नीलस्य प्रकाशः स्वलक्षणाभासं ज्ञानम्**, सूत्रोक्तमिति शेषः, भवतीति संबन्धः ।

अथ ग्रन्थार्थो व्याख्यायते।[1]

**ननु स्वलक्षणाभासं ज्ञानमेकं परं पुनः।**
**साभिलापं विकल्पाख्यं बहुधा नापि तद्द्वयम्॥ १॥**
**नित्यस्य कस्यचिद् द्रष्टुस्तस्यात्रानवभासतः।**
**अहंप्रतीतिरप्येषा शरीराद्यवसायिनी॥ २॥**

---

"**स्वलक्षण**" इत्यस्य बहुव्रीहिमाश्रित्य विग्रहं करोति "**स्वम्**" इति। "**स्व**" इत्यवयवं व्याख्यातुमाह "**अन्य**" इति। दुर्बोधताशंकया पर्यायान्तरमाह "**स्वरूप**" इति। स्वरूपे संकोचं भजतीति तादृशम्, असाधारणमित्यर्थः, राहोः शिर इतिवत् प्रयोगः, भजनकर्तुस्तदाधारस्य चैकत्वात्। "**लक्षण**" इत्यवयवं व्याचष्टे "**देश**" इति। **लक्षणम्**–स्वरूपम्, तच्च विशेष्यत्वेन देशादित्रययोजनामयमेवेति देशादिग्रहणम्, **यस्य**–देशादेः, **तस्य**। "**आभास**" इत्यवयवं व्याचष्टे "**प्रकाशनम्**" इति। **प्रकाशनम्**–प्रकाशः, प्रथेति यावत। **अन्तर्मुखम्**–प्रमातृसांमुख्येन स्थितम्, **यस्मिन**–अन्यपदार्थभूते, **बहिर्मुखीनस्वरूपधारिणि**, इदमिति बाह्यसंमुखे प्रमाणरूपे इति यावत्। **ज्ञाने**–ज्ञानपदवाच्ये वस्तुनि। एतेन "**स्वलक्षण**" इत्यस्य ज्ञानविशेषणत्वमुक्तम्। **तत् अविकल्पकम्**–समनन्तरोक्तं प्रकाशरूपं निर्विकल्पज्ञानम्, **विषयभेदेपि**–घटादिविषयभेदेऽपि सति, **एकजातीयम्**–एकरूपं भवति। अत्र हेतुमाह "**स्वरूपवैचित्र्येऽपि**" इति। अत्रापि वाक्येन हेतुमाह "**विकल्पे हि**" इति। **अभिलापः** शब्दनम्, लक्षणया वाचकस्मृतिरिति यावत्। **अत्र**–अविकल्पके ज्ञाने। "**नास्ति**" इत्यस्य समर्थनं करोति "**न हि**" इति, नीलधर्मत्वे तस्य संस्कारापेक्षा न स्यादिति भावः। तर्हि असौ कुत आनेय इत्यत आह "**ततः**" इति। **प्राच्यः**- संकेतकालीनः। ननु ततः किम् इत्यत आह–"**अप्रबुद्धे च**" इति। **तत्प्रबोधः**-संस्कारप्रबोधः। **वस्तुदर्शनोत्थितः**–वस्तुनः–विषयभूतस्य घटादेः, दर्शनम्–प्रकाशः, तत उत्थितः। फलितमाह "**इति**"

---

1. अथ ग्रन्थो व्याख्यायते–K. S. S.

'ननु' इति आक्षेपे; इह आत्मा संवित्स्वभावः स्थिरः इति तावदयुक्तम्, स्थिरस्यापि[1] स्वप्रकाशस्य अप्रकाशनात् । तथा हि—घटप्रकाशो घटविकल्पो घटप्रत्यभिज्ञा घटस्मृतिः घटोत्प्रेक्षा—इत्यादिरूपेण ज्ञानान्येव प्रकाशन्ते भिन्नकालानि भिन्नविषयाणि भिन्नाकाराणि च । तत्र नीलस्य[2] प्रकाशः 'स्वलक्षणाभासं ज्ञानम्' 'स्वम्' अन्याननुयायि स्वरूपसंकोचभाजि, 'लक्षणम्' देशकालाकाररूपं यस्य तस्य 'आभासः' प्रकाशनम् अन्तर्मुखं यस्मिन् वहिर्मुखीनस्वरूपधारिणि ज्ञाने तत् अविकल्पकम् विषयभेदेऽपि एकजातीयम्, स्वरूपवैचित्र्येऽपि[3] कारणाभावात् । विकल्पे हि वैचित्र्यकारणम्

---

इति । इति—अतः कारणात्, एतेन प्रथमवाक्यं व्याख्यातम् । तथा च योजना, ननु स्वलक्षणाभासं ज्ञानमेकं भवतीति ।

द्वितीयं वाक्यं व्याख्यातुमाह "ततः परम्" इति । ततः—तस्माज्ज्ञानात् । परम्—अन्यरूपम्, विकल्पकं ज्ञानम्, प्रादुर्भवति इति शेषः । अत्र हेतुमाह "सर्वस्य" इति । तत्र घटविकल्पस्य साक्षात्तन्निर्विकल्पकज्ञानमूलत्वम्, मणिप्रभादर्शनोत्थस्य मणिविकल्पस्य पारम्पर्येण मणिप्रभादर्शनोत्थत्वम् , प्रभया हि प्रभादर्शनं तेन प्रभाविकल्पः तेन मणिविकल्पः । "पर" शब्दस्य व्याख्यां करोति "परम्" इति । कुतोऽस्यान्यत्वमित्यपेक्षायामाह "सामान्य" इति, यत इति शेषः । सामान्यलक्षणम्—सामान्यस्वरूपम्, तस्य—सविकल्पज्ञानस्य, अत एव परत्वम् इति भावः । यद्यपि सिद्धान्ते निर्विकल्पस्य सामान्यनिष्ठत्वं सविकल्पस्य तु देशादियोजनारूपविशेषनिष्ठत्वमेव तथापि तावदेतदास्ताम् । ननु स्वलक्षणं कथं न विषयोऽस्य भवति इत्यत्राह "स्वलक्षणे" इति । वृद्धव्यावहारिकस्य—देवदत्त गामानयेत्यादिवृद्धव्यवहारमूलस्य । औपदेशिकस्य—"अयं गौः"

---

1. स्थिरस्य स्वप्रकाशस्य अप्राकाशनात्—K. S. S.
2. नीलप्रकाशः—K. S. S.
3. एकजातीयं स्वरूपे, तद्वैचित्र्ये—K S. S.

अभिलाप:, स च अत्र नास्ति; न हि अभिलापो नीलस्य धर्म:, न च चक्षुर्ग्राह्य:, ततोऽसौ प्राच्य: स्मर्तव्य:, अप्रबुद्धे च संस्कारे न स्मृति:, तत्प्रबोधश्च वस्तुदर्शनोत्थित: इति वस्तुदर्शनसमयेऽभिलापस्मृतिर्नास्ति ।

तत: 'परं' विकल्पकं ज्ञानम्, सर्वस्य विकल्पस्य साक्षात् पारम्पर्येण वा निर्विकल्पकमूलत्वात् । 'परम्' इति च अन्यरूपं सामान्यलक्षणं तस्य विषय:, स्वलक्षणेऽतिसंकोचिनि विततविकल्पसाध्यस्य वृद्धव्यावहारिकस्य, औपदेशिकस्य वा संकेतस्य कर्तुम् अशक्यत्वात्, कृतस्यापि वैयर्थ्यात्, तेन हि अननुयायिना न पुनर्व्यवहार: । तच्च बहुभेदम्, यतस्तत् अभिलापेन संजल्पात्मना शब्दनरूपेण सह वर्तते ।

---

इति शृंगग्राहिकया कृतस्य । **अशक्यत्वात्**, स्वलक्षणानि अनन्तानीति भाव: । ननु प्रयत्नेन संकेतं करिष्याम एवेत्यत्राह "**कृतस्यापि**" इति । कुतोऽस्य वैयर्थ्यमित्यत आह "**तेन**" इति । **अननुयायिना**, एकत्र स्वलक्षण एव समाप्तिगतेनेत्यर्थ: । **पुन:**—अन्यस्वरूपग्रहणकाले, स्वरूपाणां भिन्नत्वात्, अन्यथा स्वरूपत्वाऽयोगादिति भाव: । "**बहुधा**" इति पदं व्याचष्टे "**तच्च**" इति । **तच्च**—विकल्पकं च । कुतस्तदीदृशमित्यपेक्षायां हेतुं व्याख्यास्यन् "**साभिलापम्**" इति पदं व्याचष्टे "**यत:**" इति, स्मृतिविषयेणेति शेष: । शब्दनस्य स्वरूपं बहुधात्वं च वक्तुमाह "**शब्दनञ्च**" इति । "**इदम्**" इति सविकल्पज्ञानपरामर्श: । "**तत्**" इति स्मृतिज्ञानस्य । "**तदिदम्**" इति प्रत्यभिज्ञाया: । "**भवेदिदम्**" इति तर्कस्य । "**इदं वा इदम्**" इति आदिशब्दगृहीतस्य संशयस्य । ननु शब्दाद्वैतवादिमते शब्दस्य विशेष्यत्वमेव, तदुक्तम्:—

"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदव्ययम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यत: ।"

इति । तत्कथं त्वया विशेषणत्वकथनेन ज्ञानस्वरूपे प्रवेशित इत्यत आह "**तच्च**" इति । पुन: कुत्र वर्तत इत्यत आह "**अपि तु**" इति । **विकल्पस्य**—विकल्पज्ञानस्य ।

**शब्दनं च इदम्—इति, तत्—इति, तदिदम्—इति, भवेदिदम्—इति, इदं वा इदम्—इत्यादि बहुधा' भिद्यते । तच्च न विषयपक्षो वर्तते, अपि तु तस्य विकल्पस्य स्वरूपमेव विचित्रीकुर्वत् प्रतिभाति इति विकल्पो बहुभेदः । एवम् अनुभवविकल्पपरम्परा तावत् स्वप्रकाशत्वेन भाति ।**

**स्यादेतत्, यल्लग्नासौ परम्परा सोऽपि आभाति—इति; तन्न, यतो द्वयमपि एतद् अविकल्पेतररूपं न अन्यस्य 'कस्यचित्' एतदतिरिक्तस्य द्रष्टुः' अनुभवितुः संबन्धि, दृश्यस्य तु भवतु बाह्यार्थवादे । अत्र हेतुः—यतः 'तस्य' द्रष्टुः, अत एव संवित्स्वभावतो-**

---

फलितमाह "**इति**" इति। इति-अतः कारणात्। उपसंहारं करोति "**एवम्**" इति। **तावत्**, अत्र विप्रतिपत्तिर्नास्ति इत्यर्थः। एतेन द्वितीयं वाक्यं कृतव्याख्यम्। तथा च योजना। परम्–ततोऽन्यरूपम्, विकल्पाख्यम्–सविकल्पकम्, ज्ञान बहुधा भवति, कुतः ? यतः साभिलापम्, हेतुगर्भं विशेषणमिदम्।

अत्र सिद्धान्ती तर्करीत्याङ्गीकारं करोति "**स्यादेतत्**" इति। अनिष्टप्रसंजनमपि करोति "**यल्लग्ना**" इति। **यल्लग्ना**–यस्मिन्नहंविषये स्वात्मनि निष्ठां गता, "अहं जानामि" इति तदुदयात् इति भावः। एतत् प्रत्याचक्षाणस्तृतीयं वाक्यं व्याचष्टे "**तन्न**" इति। अत्र हेतुमाह "**यतः**" इति। **अविकल्पेतररूपम्**–अविकल्पसविकल्परूपम्। **एतदतिरिक्तस्य**–प्रोक्तज्ञानद्वयभिन्नस्य, "**द्रष्टुः**" इत्यस्य वाच्यमाह "**अनुभवितुः**" इति। षष्ठचर्थमाह "**संबंधि**" इति। "**नित्य**" इति पदस्य व्यावर्त्यमाह "**दृश्यस्य**" इति। **दृश्यस्य**, दृश्यतया स्थितस्यानित्यस्य देहादेरित्यर्थः। **बाह्यार्थवादे**–बाह्यार्थवादिसौत्रान्तिकमते, न तु विज्ञानशून्यवादिमते। "**तस्य**" इत्यादिवाक्यखण्डं व्याख्यातुमाह "**अत्र हेतुः**" इति। **अत्र**–नित्यस्य द्रष्टुः संबन्धित्वाभावे, हेतुमेव व्याचष्टे "**यतः**" इति। **अत एव**–द्रष्टृत्वात्, द्रष्टुर्हि संवित्स्वभावताप्राप्तिरवश्योपयोगिनीति भावः। संवित्स्वभावतोपगमस्य साध्यमाह "**स्वप्रकाश**" इति, अवश्यं हि संवित्स्वभावस्य स्वप्रकाशताऽन्यथा जडतापातादिति भावः। अस्यापि

पगमात् स्वप्रकाशतायोग्यत्वात् आपन्नोपलब्धिलक्षणप्राप्तेः, 'अत्र' एतद्बोधद्वयमध्ये नास्ति अवभासः। ननु अस्त्येव अवभासः—इति असिद्धा दृश्यानुपलब्धिः। तथा हि—अहं वेद्मि, निश्चिनोमि, स्मरामि इदम्—इति विदादिप्रकृत्यर्थरूपात् ज्ञानस्मृत्यादेः इदम्—इति च कर्मरूपात् विषयात् अतिरिक्तमेव अहम्—इति अनुयायिनि प्रकाशे अनुयायिरूपं भाति। क एवमाह भाति—इति? भानं हि अविकल्पकम्, अहम्—इति शब्दानुविद्धो विकल्पप्रत्ययः। ननु तथापि किम् अनेन विकल्प्यते, शरीरसन्तानो वा कृशोऽहम्—इत्यादिप्रत्ययात्, ज्ञानसन्तानो

---

साध्यमाह "आपन्न" इति। आपन्ना—स्वप्रकाशतायोगेन प्राप्ता, उपलब्धिलक्षण—प्राप्तिः— उपलब्धिप्रमाणप्राप्तिः येन तादृशस्य, प्राप्ततद्विषयत्वयोग्यत्वस्येति यावत्, कार्यं कर्म इतिवत् प्रयोगः। "अत्र" इतिपदं व्याचष्टे "एतद्" इति। न चानुपलब्धस्यापि पक्षस्याभावो वक्तुं शक्य इति "उपलब्धि" इत्याद्युक्तम्। एतेन तृतीयं वाक्यं गतव्याख्यम्। तथा च योजना। तद्द्वयम्—अविकल्पसविकल्परूपं ज्ञानद्वयं कर्तृ, कस्यचित्—कल्पनया संभावितस्य नित्यद्रष्टुः संबन्धि न भवति, कुतः? तस्य अत्र-बोधद्वयमध्ये, अनवभासतः—अदर्शनात् इति।

अत्र सिद्धान्ती प्रश्नयति "ननु" इति। दृश्यानुपलब्धिः—उपलब्धिलक्षणं प्राप्तस्याप्यप्राप्तिः, नित्यस्य द्रष्टुरिति शेषः। एतदेव समर्थयितुमाह "तथा हि" इति। प्रत्ययार्थस्य क्रियारूपत्वात् "प्रकृत्यर्थ" इत्युक्तम्। कर्मरूपात्-कर्मकारकस्वरूपात्। अनुयायिनि, प्रयोगत्रयेऽप्यहमोऽनुवर्तनात् इत्यर्थः। पूर्वपक्षवादी सकोपमाह "क एवम्" इति। "एवम्" शब्दार्थं स्वयमेवाह "भाति" इति। आक्षिप्तं वस्तु समर्थयति "भानं हि" इति। अविकल्पकम्-विमर्शास्पृष्टम्। सिद्धान्ती पुनः प्रश्नयति "ननु" इति। अनेन—शब्दानुविद्धेन विकल्पज्ञानेन। पूर्वपक्षवाद्यत्रोत्तरं वक्तुमिच्छन् चतुर्थवाक्यं व्याचष्टे "शरीर" इति। अनेन विकल्प्यते इति योजनीयम्। अनेन—अहंविमर्शेन। शरीर-

वा सुख्यहम्—इति प्रतीतेः[1]? मत्वर्थीयश्च सन्तानमेव स्पृशति नातिरिक्तम्। तदेतदुक्तम्—'अहंप्रतीतिरपि' शरीरम्, आदिग्रहणात् ज्ञानम्, अवस्यति, संतानरूपतया विकल्पयति अवश्यम्; सदृशापरभावभेदग्रहणसामर्थ्य-[2]वासनाविष्टत्वात्—इति। 'एषा' इति न अस्माभिर्निर्दिष्टा, 'साभिलापं विकल्पाख्यम्' इत्यनेन संगृहीतत्वात्। एतदुक्तं भवति—अहंप्रतीतिरेव तावत् न आत्मा, तस्या अपि विकल्परूपत्वात् अस्थैर्याच्च। एतत्प्रतीतिप्रत्ययोऽपि[3] नास्ति अन्यः शरीरादेः, भवन्नपि वा वेद्यपक्षपतितः स्यात्—इति। तथापि संवित्संवेद्यव्यतिरिक्तस्य आत्मनो न सिद्धिः—

---

**सन्तानो वा विकल्प्यते**, कुतः? **कृशोऽहमित्यादिप्रत्ययात्**, आदिशब्देन स्थूलोऽहमिति प्रत्ययग्रहणम्। एतेन चार्वाकमतमवलंब्योत्तरं दत्तम्। तथानेन **ज्ञानसन्तानो वा**–विषयोपरागरूषिता ज्ञानसंततिर्वा विकल्प्यते। कुतः? **सुख्यहमिति प्रतीतेः**, सुखस्य बौद्धमते विज्ञानमात्रत्वादेवमुक्तम्, एतेन विज्ञानवादि-बौद्धदर्शनमाश्रित्योत्तरं दत्तम्। उभयत्र "**वा**" शब्दः विकल्पद्वयस्य स्वस्वविषय-प्रधानताद्योतनार्थः। ननु अहंप्रतीतिः कृशं वा सुखिनं वावस्यति कृशोहमित्या-दौ ताभ्यां सहास्य सामानाधिकरण्येन दर्शनात् इत्यपेक्षायामाह "**मत्वर्थीयश्च**" इति। मत्वर्थे विहितः प्रत्ययो मत्वर्थीयः, स च कृश इत्यत्र मतुब्रूपः, तस्य च

"गुणवचनेभ्यो मतुपो लुबिष्टः"

इति लुप्, यथा शुक्लः पट इत्यत्र शुक्लशब्दस्य शुक्लो गुणोस्यास्तीति विग्रहः, सुखीत्यत्र तु इनिः, स तु साक्षादेव वर्तते। **सन्तानम्**– शरीररूपां वा ज्ञानरूपां वा सन्ततिम्, बौद्धमते हि सन्ततिरूपगुणमय एव सन्तानरूपः गुणी। **अतिरिक्तम्**–सन्तानव्यतिरिक्तम्। उक्तमर्थं संक्षिप्याह "**तदेतत्**" इति। **तदेतत्**–समनन्तरोक्तं वस्तु। विग्रहं दर्शयति '**शरीरम्**' इति, **शरीरं** तथा

---

1. सुख्यहमित्यादिप्रतीतेः-K. S. S.
2. सदृशापरापरभाव–K. S. S.
3. एतत्प्रतीतिप्रत्येयोऽपि–K. S. S.

इत्येतत् अपिशब्देन द्योतितम् । एवं नास्ति आत्मा संवित्संवेद्यव्यतिरिक्तो दृश्यस्य[1] तस्यानुपलब्धेः - इति ।। १,२ ।।

अत्र आत्मवाद्यनुमानमुत्थापयति[2] :—

**अथानुभवविध्वंसे स्मृतिस्तदनुरोधिनी ।**
**कथं भवेन्न नित्यः स्यादात्मा यद्यनुभावकः ॥ ३ ॥**

---

आदिग्रहणात् ज्ञानमवस्यति । "अवस्यति" इत्यस्यार्थमाह "**सन्तान**" इति। **सन्तानरूपतया**—सन्तानभावेन। "**अवश्यम्**" इत्यस्य प्रत्ययार्थत्वात् पूर्वेण संवन्धः । अत्र हेतुमाह "**सदृश**" इति, सदृशा ये अपरे भावभेदाः—क्षणरूपाः भावविशेषाः, तेषां यद् ग्रहणम्-पूर्वकालीनोऽनुभवः, तस्य सामर्थ्येन-वशेन या वासना—भावनाख्यः संस्कारः, तया यदाविष्टत्वम्—आवेशविषयीकृतत्वम्, तस्माद्, वासनयैव हि विकल्पोदय इति भावः । "**इति**" शब्दः हेतुसमाप्तौ ।

"**एषा**" इति पदं व्याचष्टे "**एषेति**" इति। **निन्हुता**-अपलापविषयीकृता। कुतो न निह्नुतेत्यपेक्षायामाह "**साभिलापम्**" इति। नन्वेतेन किमुक्तं भवति इत्यत्राह "**एतदुक्तम्**" इति । उक्तमेव दर्शयति "**अहम्**" इति। एतत्प्रतीतिः—अहंप्रतीतिस्फूर्तिः, तया प्रत्ययो यस्य सः । प्रत्येय इति वा पाठः, तथा च तृतीयासमास एव । "**इति**" शब्दः समाप्तौ । "**अपि**" शब्दाभिप्रायं कथयितुमाह "**तथापि**" इति। देहात्मवादी चार्वाकः विज्ञानात्मवादी बौद्धश्च स्वपक्षमुपसंहरति "**एवम्**" इति। संवित्—विज्ञानम्, संवेद्यः—देहः, ताभ्यां व्यतिरिक्तः, नित्यप्रकाशरूप इत्यर्थः। अत्र हेतुमाह "**दृश्यस्य**" इति । **दृश्यस्य**-द्रष्टुं योग्यस्य, **तस्यानुपलब्धेः**, द्रष्टुं योग्यो हि यदा नोपलभ्यते तदा नास्तीति व्यवस्थाप्यते। अनेन चतुर्थवाक्यं गतव्याख्यम्। तथा च योजना । एषाऽहंप्रतीतिरपि शरीरादिकम् अवस्यति—अवसायरूपविकल्पविषयतां नयतीति तादृशी भवति, न तु शुद्धनित्यप्रकाशरूपपरमात्मविमर्शरूपा भवतीत्यर्थः।। १, २ ।।

तृतीयश्लोकस्यावतरणिकां करोति "**अत्र**" इति ।

---

1. दृश्यस्य अनुपलब्धेः—K. S. S.
2. उत्थापयितुमाह—K. S. S.

**इह स्मृतिकाले सुस्मूर्षितोऽर्थो भवतु, ध्वंसतां वा– इति किन्तेन,[1] अनुभवस्तावत् ध्वस्तः—इत्यत्र सर्वस्य अविवादः, तमेव च अनुरुन्धाना स्मृतिर्जायते। तथा हि– स्मृतौ न अर्थस्य प्रकाशः, न अध्यवसायः,**

अत्र टीका:–

**आत्मवादो**—तार्किकादिः। **अनुमानम्**—अन्वयव्यतिरेकरूपम्। **उत्थापयति**–स्वयमेवोत्तिष्ठत्तत् समर्थाचरणेन प्रयोजकव्यापारेण तत्र प्रेरयति। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"अथ"** इति।

अत्र टीका:–

सप्तम्या द्योतितमनुभवविध्वंसस्य सिद्धत्वं कथयितुमाह "**इह**" इति। **इह**–भासमाने जगति। स्मर्तुमिष्टः **सुस्मूर्षितः**। **किन्तेन,** मृतायाममृतायाञ्च मातरि सा मे मातेति स्मृतिदर्शनात् न किंचित् स्मृतिविषयस्य भवनेन ध्वंसनेन वेति भावः। **अनुभवः,** पूर्वकालीन इति शेषः। "**तावत्**" शब्दं स्वयमेव व्याचष्टे **"सर्वस्याऽविवादः"** इति। **तमेव**-ध्वस्तमनुभवमेव, **अनुरुन्धाना**–अस्य पदमनुसरन्ती, अपेक्षमाणेति यावत्। अनेन **"तदनुरोधिनी"** इत्यस्य व्याख्या कृता। **स्मृतिः**-स्मरणम्। **जायते**-उत्पद्यते। एतदेव समर्थयति **"तथा हि"** इति। **प्रकाशः**-ग्रहणम्, निर्विकल्पज्ञानमिति यावत्। **अध्यवसायः**— तत्समनन्तरभावि सविकल्पज्ञानम्। **"नापि"** इति। **अंगुलिद्वयवत्**–अंगुलिद्वयन्यायेन, युगपत्प्रकाशोऽध्यवसायश्च इति योज्यम्। **"नापि"** इति। **अनुभवविशिष्टस्य**-ज्ञातोयमित्यनुभवविशेषणयुतस्य। **दण्डिवत्,** दण्डविशिष्टपुरुषन्यायेनेत्यर्थः। कथं नास्तीत्यपेक्षायामाह **"सर्वत्र"** इति। **सर्वत्र**-प्रकारचतुष्टयेऽपि, **अयमितिप्रत्ययप्रसंगात्,** अनुभवसांनिध्ये स इति ग्रहणायोगादिति भावः। ननु मास्त्वत्रानुभवस्पर्शः इत्यत आह **"किन्तु"** इति। **पनुभवप्रकाशः**—पूर्वानुभवस्मरणम्। कुतः इति हेत्वपेक्षायां वाक्यं हेतुत्वेनाह **"अनुभवस्य"** इति। "**तु**" शब्दः

1. किमनेन–K. S. S.

नापि अनुभवस्य अर्थस्य च अङ्गुलिद्वयवत्, नापि अनुभवविशिष्टस्य अर्थस्य दण्डिवत्, सर्वत्र अयम्—इति प्रत्ययप्रसङ्गात्; किंतु अनुभवप्रकाश एव स्मृतौ प्रधानम्, अनुभवस्य तु अर्थप्रकाशात्मकत्वात् अनुभवप्रकाशनान्तरीयकोऽर्थावभासः इति। सर्वथा यदि अनुभवो ध्वस्तः, तदा तत्प्रकाशरूपा कथं स्मृतिस्तद्द्वारेण अर्थविषया स्यात्, तया च सर्वो व्यवहारः क्रियमाणो दृष्टः इत्यसौ स्वरूपेण अनपह्नवनीया[1] सती अनु-

अनुभवस्य स्मृतेर्व्यतिरेकद्योतकः, **अनुभवस्यार्थप्रकाशात्मकत्वात्**-अर्थप्रकाशरूपत्वेन, अर्थप्रकाशाख्यः **अर्थावभासः अनुभवप्रकाशनान्तरीयकः**-अनुभवप्रकाशप्राप्तः भवति। "**इति**" शब्दः पूर्ववाक्यं प्रत्यस्य वाक्यस्य हेतुत्वद्योतकः। एतदुक्तं भवति, यो यस्य प्रकाशः स तत्प्रकाशं विना न प्रकाशितुं योग्यः, न हि नीलाख्यगुणप्रकाशं विना नीलोत्पलं दृष्टम् इत्यनुभवप्रकाशस्यैवार्थप्रकाशयुक्तायां स्मृतौ प्राधान्यम् इति। ननु सोऽनुभवो ध्वस्त एवेति किं तस्य चर्चाभिरित्यत आह "**सर्वथा**" इति। **सर्वथा**-संस्कारभावेन स्वरूपेणापि। **तत्प्रकाशरूपा**-अनुभवप्रकाशरूपा, **तद्द्वारेण**-अनुभवद्वारेण। ननु मा भूत् स्मृतिरित्यत्राह "**तया च**" इति, **तया**, स्मृत्यैवेत्यर्थः, "चः" एवार्थोनुक्तसमच्चयार्थो वा, **असौ**-स्मृतिः, **अनपह्नवनीया**-अपह्नोतुमशक्या, **सती**-भवन्ती, **किंचित्**-किमप्यनिर्वचनीयं वस्तु, **आवेदयति**, अनुमापयतीत्यर्थः। तदुक्तम्:-

सर्वज्ञः सर्वदैव त्वं सूर्यस्य ह्युदये न चेत्।[2]
केनान्यथास्य संभाव्या नष्टार्थविषया स्मृतिः॥

इति। ननु आवेदयतु किन्तेनेत्यत्राह "**तदेव**" इति। **तदेव**-आवेदितं वस्तु एव, **अनुभावको नित्य आत्मा** भवति। "**अनुभावक**" पदस्य पर्यायद्वयं कथयति, "**अनुभवकर्तृ-अनुभवितृ**" इति च। ननु किं स्मृतिमात्रेणैवात्मा सिद्ध्यत्युतान्येनापीत्यत आह "**इयत्**" इति। **इयदेव**-स्मृतिमात्रमेव। ननु

1. अनपह्नबनीया, सति अनुभवस्य नाशे-K S S.
2. This verse, as it stands, does not yield a good meaning. Several interpretations suggest themselves to us; but all of them seem to be unsatisfactory.

भवस्य नाशे किंचित् अविनष्टम् आवेदयति। तदेव च अनुभवकर्तृ—अनुभवितृरूपम्, आत्मा अनुभावको नित्यः—इति।[1] इयदेव च आत्मसिद्धेर्जीवितम्। तत्तु न अधिकम् इहैव उन्मीलितम् आचार्येण, वक्तव्यशेषविवक्षया पूर्वपक्षो मा तावत् समापत् इत्याशयेन। 'कथं भवेत्' इति। अर्थस्तावत् तस्याम् अकिंचित्करः, अनुभवश्च ध्वस्तः इति न केनचित्प्रकारेण स्मृतिः स्यात्, तदभावे च संकेतशब्दस्मृत्यायत्ता अपि अस्तङ्गताः सर्वे विकल्पाः, निर्विकल्पं च अन्धबधिरमूकप्रायम्[2] इति हन्त निराक्रन्दम् अवसीदेत् विश्वम्—इति॥ ३॥

---

तर्ह्यत्रैव भरः किं न कृत इत्यपेक्षायामाह "तत्तु" इति। तत्—आत्मसिद्धेर्जीवितभूतं वस्तु, **आचार्येणेहैवाधिकं नोन्मीलितम्**—न प्रकटीकृतम्, केन कृत्वा? **इत्याशयेन**—इत्यभिप्रायेण, इति किमिति? **पूर्वपक्ष** इहैव **मा समापत्**—समाप्तिं गच्छतु इति। कार्यहेतुभूतया, वक्तव्यं यच्छेषम्—अवशिष्टं किंचित्, तस्य विवक्षया-वक्तुमिच्छया, अन्यथा तन्निर्विषयमेव स्यादिति भावः। **"कथं भवेत्"** इत्यस्याभिप्रायं वक्तुमाह **"कथं भवेत"** इति। **अर्थः**—पूर्वं गृहीतः अद्य स्मर्यमाणः घटादिः, **तस्याम्**—स्मृतौ, **अनुभवः**—ग्रहणकालीनः। ननु मास्तु स्मृतिरित्यपेक्षायामाह **"तदभावे"** इति। संकेतः—वाच्यवाचकभावसंबन्धः, शब्दः—वाचकशब्दः, तयोर्या स्मृतिः तस्या आयत्ताः—अधीनाः, तद्रूपत्वादिति भावः। **"अपि"** शब्दः साकल्ये। नन्वस्तं गच्छन्तु सर्वे विकल्पास्ततः किम् इत्यत्राह **"निर्विकल्पम्"** इति, तथा चेति शेषः, तथा च सति **विश्वम्**—समस्तं जगत्, **निर्विकल्पम्**—विकल्परहितं सत्, विकल्परहितप्रमातृवर्गान्वितं सदिति यावत्। **अन्धबधिरमूकप्रायम्**—सद्योजातबालवद् दृष्ट्वाप्यन्धतुल्यैः श्रुत्वापि बधिरकल्पैः वागिन्द्रिययुक्तत्वेऽपि मूकप्रायैर्जनैर्भरितं भवेत्। **इति**—अतः कारणात्, **हन्त**—कष्टे,

---

1. अनुभावको नित्यः—इति इयदेव—K. S. S.
2. अन्धमूकबधिरप्रायम्—K. S. S.

इह कार्यातिरेकेण[1] तादृक् कल्पनीयं यत् कार्यसिद्धये पर्याप्नोति, न चैवम् आत्मा, अर्थो हि तावत् स्मर्यते, स च अनुभवप्रकाशमुखेन, अनुभवश्च ध्वस्तः—इत्युक्तम्; यदि आत्मा कश्चिदस्ति, किं तेन। एतदपि हि वक्तव्यम् – आकाशमपि अस्ति इति। अथ उच्यते – न केवलेन आत्मना एतत् सिद्ध्यति, अपि तु अनुभवसंस्कारोऽपि अत्र उपयोगी – इति, तर्हि स एवास्तु, किम् अनेन[2] ?—तदेतत् दर्शयति :—

**सत्यप्यात्मनि दृङ्नाशात्तद्द्वारा दृष्टवस्तुषु।**
**स्मृतिः केनाथ[3] यत्रैवानुभवस्तत्पदैव सा॥ ४॥**

---

निराक्रन्दम्-परस्परं प्रत्याह्वानासमर्थं सत्, अवम्रोदेत्-नश्यत्। दृश्यते हि सद्योजातबालानां केनापि कारणेन निर्जने त्यक्तानामवसाद इति भावः॥ ३॥

अथ चतुर्थश्लोकस्यावतरणिकां करोति "इह" इति।

अत्र टीका :—

इह—भासमाने जगति, कार्यातिरेकेण—कार्यादिशेन, कार्यकारणयोर्भिन्नत्वात्, तादृक्, तादृशं कारणमित्यर्थः। कार्यव्यतिकरेणेति वा पाठः। पर्याप्नोति—समर्थो भवति, एवम्, पर्याप्तमित्यर्थः, आत्मा, त्वया साधितो नित्य आत्मेत्यर्थः। एतदेव समर्थयति "अर्थो हि" इति। स च—अर्थश्च, अनुभवप्रकाशमुखेन, न तु साक्षात्स्मर्यते इति पूर्वेण संबन्धः। उक्तम्, समनन्तरमेवेत्यर्थः। ननु तथाप्यात्मास्त्येवेत्यत्राह "यदि" इति। तेन, अकिंचित्करेणात्मनेत्यर्थः। आत्मनः कथनेऽन्यदपि वस्तु वक्तव्यत्वेनाह "एतत्" इति, अकिंचित्करत्वाऽविशेषात् इति भावः। सिद्धान्तिकृतं प्रश्नमाशंकते "अथोच्यते" इति। एतत्—स्मृतिरूपं कार्यम्, उपयोगी—साधकः। अत्रोत्तरमाह "तर्हि" इति। स एव—संस्कार एव। अनेन,

---

1. कार्यव्यतिरेकेण–K. S. S.
2. किम् आत्मना–K. S. S.
3. The Kashmir edition has printed the portion of this kārikā beginning with "अथ" separately, just where the commentary on it begins.

**'दृष्टेषु' अनुभूतेषु 'वस्तुषु' या 'स्मृतिः' तस्याम् अनुभवो दृगात्मा 'द्वारम्' अर्थांशस्पर्शे, स च 'सत्यपि आत्मनि' नष्टोऽनुभवः, तस्य हि अनाशे इदम् —इत्येष एव अत्रुटितः प्रकाशः इति का स्मृतिः, तदनुभविता किं स्मृतेः कुर्यात् —इति ।**

---

अकिंचित्करेणात्मनेत्यर्थः, नह्येकेन कार्यसिद्धौ द्वितीयकल्पना युक्तेत्यर्थः । उक्तमुपसंहारपूर्वं दर्शनीयत्वेन प्रतिजानीते **"तदेतत्"** इति। **तदेतत्**—समनन्तरोक्तं वस्तु, **दर्शयति**—प्रकटीकरोति । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । **"सत्यपि"** इति ।

अत्र टीका :—

**"केन"** इत्यन्तं श्लोकखंडं व्याख्यास्यन्नाह **"दृष्टेषु"** इति । **"दृष्ट"** इति पदं व्याचष्टे **"अनुभूतेषु"** इति । **वस्तुषु**—नीलादिषु **या स्मृति**र्भवति, **तस्याम्**—स्मृतौ, **अर्थांशस्पर्शे**—अर्थांशाख्यविषयस्पर्शविषये, **दृगात्मा**—दृग्रूपः, **अनुभवः** पूर्वानुभवः, **द्वारम्**—उपायः भवति, अन्यथा स इति तस्या उत्थानं न स्यादिति भावः । ननु ततः किमित्यत आह **"स च"** इति । **स च अनुभवः**—द्वारभूतोऽनुभवश्च, **आत्मनि सत्यपि नष्टः**, न ह्यन्यस्यावस्थानमात्रेणान्यस्य नष्टस्य नाशाभावो वक्तुं शक्य इति भावः । ननु ततोपि किमित्यत आह **"तस्य"** इति। **अत्रुटितः**—अच्छिन्नः, **का स्मृतिः**, तदिति स्थितस्य तत्स्वरूपस्येदमित्यनेन विरोधान्न सा संभवेदिति भावः । एवञ्च व्यर्थत्वमपि स्मृतेः स्यादित्यभिप्रायेणाह **"तदनुभविता"** इति। **तदनुभविता**—अर्थानुभविता, **किं कुर्यात्**, अनुभवेनैवार्थप्रकाशान्नाऽस्याऽसावुपयोगिनीति भावः । इयमत्र योजना । आत्मनि सत्यपि, तद्द्वारा—अनुभवद्वारेण, दृष्टवस्तुषु—पूर्वानुभूतेषु नीलादिषु, भवन्ती स्मृतिः दृङ्नाशात्—अनुभवाख्यकारणनाशाद्धेतोः, केन स्यात्, न हि कारणाभावे कार्यस्य युक्ततेति भावः ।

शिष्टं श्लोकखंडं व्याख्यातुमाह **"यत्रैव"** इति। **वृत्तः**-पूर्वं संपन्नः, **पदम्**-विषयः । किं सर्वदैव तत् स्मृतेर्विषय उत कदाचिदेवेत्यपेक्षायां विशेषणमाह

'यत्रैव' विषये 'अनुभवो' वृत्तः 'तदेव' तस्याः स्मृतेः 'पदं' स्मर्य-माणम्। तत्पदा - इति बहुव्रीहिः, 'सा' इति स्मृतिः॥ ४॥

ननु ज्ञानान्तरस्य विषयेण कथं तस्याः विषयित्वाभिमानः—इत्या-शङ्क्याह :—

---

"**स्मर्यमाणम्**" इति। **स्मर्यमाणम्**-स्मृतिविषयीक्रियमाणम्, न त्वनुभूयमान-मित्यर्थः। **बहुव्रीहिः**-तत् पदं यस्या सेत्येवंरूपा। "**सा**" इति पदं व्याचष्टे "**सेति**" इति॥ ४॥

अथ पंचमस्य श्लोकस्यावतरणिकां करोति "**ननु**" इति।

अत्र टीका :–

**ज्ञानान्तरस्य**-अनुभवरूपस्य, **तस्याः**-स्मृतेः। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**यतो हि**" इति।

अत्र टीका :–

पूर्वार्धं व्याचष्टे "**अनुभवेन**" इति। स्वस्मिन्नुचितः **स्वोचितः**, न तु स्वविलक्षण इत्यर्थः। ननु तेन संस्कारेण किं क्रियत इत्यत्राह "**संस्कारश्च**" इति। **स्थितिम्**-अवस्थानम्, **स्थापयति**–स्वयं तिष्ठन्तीं प्रयोजकव्यापारेण तत्र प्रेरयति। कस्येत्यपेक्षायामाह "**आकृष्ट**" इति। आकृष्टश्चासौ शाखादिः तस्य, आदिशब्देन धनुरादेर्ग्रहणम्, आकृष्टा हि वक्रा शाखा मोचिता सती पुनरेव ऋजुतारूपेण स्वस्थाने तिष्ठति। पुनः कस्येत्यपेक्षायामाह "**चिरम्**" इति। **चिरम्** बहुकालादारभ्य, **संवलितस्य**–वेष्टितस्य, तथा **विवर्त्यमानस्य**–विकासितस्य, चिरं वेष्टितं हि भूर्जपत्रादिकं प्रसार्य मुक्तं सत् संस्कारवशेन पुनस्तथैव तिष्ठति। प्रोक्तसंस्कारलक्षणं प्रकृतेऽपि योजयति "**तेन**" इति। **पूर्वानुभवानु-कारिणीम्**–पूर्वानुभवसदृशीम्, प्राक्तनरूपां स्थितिं स्थापयतीत्यर्थः। उपसंहारं करोति "**इति**" इति। **इति**–अतः कारणात्, **एतद्विषय एव**–अनुभवविषय एव, **स्मृतेर्विषयो** भवति, पूर्वानुभूतमातृविषयत्वादिति भावः। एतेन स्मृतिहेतोः संस्कारस्यापि स्थितिस्थापकत्वमुक्तम्। यद्यपि तार्किकैस्तस्य भावनारूपत्वमुक्तम्,

**यतो हि पूर्वानुभवसंस्कारात्स्मृतिसंभवः ।**
**यद्येवमन्तर्गडुना कोर्थः स्यात्स्थायिनात्मना ॥ ५ ॥**[1]

यदुक्तम् :–

"स्मृतिहेतुर्भावनाऽऽत्ममात्रवृत्तिः" ।

इति । तथापि परमार्थविचारे भेदत्रयेपि स्थितिस्थापकत्वमेव सारः, वेगस्यपि स्वाश्रयस्य शरादेः पूर्वक्रियायामेव हि स्थापकत्वम् । श्लोके स्थितेन **"यतो हि"** इत्यनेन पूर्ववाक्यं प्रत्यस्य वाक्यस्य हेतुत्वं द्योतयति । एतेन पूर्वार्धं गतव्याख्यम् ।

उत्तरार्धं व्याख्यातुमाह **"एवं तर्हि"** इति । एतेन पूर्वार्धस्य सिद्धान्तिपक्षत्वं सूचितम् । **गडुः**—कुब्जपृष्ठस्थो मांसपिण्डः, स हि स्फुटमेवायासकारी । **किन्तेन**, न किंचिदप्यात्मनेत्यर्थः । अत्र हेतुमाह **"सर्वं हि"** इति । **कृतकरावलंबम्**, व्यवहारसाधनस्मृत्युत्पादनद्वारेण कृतावष्टंभमित्यर्थः ॥ ५ ॥

अथ षष्ठश्लोकस्यावतरणिकां करोति **"ननु"** इति । एतेन परिशेषानुमानमाश्रित्य स्थिर आत्मा शंकितः । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । **"तत"** इति ।

अथ टीका :–

भंग्या व्याख्यां कर्तुमारभते **"इह"** इति । **इह**—अत्र लोके, **विशेषः**—पूर्वावस्थाया भेदः, अतिशय इति यावत् । **सः**—विशेषः, **"न नित्यः स्यात्"** इति, न हि पूर्वरूपाद्विशिष्टस्यात एव स्वरूपात्प्रच्युतस्य नित्यत्वं युक्तमिति भावः । शंकितं प्रथमं पक्षं निराकृत्य द्वितीयमपि निराकर्तुं वादी तत्स्वरूपोद्भावनं करोति **"अथ"** इति । **अस्य**–आत्मनः, **तेन**–संस्कारेण, **किम्**, व्यर्थत्वान्न किंचिदित्यर्थः । तार्किकमतं शंकते **"अथ"** इति । उत्तरमाह **"तर्हि"** इति । **पुनरपि**–पूर्ववदेव, **ज्ञाने**—ज्ञानरूपे आत्मनि । **अनुभवात्**—अनुभवाख्यात्, जनिकर्तृतत्प्रकृत्योरेकत्वं न युक्तमिति भावः । विशिष्टम्–तदिति स्थितत्वाद् इदमिति स्थिताद् अनुभवाद् भिन्नं यत् स्मृत्याख्यकार्यं तत्करोतीति तादृशम् ।

1. The second half of this kārikā is printed separately in K. S. S. It is put just before "एवं तर्हि" on the next page.

अनुभवेन हि संस्कारो जन्यते स्वोचितः, संस्कारश्च प्राक्तनरूपां स्थितिं स्थापयति, आकृष्टशाखादेश्चिरसंवर्तितस्य विवर्त्यमानस्य भूर्जादेः। तेन अत्रापि संस्कारः तां स्मृतिं पूर्वानुभवानुकारिणीं करोति इति तद्विषय एव स्मृतेर्विषयः।

एवं तर्हि 'अन्तर्गडुः' यथा आयासाय परम्, तद्वत् आत्मा स्थिरः कल्पनायासमात्रफलः इति किं तेन, सर्वं हि संस्कारेण जगद्व्यवहारकुटुम्बकं कृतकरावलम्बम्—इति ॥ ५ ॥

ननु तस्यैव संस्कारस्य आश्रयो वक्तव्यः, स हि गुणत्वाद् आश्रयमपेक्षते, य आश्रयः स आत्मा स्यात्—इत्याशङ्क्याह :—

**ततो भिन्नेषु धर्मेषु तत्स्वरूपाविशेषतः।**
**संस्कारात्स्मृतिसिद्धौ स्यात्स्मर्ता द्रष्टेव कल्पितः ॥ ६ ॥**

इह संस्कारे जायमाने, यदि आत्मनो विशेषः, स तर्हि अव्यतिरिक्तः इति न नित्यः[1] स्यात्; अथ न कश्चित् अस्य विशेषः, तेन

---

**परंपरया**, न तु साक्षात् । अनुभवो हि साक्षात् प्रमामेव जनयति संस्कारं तु तद्द्वारेण । **संस्कारार्थः**— संकेतितसंस्कारपदार्थः । पुनरपि सिद्धान्तिप्रश्नं शंकते "अथ" इति । **संस्कारात्मा**— संस्काररूपः, उपलक्षणं चैतत्संस्कारकृतविशेषस्य, तस्यापि न्यायविषयत्वात् । उत्तरमाह "**तस्य**" इति। **तर्हि**— तदा, **असौ**-संस्कारः, **तस्य**[2] आत्मनः, **किम्**, न कोपीत्यर्थः, न हि व्यतिरिक्तस्य संबद्धत्वं युक्तमिति भावः। ननु तथाप्यसौ संबन्धी भवत्वित्यत आह "**संबन्धश्च**" इति। "**निराकरिष्यते**" इति। इहैवेति शेषः, संबन्धस्य व्यतिरेकाभावे संबद्धस्य व्यतिरेकाभावोऽयत्नसिद्ध एवेति लक्षणाश्रयणे प्रयोज-

---

1. न नित्य आत्मा स्यात्–K. S. S.
2. अस्य–C.

**तर्हि किम् । अथ संस्कार एव अस्य विशेषः, तर्हि न व्यतिरिक्तोऽसौ इति पुनरपि अनित्ये ज्ञाने संस्कारः—इत्यायातम् । अनुभवाद्विशिष्टं विशिष्टस्मृत्याख्यकार्यकारि ज्ञानं परम्परया जायते – इति इयानेव संस्कारार्थः । अथ संस्कारात्मा व्यतिरिक्तो विशेषः, तस्य तर्हि किमसौ । संबन्धश्च व्यतिरिक्तो निराकरिष्यते । एवं ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा अपि विकल्पनीयाः । एतदाह—'ततः' इति आत्मनो**

---

नम् । ज्ञानादिगुणेष्वप्येतदतिदिशति "**एवम्**" इति । **एवम्**, संस्कारवत् तत्कृतविशेषवच्चेत्यर्थः[1] । **विकल्पनीयाः**[2]-पक्षद्वयरूपविकल्पविषयीकार्याः । उक्तस्य प्रपंचस्य प्रकृते श्लोके वाच्यत्वेन योजनं करोति "**एतदाह**" इति । एतत्–समनन्तरोक्तं वस्तु । केनाहेत्यत आह "**ततः**" इति । **भिन्नेषु**–भेदयुक्तेषु, अभेदपक्षस्यानित्यत्वापादकत्वेन सूत्रे दूरत एव त्यागः । "**विशेषाभावात्**" इति, न हि भिन्नं विशेषणं युक्तम्, सामानाधिकरण्येन स्थितस्य नीलाख्यस्य गुणस्यैवोत्पलविशेषणत्वादिति भावः । **न व्याप्रियेत**–व्यापारं कर्तुं न शक्नोति । अत्र हेतुमाह "**असमतृ रूप**" इति । असंस्कृतरूपम्–अनुत्पन्नसंस्काररूपम्, आदौ स्थितं प्राच्यरूपम् आदिप्राच्यरूपम्, संस्कारात्पूर्वं स्थितं रूपमिति यावत् । फलितमाह "**इति**" इति । **इति**–अतः कारणात् । ननु यद्येवं तर्हि "अहं स्मरामि" इत्यत्र भासमानाहंशब्दवाच्यस्य किं कुर्मः इत्यत्राह "**अहम्**" इति । **सोऽपि**–स्मर्ता, "**अपि**" शब्दः समुच्चये पूर्वोक्तं द्रष्टारं समुच्चिनोति । अपिशब्दाभिप्रायं स्वयमेवाविष्करोति "**यथा**" इति । यथा द्रष्टा शरीरसन्तानो ज्ञानसन्ता-

---

1. तत्कृतविशेषश्च–C. This does not fit in with the context. We have, therefore, modified it as printed, chiefly because in the manuscript which we have been using, च्च is often written as श्च ।

2. विकल्पनीयः–पक्षद्वयरूपविकल्पविषयीकार्यः–C. The K. S. S. text seems to be better. Hence we have retained it.

'भिन्नेषु धर्मेषु' अङ्गीक्रियमाणेषु तेषु सत्स्वपि, आत्मनः 'स्वरूपे' विशेषाभावात् स तावत् आत्मा स्मृतौ न व्याप्रियेत, अस्मर्तृरूपासंस्कृतरूपादिप्राच्यरूपानपायात्, इति 'संस्कारादेव स्मृतेः सिद्धिः'—इति। अहं स्मरामि—इति यः 'स्मर्ता' सोऽपि शरीरसंतानो ज्ञानसंतानश्च अध्यवसीयते, 'यथा द्रष्टा'। पूर्वं हि उक्तम्:—

'अहंप्रतीतिरप्येषा शरीराद्यवसायिनी।' (१।२।२)

इति। एवम् आत्मनि साधकं प्रमाणं प्रत्यक्षमनुमानं च पराकृतम्, बाधकं च सूचितं—धर्मयोगे नित्यताहानिः, अन्यथा किं तेन। तदुक्तम्:—

'चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्समः।
[1] वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति हि तत्फलम्[2]॥'

इति॥ ६॥

नश्चाध्यवसीयते तथा स्मर्तापीति शब्दार्थः। ननु कुत्र द्रष्टा एवमध्यवसीयते इत्यत्राह "पूर्वम्" इति। उपसंहारं करोति "एवम्" इति। बाधकम्—धर्मयोगे नित्यताहानिः, धर्माभिन्नित्वे नित्यताहानिरूपम् इत्यर्थः। ननु धर्मयोगे नित्यताहानिः कथं भवत्वित्यत्राह "अन्यथा" इति। अन्यथा—धर्मयोगस्य नित्यताहानिहेतुत्वाभावे, तेन—धर्मयोगेन, किम्, तन्मात्रस्य तत्साध्यत्वेन न किंचिदपि भवतीत्यर्थः। अत्र वृद्धसंमतिमाह "चर्मोपमः" इति, सः—आत्मा, चर्मोपमः—वर्षातपरूपधर्मप्राप्तकोमलत्वकाठिन्यविशेषचर्मसदृशः, चेत् भवेत् तदा अनित्यः स्यात्, चर्मवदेवेति शेषः। पुनः स आत्मा खतुल्यः—वर्षातपकृतविशेषरहिताकाशसदृशश्चेत् स्यात् तदा असत्समः—आकाशवन्न किंचिद्रूप इव भवेत्।

1. The first line of this verse appears as the second and vice versa in the K. S. S. edition.
2. चर्मण्यस्ति तयोः फलम्—K. S. S.

इत्थम् आत्मानं निराकृत्य, तस्य ऐश्वर्यमपि निराकर्तुं ज्ञानशक्तिमेव परीक्षितुमाह: —

**ज्ञानं च चित्स्वरूपं चेत् तद् अनित्यं किमात्मवत्।**
**अथापि जडमेतस्य कथमर्थप्रकाशता ॥ ७ ॥**

पराभ्युपगमेन प्रसङ्गापादनम् एतत् पूर्वपक्षवादी करोति—प्रसङ्गविपर्ययलाभो मे भविष्यति—इति। तत्र आत्मवादी नित्यत्वम् आत्मन इत्थं ब्रूते—इह कालो नाम इदंभावविशिष्टस्य विशेषणताम् अवलम्बमानः तं

---

पूर्वार्धोक्तं वस्तु समर्थयति "**वर्षातपाभ्याम्**" इति। "**तन्फलम्**"—वर्षातपकृतकोमलत्वकाठिन्यरूपम्, "**इति**" शब्दः उक्तपरिसमाप्तौ ॥ ६ ॥

अथ सप्तमस्य श्लोकस्यावतरणिकां करोति "**इत्थम्**" इति।

अत्र टीका :—

**इत्थम्,** प्रत्यक्षानुमानरूपसाधकप्रमाणपराकरणेन बाधकसूचनेन चेत्यर्थः। **ऐश्वर्यम्**—ज्ञानक्रियाकर्तृत्वरूपम्, **परीक्षितुम्**—परीक्षाविषयीकर्तुम्, तावदिति शेषः, **आह,** कथयतीत्यर्थः। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**ज्ञानञ्च**" इति।

अत्र टीका:—

पूर्वार्धं भंग्या व्याख्यातुमाह "**पर**" इति। **पूर्वपक्षवादी**, कर्ता, **पराभ्युपगमेन**—सिद्धान्तिमताश्रयणेन, **एतत्**—एतस्य श्लोकस्य वाच्यतया स्थितम्, **प्रसंगापादनम्**—अनिष्टापादनम्, अर्थात् परस्य सिद्धान्तिनः करोति, कुतः ? **मे**—पूर्वपक्षवादिनो मम, **प्रसंगविपर्ययलाभः**—इष्टलाभः, **भविष्यति,** तदनिष्टापादनस्यैतदिष्टत्वात्। अयमेव चाभ्यपगमसिद्धान्तः पूर्वपक्षवादिमतस्यापि तं प्रति तावत् सिद्धान्तत्वात्। एतदेव स्फुटीकर्तुमाह "**तत्र**" इति। **तत्र**—नित्यत्वानित्यत्वमध्ये इत्यर्थः। "**इत्थम्**" इत्यस्याकांक्षां पूरयति "इह" इति। **कालो नाम**—कालाख्यं वस्तु, **इदंभावविशिष्टस्य**—

विशिष्टीकुर्वन् तत्संकोचात् अनित्यं संपादयति। आत्मनश्च चित्स्वभावत्वात् इदम्–इति प्रथनाभावेन विशेष्यत्वं नास्ति, विशेषणविशेष्यभावो हि योजकायत्तः, न च स्वप्रकाशे योजकान्तरम् अस्ति। स इत्थं ब्रुवाणः पर्यनुयुज्यते–'ज्ञानमपि' तर्हि स्वप्रकाशम् इति तत्रापि एषैव वार्ता इति तदपि कस्मात् न नित्यम्? न च द्वयोर्नित्ययोः कश्चित् संबन्धः, कार्यकारणभावो हि असौ नान्यः, तत आत्मनो ज्ञानं शक्तिः इति अवसन्नम् अदः। अथ न स्वप्रकाशं ज्ञानं तर्हि परस्यापि अदो न प्रकाशः, स्वप्रकाशरूपावेशनं हि असौ परस्य विदधत् बोधः प्रकाशो भवति परस्यापि, ततः स्वप्रकाशताशून्यो न असौ अर्थस्य प्रकाशः स्यात्, भावान्तरवत् ॥ ७ ॥

---

इदंभावावच्छिन्नस्य घटादेः। **विशेषणताम्**–विशेषणभावम्, **तम्**–इदंभावावच्छिन्नं घटादिकम्, **विशिष्टीकुर्वन्**—अविशिष्टं विशिष्टं संपादयन्, तस्मिन्-स्वरूपभूते काले, यः संकोचः–अवच्छेदः तस्मात्, **अनित्यं संपादयति**, "अयं घटो भवति" इति हि प्रयोगे इदंभावविशिष्टस्य घटस्य स्फुटं वर्तमानकालेन संकोचः, तदेवानित्यत्वं कालकृतसंकोचस्यैवानित्यत्वात्। ननु भवत्वेवं ततः किम् इत्यत आह "**आत्मनश्च**" इति। **इदमितिप्रथनाभावेन**–अहमितिस्फूर्तिविषयत्वमात्रात् सिद्धेन इदमितिज्ञानविषयत्वाभावेन, **विशेष्यत्वम्**— कालाख्यविशेषणविशिष्टत्वम्। कथं नास्तीत्यत आह "**विशेषण**" इति। **योजकायत्तः**— संबन्धकर्तुरायत्तः, न तु स्वाभाविकः। अन्यथा एक एकं प्रति विशेषणमपरं प्रति विशेष्य इति न स्यादिति भावः, अत एव चास्य संबन्धाभासत्वं कथयन्ति। ननु ततोपि किमित्यत आह "**न च**" इति। **योजकान्तरम्**–स्वप्रकाशादात्मनोऽन्यो योजकः। **सः**–उत्तरपक्षवादिरूपो नित्यात्मवादी, **पर्यनुयुज्यते**–पर्यनुयोगविषयतां नीयते। पर्यनुयोगमेव स्फुटीकरोति "**ज्ञानम्**" इति। **ज्ञानम्**–ऐश्वर्यभूता ज्ञानशक्तिः, **इति**— अतः कारणात्, **तत्रापि**—ज्ञानेऽपि, द्वितीयोऽपि इतिशब्दो हेतावेव। ननु भवतु तदपि नित्यमेवेत्यत आह "**न च**" इति। ननु

जडोप्यसौ इत्थम् अर्थस्य प्रकाशो भविष्यति—इति सांख्यमतम् आशङ्कते :—

**अथार्थस्य यथा रूपं धत्ते बुद्धिस्तथात्मनः।**
**चैतन्यम् ॥**

इह तावत् अर्थं जानामि—इत्यस्ति व्यवहारः। तत्र अर्थस्य प्रकाशः—इत्येतावानेव[1] परमार्थः। तत् न अर्थस्य स्वं रूपम्, सर्वं प्रति तथात्वप्रसङ्गात्, न कंचित्प्रति वा इति सर्वज्ञम् अज्ञं वा जगत् स्यात्। नापि अर्थे अन्यत एतद्रूपम् उपनिपतितम्, एष एव हि दोषः स्यात्। तत् नूनम् अन्यत्रैव अयं धर्मः तत्त्वान्तरे, तत्रापि कथम् अर्थस्य प्रकाशः स्यात् इति नूनं तत्र तत्त्वान्तरे सोऽर्थः प्रतिबिम्बत्वेन उपसंक्रामति। तत्

---

कथं न नित्ययोर्द्वयोः संबन्धः स्यादित्यपेक्षायामाह "**कार्ये**" इति। अग्रे स्वयमेव कार्यकारणभावमात्रस्य संबन्धत्वं साधयतीति इह नायस्तम्। ननु ततोपि किमित्यत्राह "**ततः**" इति। **अवसन्नम्**—नष्टम्। "**इति**" "**अदः**" इति योजना, द्वयोरपि समप्राधान्यादिति भावः। एतेन पूर्वार्धं गतव्याख्यम्। तथा च योजना। ज्ञानं च—ज्ञानशक्तिश्च आत्मवत् स्वरूपं चेद् भवेत्, तत्—तदा, अर्थात् तत् ज्ञानम्, अनित्यं किम्, अनित्यं न युक्तमिति भावः। तत्र चोक्त एव दोष इति भावः। अथवा आत्मवत् किमनित्यम्, यथात्मा किमनित्यो भवति तथेदमपि किमनित्यम्, नैवानित्यमिति भावः।

उत्तरार्धं व्याख्यातुं पक्षान्तरमाह "**अथ**" इति। **परस्यापि**- स्वव्यतिरिक्त—घटादेरपि, **अदः**-इदं ज्ञानम्, **न प्रकाशः** प्रकाशरूपो न भवेत्, प्रमातारमनपेक्ष्य स्वप्रकाशस्य दीपस्येव घटप्रकाशत्वादर्शनादिति[2] भावः। कुतो न प्रकाश इत्यत आह "**स्वप्रकाश**" इति। हि—यस्मात्, **बोधः**- ज्ञानम्, **परस्य**-घटादेः, स्वप्रकाशं

---

1. इत्येतावत्परमार्थः- K. S. S.
2. स्वप्रकाशस्य दीपस्येव घटप्रकाशत्वदर्शनात्—C.

तत्रान्तरं सत्त्वप्राधान्यात्[1] प्रतिबिम्बग्रहयोग्यं[2] तमसाऽऽच्छादितत्वात् सकलप्रतिबिम्बनतो व्यावर्तितम्, भागे रजसा तमसोऽपसारणात् किंचिदेव प्रतिबिम्बकं गृह्णाति, तदेव बुद्धितत्त्वम् उच्यते। अर्थप्रतिबिम्बग्रहश्च[3]

---

यद्रूपम्-निजस्वरूपम्, तत्र आवेशनम्-प्रवेशनम्, **विदधत्** कुर्वन्, **परस्यापि**-घटादेरपि, **प्रकाशो भवति**, प्रकाशाविष्टस्य घटस्य प्रकाशेन दीपस्यापि तत्प्रकाशत्वमेव। उपसंहारं करोति "**ततः**" इति। **असौ**-बोधः, **भावान्तरवत्**-बोधव्यतिरिक्तघटादिपदार्थवत् ॥ ७ ॥

अष्टमश्लोकस्यावतरणिकां करोति "**जडोप्यसौ**" इति।

अत्र टीका :-

**जडोऽपि**-अनित्यतादोषापातात् जडभावेनाङ्गीक्रियमाणोऽपि, **असौ**-बोधः, सांख्यमतमिदम्, तार्किकमतस्य निराकृतत्वादिति भावः। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**अथार्थस्य**" इति।

अत्र टीका :-

"**चैतन्यम्**" इत्यन्तं श्लोकखंडं व्याचष्टे "**इह**" इति। **तावत्**, नात्र कस्यापि विप्रतिपत्तिरित्यर्थः। "**तत्र**" इति। **तत्र**-तस्मिन्व्यवहारे, **इत्येतावानेव परमार्थः** अस्ति। इत्येतावान् कः? "**अर्थस्य प्रकाश**" इति। ज्ञानस्य प्रकाशमात्रसारत्वादिति भावः। **तत्**-प्रोक्तपरमार्थे तस्मिन्व्यवहारे "एतज्जानामि" इति शब्दवाच्यं ज्ञानम्। अत्र हेतुमाह "**सर्वम्**" इति। **तथात्व-प्रसंगात्**-ज्ञातत्वप्रसंगात्, न हि नीलमेकमेव प्रति नीलमिति भावः। पक्षान्तर-रीत्या हेत्वन्तरमाह "**न कंचिद्**" इति। समानन्यायत्वात् इति भावः। ननु तेनापि किमित्यत आह "**इति**" इति। **इति**-अतः कारणात्, प्रथम-पक्षाश्रयणे सर्वज्ञं द्वितीयपक्षाश्रयणे अज्ञमिति क्रमो ज्ञेयः। ननु एतदर्थस्य सहजं रूपं मा भवतु आगन्तुकं तु स्यादेवेत्यत आह "**नापि**" इति। **एतत्**-ज्ञानाख्यम्,

---

1. सत्त्वप्रधानत्वात्–K. S. S.
2. प्रतिबिंबोपग्रह–K. S. S.
3. प्रतिबिंबोपग्रहश्च–K. S. S.

**ज्ञानम् अस्य वृत्तिरूपं पूर्वव्यपदेशतिरोधायकदध्यादिपरिणामविलक्षण-परिणतिविशेषात्मकम् । एवम् 'अर्थस्य' तावत् 'रूपं बुद्धिः' धारयति ।**

---

**रूपम्**-स्वरूपम्, । **एष एव**-समनन्तरोक्त एव । न ह्यागन्तुकनैसर्गिकयोः स्वरूपयोर्भिन्नकार्यत्वम् इति भावः । तर्हि किं कार्यमित्यत आह "**तन्नूनम्**" इति । **अयं धर्मः**-ज्ञानाख्यो धर्मः, **प्रतिबिंबत्वेन**-प्रतिबिंबभावेन, **उपसंक्रामति**-लगति, इत्थंभावे तृतीया। ननु तत्तत्वं किं करोतीत्यत आह '**तत्**' इति । **तत्**-समनन्तरोक्तम्, प्रतिबिंबस्य ग्रहे-ग्रहणे, योग्यम्-उचितम्, **सत्त्वप्राधान्यात्**-सत्त्वगुणप्रधानत्वेन, लक्षणया निर्मलत्वादिति यावत् । ननु तर्हि कथं न तस्मिन् देशकालादिविप्रकृष्टमपि प्रतिबिंबति इत्यत आह "**तमसा**" इति । **तमसा**-तमोगुणेन, **आच्छादितत्वात्**-आवृतत्वात्, सकलस्य-देशकालादिविप्रकृष्टाविप्रकृष्टस्य समस्तवस्तुनः, प्रतिबिंबनतः-प्रतिबिंबग्रहणात्, **व्यावर्तितम्**-व्यावृत्तम् । ननु तर्हि कथं देशकालाद्यविप्रकृष्टं गृह्णाति इत्यत आह "**रजसा**" इति। **रजसा**-रजोगुणेन, **अपसारणात्**-निवारणात्, रजोगुणस्यैव प्रवृत्तिरूपत्वादेवमुक्तम् । **किंचिदेव**-अविप्रकृष्टमेव, यथा निःश्वासान्धो भागे तद्रहितो दर्पणः किंचिदेव प्रतिबिंबं गृह्णाति तथेति दृष्टान्तयोजना स्वयमेव कार्या। ननु तत्तत्त्वान्तरमेवंकारि भवतु तस्य तु नाम किमस्तीत्यत आह "**तदेव**" इति। सांख्यमते हि बुद्धेरेव ज्ञानकर्तृत्वम् । तदुक्तम् :-

"स्वच्छायां धियि संक्रामन् भावः संवेद्यतां कथम् ।
तया विना"

इति। ननु तर्हि ज्ञानं किमस्ति इत्यत आह "**अर्थ**" इति। अर्थस्य प्रतिबिंबग्रहः-प्रतिबिंबग्रहणम्, तद्रूपमिति यावत्, **ज्ञानम् । अस्य**-बुद्धितत्त्वस्य, **वृत्तिरूपम्**-वर्तनरूपम्, परिणामरूपमिति यावद्, भवति। एतेन

"बुद्धिर्ज्ञानमुपलब्धिः"[1]

---

1. This is a quotation from the न्यायसूत्र of गौतम where the sūtra runs as follows :-
बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्-गौ. न्या. सू. 1. 1. 15.

इयञ्च सत्त्वादीनां सुखदुःखमोहरूपतया[1] भोग्यत्वात् जडम् इति दर्पणवत् अप्रकाशम् । न च भोग्यस्य अप्रकाशस्य तद्विरुद्धभोक्तृतारूपप्रकाशात्मकस्वभावसंभवो युक्त्यनुपाती इति तद्विलक्षणेन भोक्त्रा भवितव्यम् । स च प्रकाशः—इत्येतावत्स्वभावः, स्वभावान्तरं हि अप्रकाशरूपं भोग्यं कथं भोक्तुः स्वभावतया संभाव्येत । स च प्रकाशमात्रस्वभावत्वेनैव यदि

इति तार्किकोक्तस्य बुद्धिज्ञानयोरेकत्वस्य निरासः कृतः। ज्ञानं कीदृशम्? पूर्वः—पूर्वकालीनः, यो व्यपदेशः—क्षीरेत्यादि नाम, तस्य तिरोधायको यो दध्यादिपरिणामः, दध्यवस्थायां क्षीरेति नाम न तिष्ठत्येव, ततो विलक्षणो यः परिणतिविशेषः—कुण्डलादिरूपः परिणामविशेषः, स आत्मा यस्य तादृशम्, यद्वशेन तार्किकास्तत्र बुद्धिशब्देनैव व्यवहरन्तीति भावः। उपसंहारं करोति "**एवम्**" इति। **धारयति**, प्रतिबिंबत्वेनेति शेषः। ननु यदि धारयति तर्हि अस्या अजडत्वमेवायातमित्यत आह "**इयञ्च**" इति । **सत्त्वादीनाम्**, प्रकृत्यादिमध्ये इत्यर्थः । **इयत्**—बुद्धिपर्यन्तं तत्त्वद्वयमपि, **सुखदुःखमोहरूपतया**—साम्यभावस्थितगुणत्रययुक्ततया,[2] **भोग्यत्वात्**—भोग्यतापातात्, जडं भवति, अन्येषु ग्राहकत्वेऽपि स्वग्रहणे परापेक्षत्वात्, '**इयत्**' शब्दः शेषस्य तत्त्वगणस्याजडत्वसंभावनाव्यावृत्तिपरः। फलितमाह "**इति**" इति। इति—अतः कारणात्, **दर्पणवत् अप्रकाशम्**-प्रकाशव्यतिरिक्तस्वभावं भवति। ननु तर्हि विश्वस्यान्धमूकतापातः स्यादित्यत आह "**न च**" इति। युक्तिमनुपततीति **युक्त्यनुपाती**, युक्त्यनुसारीति यावत्। **तद्विलक्षणेन**-जडाऽप्रकाशभिन्नेन, **भोक्त्रा**—पुरुषाख्येन भोगकर्त्रा, "**भवितव्यम्**" इति तर्करीत्या साधनं सांख्यानां चेतनविषये निश्चयशैथिल्यद्योतनार्थम्। **स च**-भोक्ता च, इत्येतावान् स्वभावो यस्य स **इत्येतावत्स्वभावः**, **स्वभावान्तरम्**—जडाऽप्रकाशरूपोऽन्यः स्वभावः, **संभाव्येत**—संभावयितुं शक्येत । **स च**-प्रकाशस्वभावो भोक्ता च, **प्रकाशमात्रस्वभावत्वेनैव**, बाह्यसाधनं विनै-

1. सुखदुःखमोहतया—K. S. S.
2. साम्यभावेन स्थितगुणत्रययुक्ततया—C.

विश्वस्य प्रकाशः, तर्हि विश्वं युगपदेव प्रकाशेत, घटप्रकाशोऽपि पटप्रकाशः स्यात् इति विश्वं संकीर्येत। स च अर्थात् अर्थप्रतिबिम्बात् तदाधाराच्च बुद्धितत्त्वात् अन्यः कथम् अर्थस्य प्रकाशः स्यात्, असंबन्धात्। तस्मात् बुद्धिरेव स्वच्छत्वात् प्रकाशप्रतिबिम्बमपि गृह्णाति[1]। ततः प्रकाशप्रतिबिम्बपरिग्रहमहिमोपनतप्रकाशावेशबुद्धितत्त्वावेशितप्रतिबिम्बकनीलाद्यर्थपर्यन्तसंक्रान्तेः प्रकाशावेशस्य अर्थः प्रकाशते इति सिद्धो व्यवहारः। तदेवं ज्ञानं जडबुद्धितत्त्वाव्यतिरेकात् जडमपि चित्प्रतिबिम्ब-

---

वेति भावः। ननु प्रकाशतां ततः किमित्यत आह **"घट"** इति, अन्यथा युगपत्त्वायोगादिति भावः। ननु ततोपि किमित्यत आह **"इति"** इति। **विश्वम्**-जगत्, **संकीर्येत**-संकरविषयतां गच्छेत्, ततश्च घटेऽपि पटव्यवहारः स्यादिति भावः। ननु स भोक्ता स्वयमर्थादिभावमागत्य प्रकाशो भवत्वित्यत आह **"स च"** इति। **स च**-भोक्ता च, **अर्थप्रतिबिंबात्**-ज्ञानात्, **तदाधारात्**-अर्थप्रतिबिंबाधारात्, **अन्यः**-व्यतिरिक्तस्वभावः, चेतनत्वादिति भावः, **असंबन्धात्**-संबन्धाभावन। फलितमाह **"तस्मात्"** इति। **स्वच्छत्वात्**-सत्त्वप्राधान्यकृतान्नैर्मल्यात्, **प्रकाशप्रतिबिंबम्**-प्रकाशस्वभावभोक्तृप्रतिबिंबम्, **"अपि"** शब्देनोक्तस्यार्थप्रतिबिंबस्य समुच्चयः। ननु गृह्णातु ततः किमित्यत आह **"ततः"** इति। **ततः**, यतः प्रकाशप्रतिबिंबमपि गृह्णाति ततः कारणादित्यर्थः, प्रकाशस्य-पुरुषस्य यः प्रतिबिंबपरिग्रहस्तस्य यो महिमा तेन उपनतः-प्राप्तः प्रकाशावेशो येन, यो हि यत्र प्रतिबिंबितो भवति स तत्र कृतावेशो भवति, तादृशं यद् बुद्धितत्त्वम्-महत्तत्त्वम्, तत्र आवेशितं प्रतिबिंबं येन तादृशो यो नीलाद्यर्थः स पर्यन्तो यस्याः तादृशी संक्रान्तिः-प्रतिबिंबस्फूर्तिर्यस्मिन् तादृशस्य, परंपरागतस्वाधिष्ठितबुद्धितत्त्वप्रतिबिंबितनीलाद्यर्थप्रतिबिंबयुक्तस्येति यावत्। **प्रकाशावेशस्य**-बुद्धावन्तर्गतस्य प्रकाशप्रतिबिंबस्य, न तु बिंबभूतस्य तटस्थस्य प्रकाशस्य, **अर्थः**-नीलादिपदार्थः, **प्रकाशते**, न केवलस्य बुद्धितत्त्वस्य, तस्य जडत्वात्, नापि पुरुषस्य, तस्योदासीन-

---

1. परिगृह्णाति-K. S. S.

योगात् विषयस्य प्रकाशः - इति ।

एतदेव तावत् अनुचितम्—यत् प्रकाशात्मा पुमान् बुद्धौ प्रतिबिम्बम् अर्पयति, समानगुणे बिम्बकापेक्षया च विमले प्रतिबिम्बसंक्रान्तिदर्शनात्, रूपवति आदर्शे घटरूपप्रतिबिम्बवत्; आत्मबुद्ध्योश्च प्रतिवैलक्षण्यम्, आत्मापेक्षया च न बुद्धिर्विमला तत् भवतु तावत् एतत् - इति 'अथ' शब्देन सूचयति ।

किंतु प्रतिबिम्बवादेनापि न किंचित् प्रतिसमाहितं भवेत् - इति दर्शयतिः—

**अजडा सैवं जाड्ये नार्थप्रकाशता ॥ ८ ॥**

चैतन्यप्रतिबिम्बयोगे यदि तावत् तत्प्रतिबिम्बकमपि मुख्यं प्रकाश-रूपमेव न भवति, तेनापि न किंचित् कृतं स्यात्, न हि प्रतिबिम्बितवह्नि-पुञ्ज आदर्शो दाह्यं दहेत् । अथ मुख्यप्रकाशरूपमेव तत्प्रतिबिम्बकम्, तत्

---

त्वात् । सांख्यमतमुपसंहरति "**तदेवम्**" इति । चितः–भोक्तुः यः प्रतिबिंबः–बुद्धितत्त्वे संक्रान्तिः, तस्य योगः–संबन्धः तस्मात्, दृश्यते चाग्निसंयोगेनायसोऽग्निकार्यमिति न काप्यनुपपत्तिरिति भावः । एतेन पूर्वार्धं गतव्याख्यम् ।

तथा च योजना । "अथ" प्रश्ने, बुद्धिर्यथा बहिरर्थस्य रूपं धत्ते–प्रतिबिंबत्वेन गृह्णाति, तथा अन्तः आत्मनः–भोक्तुः, चैतन्यम्–स्वरूपभूतां चेतनताम्, धत्ते, तथा च जडत्वेपि तस्या अर्थप्रकाशनं युक्तमेवेति भावः ।

"**अथ**" शब्दसूचनीयं वस्तु कथयति "**एतदेव**" इति । एतच्छब्दस्याकांक्षां पूरयितुमाह "**यत**" इति । अनुचितत्वे हेतुमाह "**समान**" इति ।

"**चैतन्यम्**" इति पदेन न्यूनम् उत्तरार्धं व्याख्यास्यंस्तदभिप्रायन्तावदाह "**किन्तु**" इति । अर्थाक्षिप्तेन "**किन्तु**" शब्देन प्रतिसमाधानत्वं सूचितम्, **प्रतिसमाहितम्**–प्रतिसमाधानविषयतां नीतम् । केन दर्शयतीत्यत आह "**अजडा**" इति । उत्तरार्धमुपन्यस्य व्याचष्टे "**चैतन्य**" इति ।

तर्हि बुद्धेरव्यतिरिक्तम् इति मुख्यप्रकाशरूपैव बुद्धिर्जाता इति। यतो विरुद्धधर्माध्यासात् भीरुभिः एतत् कल्पितम्। स एव पुनः जाज्वल्यमानं निजम् ओजो जृम्भयति, ततश्च सा बुद्धिरेव चिन्मयी स्यात्, किं पुरुषेण। एवम् अर्थप्रतिबिम्बकद्वारेण अर्थमयी—इत्यपि आयातो विज्ञानवादः। कुत एतस्याः[1] तद्रूपत्वम्—इति, पूर्वकारणपरम्परातः—इति उत्तरं वाच्यम्। एवं सैव चेत् चिद्रूपा, प्राग्वत् नित्यताप्रसङ्गः; न चेत् चिद्रूपस्यापि नित्यता, तर्हि आत्मा न नित्यः कश्चिदस्ति, यस्य ज्ञानं नाम

---

**प्रतिबिंबकम्**–आत्मचैतन्यप्रतिबिंबः। किन्न कृतं स्यादित्यत आह "**न हि**" इति। तदुक्तम् :–

"चिद्धर्मश्च मृषा बुद्धौ"

इति। द्वितीयं पक्षं प्रत्याख्यातुमाह "**अथ**" इति। **तत्**–प्रतिबिंबकम्, "**इति**" शब्दः प्रमेयपरिसमाप्तौ। ननु जायतां ततः किम् इत्यत आह "**यतः**" इति। **विरुद्धधर्माध्यासात्**–जडायां बुद्धौ चैतन्यप्राप्तिरूपात्, **एतत्**–प्रतिबिंबसाधनम्,। **स एव**–विरुद्धधर्माध्यास एव, **जाज्वल्यमानम्**–अत्यर्थं ज्वलत्। ननु जृम्भयतु ततः किमित्यत आह "**ततश्च**" इति। **किं पुरुषेण**, बुद्धौ मुख्यप्रकाशांगीकारात् व्यर्थस्य तस्य कल्पना निष्प्रयोजनैवेति भावः। दोषान्तरमप्याह "**एवम्**" इति। **अर्थमयी**–अर्थरूपा, प्रकृतत्वाब्दुद्धेरकथनम्, **विज्ञानवादः**–विज्ञानवादिबौद्धमताश्रयणम्, तेपि हि निराकारस्य ज्ञानस्य अर्थेन साकारत्वं कथयन्ति। विज्ञानवादत्वमेव साधयति "**कुतः**" इति। **एतस्याः**–बुद्धेः, **तद्रूपत्वम्**–अर्थरूपत्वम्, "**इति**", अत्र प्रश्ने इत्यर्थः, **पूर्वकारणपरंपरातः**, पूर्वसिद्धाऽर्थरूपकारणपंक्तेरित्यर्थः, **वाच्यम्**–अवश्यं वक्तव्यम्, अन्यस्योत्तरस्याभावादिति भावः। इदं चोत्तरं विज्ञानवादिनामेव ज्ञेयम्। समनन्तरोक्तं तृतीयं दोषमप्याह "**एवम्**" इति। एवं सति "**सैव**" बुद्धिरेव। **चेत्**,

---

1. कुत एवास्याः–K. S. S.

शक्तिः स्यात् इति ज्ञानमात्रमेव अस्ति। योऽर्थप्रकाशरूपो बोधो यश्च विकल्पस्मृत्यादिरूपः तावता अर्थव्यवहारसिद्धेः—इति प्रसङ्गविपर्यय-लाभः[1] 'ज्ञानं च चित्स्वरूपं चेत्' इत्यादेः श्लोकद्वयस्य तात्पर्यम् ॥ ८ ॥

एवं ज्ञानं परीक्ष्य क्रियां परीक्षते:—

**क्रियाप्यर्थस्य कायादेस्तत्तद्देशादिजातता ।**
**नान्याऽदृष्टेः　　　　　　　　॥**

इह परिस्पन्दरूपं तावत् गच्छति, चलति, पतति—इत्यादि यत् प्रतिभासगोचरम्[2], तत्र गृहदेशगतदेवदत्तस्वरूपात् अनन्तरं बाह्यदेशवर्ति-

---

चिद्रूपस्यापि—चिद्रूपत्वेनाङ्गीक्रियमाणस्य बुद्धितत्त्वस्यापि, समानन्यायत्वादिति भावः। किंभूत आत्मेत्यपेक्षायामाह "यस्य" इति । **ज्ञानं नाम**—ज्ञानाख्या, न हि शक्तिमतोऽभावे शक्तेर्युक्ततेति भावः। सिद्धमभीप्सितमाह "इति" इति। ज्ञानमात्रमेव न तु तत्कर्तृभूतो नित्य आत्मास्तीति भावः। कथं तन्मात्रमेव युक्तमित्यत आह "योऽर्थ" इति । **बोधः**—निर्विकल्पज्ञानम्, विकल्पः—सविकल्पज्ञानम् । समनन्तरोक्तश्लोकद्वयस्याभिप्रायं सिद्धत्वेनाह "इति" इति । **इति**—अतः कारणात्, **प्रसंगविपर्ययलाभः**—प्रसंगविपर्ययलाभरूपम्, **तात्पर्यम्**—तात्पर्यार्थः ॥ ८ ॥

अथ नवमश्लोकस्यावतरणिकां करोति "एवम्" इति ।

अत्र टीका :—

**परीक्षते**—परीक्षाविषयीकरोति, तत्पल्लवभूतत्वादिति भावः । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**क्रिया**" इति ।

अत्र टीका :—

"**नान्यादृष्टेः**" इत्यन्तं श्लोकपिंडं व्याचष्टे "इह" इति। **प्रतिभासगोचरम्**, प्रतिभाविषयीभूतमित्यर्थः । **तत्र**—तस्मिन् प्रतिभासे, **तत्स्वरूपा**-

---

1. प्रसंगविपर्ययलाभे—K. S. S.
2. प्रतिभासगोचरः—K. S. S.

देवदत्तस्वरूपम्—इत्येतावत् उपलभ्यते, न तु तत्स्वरूपातिरिक्तां कांचित् अन्यां क्रियां प्रतीमः। 'देवदत्तो दिनं तिष्ठति' इत्यत्र तु प्रभातकालाविष्टदेवदत्तस्वरूपं ततः प्रहरकालालिङ्गिततत्स्वरूपम्—इत्यादि भाति, 'दुग्धं परिणमते' इत्यत्र मधुरवस्तुरूपम् अम्लवस्तुरूपम् द्रवरूपं कठिनरूपम्—इत्यादि। एवं तद्देशतया तत्कालतया तदाकारतया च भाव एव भाति। सादृश्याच्च तत्र प्रत्यभिज्ञा भिन्नेऽपि कायकेशनखादाविव। देशाकारान्यत्वे तु कालान्यत्वम् अवश्यंभावि देशकालान्यत्वेऽपि, स्वरूपस्यैव देशत्वात्, कालभेदे च स्वरूपभेदात्, देश-

---

**तिरिक्ताम्**—देवदत्तस्वरूपातिरिक्ताम्, **प्रतीमः**—विद्मः। देशोपहितां क्रियां प्रदर्श्य कालोपहितां प्रदर्शयति "**देवदत्त**" इति। आदिशब्देन मध्यान्हकालाद्यालिंगिततत्स्वरूपग्रहणम्। आकारोपहितां क्रियां प्रदर्शयति "**दुग्धम्**" इति। मधुरद्रवत्वे दुग्धस्य, अम्लकठिनत्वे दध्नः इति योज्यम्, आदिना सारग्रहणाग्रहणयोग्यत्वादेर्ग्रहणम्। इत्यादि भातीति संबन्धः। उक्तमर्थमुपसंहरति "**एवम्**" इति। **भाव एव**—देवदत्तकायदुग्धादिरूपपदार्थक्षण एव। ननु तर्हि कथं सोऽयमिति प्रत्यभिज्ञा दृश्यते इत्यत्राह "**सादृश्य**" इति। **प्रत्यभिज्ञा**—सोयं देवदत्त इत्यादिरूपं प्रत्यभिज्ञानम्। "**नखादौ**" इति। आदिशब्देन दीपशिखादेर्ग्रहणम्, प्रतिक्षणं भिन्नापि हि दीपशिखा सादृश्यात्सेयमिति प्रत्यभिज्ञायते। ननु कथमेकस्य देवदत्तकायरूपस्य भावस्य देशकालभेदेन भिन्नत्वं येन भेदप्राणसादृश्यनिमित्तकप्रत्यभिज्ञाविषयत्वं कथयसि इत्यत आह "**देशाकार**" इति। "तु", यथार्थे, **देशाकारान्यत्वे**—देशाकारयोर्भिन्नत्वे, यथा **कालान्यत्वमवश्यंभावि**, न हि देवदत्तस्य गृहे बहिश्चावस्थानं युगपत् संभवति, दुग्धादेर्वा दध्याद्यवस्था, तथा **देशकालान्यत्वेपि**, अर्थादाकारान्यत्वमवश्यंभावि भवति विशेषणकृतभेदाश्रयणात्, दृश्यते च नीलसितोत्पलयोर्विशेषणकृतो भेद इति न कोपि विरोधः, आकारभेदे तद्भेदः स्फुटतर एवेति नात्र काप्यनुपपत्तिः, कालाकारभेदेन अवश्यं देशभेद इति तदकथनम्। देशकाला-

**कालाकारा आकार एव यद्यपि पर्यवस्यन्ति, तथापि स्थूलदृष्ट्या अस्ति भेदः इति ते हि भेदेन बौद्धैरुच्यन्ते–इति तात्पर्यम् । एवं प्रत्यक्षेण न दृश्यते क्वचित् क्रिया, तदभावात् न तत्पूर्वकेण अनुमानेन, कार्यं च ग्रामप्राप्त्याद्युत्तरक्षणरूपं तद्देशवस्तुरूपादि इति कार्यान्यथानुपपत्त्यापि न सा कल्प्या[1] । एवं प्रत्यक्षानुमानाभ्यां तस्या अदृष्टिः–इति साधकप्रमाणाभाव उक्तः ।**

**बाधकमपि आहः—**

---

न्यत्वेऽप्याकारान्यत्वमिति वा पाठः । ननु देशकालयोरपि आकाराव्यभिचारेण आकारान्तर्गतत्वात् एकस्य आकारस्य साम्राज्ये केवलेन आकाररूपेण देशेनापि सर्वाक्षेपे किमिति कालाकारग्रहणपरेण आदिशब्देनेत्यत आह "**स्वरूपस्यैव**" इति । **स्वरूपस्यैव**–मूर्तेरेव, **देशत्वात् कालभेदे च स्वरूपभेदात् देशकालाकाराः यद्यप्याकारे पर्यवस्यन्ति**–विश्राम्यन्ति, **तथापि स्थूलदृष्ट्या**–आपातदृष्ट्या, **भेदः अस्ति, इति**–अतः कारणात्, **बौद्धैः**–बुद्धितत्त्वविश्रान्तैर्वादिभिः, **ते भेदेनोच्यन्ते** । आकारस्य आकारे पर्यवसानं राहोः शिर इतिवत् ज्ञेयम् । अत्र च देशस्य भानादेव आकारत्वमुक्तम्, कालस्य तु निराकारत्वेन एतद्भेदे तद्भेदस्याव्यभिचारेण आकारत्वं साधितमिति न काप्यनुपपत्तिरित्युपसंहारं करोति "**एवम्**" इति । **तत्पूर्वकेण**–प्रत्यक्षपूर्वकेण । ननु क्रियाकार्येण ग्रामप्राप्त्यादिना तत्कल्पनां करिष्याम इत्यत आह "**कार्यञ्च**" इति । आदिशब्देन ओदनादेर्ग्रहणम् । "**तद्देश**" इति । आदिशब्देन कालस्य ग्रहणम्, **सा**–क्रिया, **कल्प्या**–कल्पयितुं शक्या । "**अदृष्टेः**" इति पदस्य अर्थं स्फुटयितुमाह "**एवम्**" इति । आचार्येण कर्त्रा **एवम्**–समनन्तरोक्तप्रकारेण, **तस्याः**–क्रियायाः "**अदृष्टेः**" इति सूत्रस्थपदेन **प्रत्यक्षानुमानाभ्याम्**–प्रत्यक्षानुमानभावेन, साधकप्रमाणस्य अभावः **साधकप्रमाणाभाव उक्तः** ।

---

1. The paragraph ends with the word "कल्प्या" in the K.S.S. edition. But, as the Vimarśinī on the portion of the kārikā given above ends with the word 'उक्तः', we begin the next paragraph with the word 'बाधकम्' as printed.

**........न साप्येका**

**क्रमिकैकस्य चोचिता ॥ ६ ॥**

तत्र पूर्वापररूपता क्षणानां विकल्पबुद्ध्यानुसंधानात्,[1] न तु स्वात्मनि किंचित् पूर्वम् अपरं वा, वस्तुमात्रं हि तत्। अतो विकल्पप्राणितं पूर्वापरीभूतत्वं क्रमरूपता क्रियायाः किंचित् क्षणं[2] न वस्तु स्पृशति, ते हि

इत्थंभावे तृतीया। एतेन **'अदृष्टेः'** इत्यन्तं गतव्याख्यम्।

तथा च योजना। क्रियापि कर्त्री कायादेरर्थस्य, आदिशब्देन परिणामादि-क्रियाविषयस्य दुग्धादेर्ग्रहणम्, तेन कायदुग्धादेः पदार्थस्य ते ते च ते देशादयः तेषु जातता–तद्वैशिष्ट्यकृतोऽन्यः प्रादुर्भावो भवति, नवीनो न भवति। कुतः? अदृष्टेः–प्रत्यक्षानुमानाभ्यामनुपलब्धेरिति।

**"न सा"** इति श्लोकखंडस्यावतरणिकां करोति **"बाधक"** इति। **बाधकम्**-क्रियाया नाशकं प्रमाणम्, **"अपि"** शब्दः समुच्चये। अवतरणिकां[3] कृत्वा **"न सा"** इति श्लोकखंडमुपन्यस्य व्याचष्टे। **"न सा"** इति। **तत्र**–तस्यां क्रियायाम्, **पूर्वापररूपता**–पूर्वापरीभावः, **क्षणानाम्**–क्रियाक्षणानाम्, **विकल्प-बुद्ध्यानुसंधानात्**–विकल्पज्ञानसंपादितेनानुसंधानेन, **किंचित्**-कोपि क्षणः, **वस्तुमात्रम्**-पूर्वापरभावास्पर्शि वस्तुस्वरूपमात्रम्, **तत्**–सन्तत्या वर्तमानो यथास्वं क्षणसमूहः, बौद्धमते काल एव नास्ति का कथा तत्कृतयोः परत्वापरत्वयोरिति भावः। फलितमाह **"अतः"** इति। **विकल्पप्राणितम्**–विकल्पाध्यवसितम्,

1. विकल्पबुद्ध्यानुसंधानात्। These words are not found in the K. S. S. edition.
2. क्रियाया लक्षणं न वस्तु किंचित् स्पृशति–K. S. S.
3. Instead of "एवमवतरणिकां कृत्वा", which occurs so regularly elsewhere, we have only "अवतरणिकां कृत्वा" here. The words "अत्र टीका", used regularly to begin the टीका on 'अभिनव' s commentary, are also missing here.

क्षणा न अन्योन्यस्वरूपाविष्टाः इति कथम् 'एका' क्रिया, क्रमो हि भेदेन व्याप्तः अभिन्ने तदभावात्, भेदस्य विरुद्धम् ऐक्यम् इति कथं 'क्रमिका एका च' इति स्यात् ? अथ एकत्र आश्रयेऽवस्थानात् एका, तत्रापि तत्क्षणातिरिक्तो न कश्चित् आश्रयोऽनुभूयते, क्षणा एव हि प्रबन्धवृत्तयो भान्ति । किं च तथाभूतैर्भिन्नदेशकालाकारैः क्रियाक्षणैराविष्ट आश्रयः कथमेकः स्यात् ? अत एव 'देवदत्तोऽयम्, स एव ग्रामं प्राप्तः' इति सादृश्यात् भवन्ती प्रत्यभिज्ञा न ऐक्यं वास्तवं गमयितुमलम् ॥ ९ ॥

---

पूर्वापरीभूतत्वस्य पर्यायमाह "**क्रमरूपता**" इति । **किंचित् क्षणम्**–क्रियायाः किमपि क्षणम्, **वस्तु**–वस्तुभूतम्, बौद्धमते क्षणानामेव वस्तुत्वात् सन्ततेस्तु वैकल्पिकत्वात्, **न स्पृशति**, न हि विकल्पसिद्धयोरपारमार्थिकयोरन्योन्यं संबन्धो युक्तः, द्विचन्द्रस्यापि चन्द्रत्वस्पर्शप्रसंगादिति भावः । कथं न स्पृशतीत्याह "**ते हि**" इति। **स्वरूपाविष्टाः**-स्वरूपश्लेषयुक्ताः, प्रत्येकं स्वकालमात्रे स्थितत्वात्, अन्यथा क्षणत्वायोगात् । फलितमाह "**इति**" इति। **इति**–अतः कारणात्, **एका**–क्षणसन्ततिरूपा । एकत्वं प्रत्याख्याय तदवष्टंभेन क्रमिकत्वमपि समुच्चयेन प्रत्याख्यातुमाह "**क्रमो हि**" इति। **तदभावात्**–क्रमाभावात्, न हि व्यापकाभावे व्याप्यसत्ता युक्तेति भावः। "**एकस्य**" इत्यनेन सूचितमेकाश्रयत्वं प्रत्याख्यातुमाह "**अथ**" इति । एकाश्रयत्वकृतमेकत्वं[1] प्रतिसमाधातुमुत्तरमाह "**तत्र**" इति। तेभ्यः क्षणेभ्योऽतिरिक्तः **तत्क्षणातिरिक्तः**। कथं नानुभूयत इत्यत आह "**क्षणा एव**" इति। **प्रबन्धवृत्तयः**-अविच्छिन्नस्थितयः। एवशब्देन क्षणसन्ततिरूपस्य क्रियास्वरूपस्य भानव्यावृत्तिः। भिन्ना ये देशकालाकाराः तैः, तद्रूपैरित्यर्थः, **आविष्टः**–आवेशविषयीकृतः, **आश्रयः**–देवदत्तकायादिरूपः। फलितमाह "**अत एव**" इति । **वास्तवम्**–परमार्थभूतम्, **अलम्**–समर्थम्, केशनखादिवदिति दृष्टान्तयोजना स्वयमेव कार्या, इति ॥ ९॥

---

1. एकाश्रयत्वकृतं प्रतिसमाधातुमाह–C.

एवं ज्ञानं क्रियां च परीक्ष्य, यस्मिन् सति ते संबद्धे सर्वज्ञत्वसर्वकर्तृतारूपैश्वर्यप्रसाधनाय प्रभवतः, तं संबन्धं ध्वंसयितुं तद्विषयं प्रमाणाभावं तावदाहः—

**तत्र तत्र स्थिते तत्तद्भवतीत्येव दृश्यते।**
**नान्यन्नान्योऽस्ति संबन्धः कार्यकारणभावतः ॥१०॥**

मृत्पिण्डे सति स्तूपकः, तत्र सति शिविको यावत् घटः इत्येवं भावक्षणा एव उपलभ्यन्ते, न अधिकं किंचित् प्रत्यक्षेण अवभासते, नापि अनुमानेन—इति क्रियायामिव वाच्यम्। सर्वत्र आधाराधेयभावादौ

---

अथ दशमश्लोकस्यावतरणिकां करोति "**एवम्**" इति।

अत्र टीका :—

ते-ज्ञानक्रिये, **ध्वंसयितुम्**-प्रत्याख्यातुम्, **तद्विषयम्**[1]-संबन्धविषयम्, एतयोः **तावत्**-प्रथमम्, यस्मिन् संबन्धे सति इति योजना। एताम्[2]वतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**तत्र**" इति।

अत्र टीका :—

**स्तूपकः**—घटनिर्माणार्थमुपात्तस्य मृत्पिण्डस्य कुलालेन प्रथमं क्रियमाणो रचनाविशेषः, **शिविकः**—उन्नतवस्तुरूपो रचनाविशेषः, शिविकः कीदृशः? **यावद् घटः**, घटभावं तावत् अवस्थायीत्यर्थः। ननु भवतु स्तूपकादिरूपं रचनात्रयं किं तत इत्याह "**इत्येवम्**" इति। **इत्येवम्**—अनेन प्रकारेण, **भावक्षणा एव**—स्तूपकादिरूपाः पदार्थक्षणा एव, एवशब्दव्यावर्त्यं स्वयमेव कथयति "**नाधिकम्**" इति। **अधिकं किंचित्**, घटकारणतया स्थितं

---

1. तद्विषयं संबन्धम्—C. This text, as it stands, does not seem to be correct. "संबन्धम्" is the meaning of "तद्" only. The correct text, therefore, seems to be as printed.
2. The use of "एताम्" instead of "एवम्" is very unusual.

**अयमेव पन्थाः—पृथग्रूपकुण्डबदरक्षणानन्तरं निरन्तरात्मकविशिष्टकुण्डबदरोदयः—इति । अयमेव च भावो भावान्तरेण सह नियतपूर्वापरतया विकल्पेन व्यवह्रियमाणः कार्यकारणभावः—इति अभिधीयते । न च ज्ञानक्रियाभ्यां सह आत्मनः कार्यकारणभावः आत्मनस्तत्कार्यत्वाभावात्, ज्ञानस्य च स्वसामग्रीकार्यत्वात्, क्रियायाश्च अभावात् इति न ज्ञानक्रियासंबन्धो यतो ज्ञातृत्वकर्तृत्वे स्याताम् ॥ १० ॥**

---

किमपीत्यर्थः । **इति**–एतत्, **क्रियायामिव वाच्यम्**, यथा क्रियानिर्णये उक्तम् 'प्रत्यक्षं न कापि क्रियाऽस्ति तत एव तत्पूर्वकेणानुमानेनापि' इति तथेहापि वक्तव्यमित्यर्थः । ननु किं कार्यकारणभाव एवायं न्याय उत सर्वत्रेत्यत आह **"सर्वत्र"** इति । **पन्थाः**–सरणिः, मार्गः । तमेव दर्शयति **"पृथग्रूप"** इति । निरन्तरात्मकः–संबद्धरूपः । ननु तर्हि कथं कार्यकारणभावप्रसिद्धिरस्तीत्यत आह **"अयमेव च"** इति । **अयमेव च भावः**–मृत्पिंडादिरूपः पदार्थ एव, **भावान्तरेण सह**–घटादिरूपेणान्येन पदार्थेन सह, **पूर्वापरतया**–पूर्वापरभावेन, मृदः पूर्वत्वात् घटस्य परत्वात् इति भावः । नन्वयमेव संबन्धः आत्मनोऽपि कर्तृत्वज्ञातृत्वाभ्यां सह भवत्वित्यत आह **"न च"** इति । **स्वसामग्रीकार्यत्वात्**–आलोकेन्द्रियादिरूपनिजसामग्रीकार्यत्वात् । **यतः**–यस्मात् ज्ञानक्रियासंबन्धात् ।

अयमत्र पिंडार्थः । तत्र तत्र–तस्मिन् तस्मिन् मृत्पिंडादिरूपे भावक्षणे सति, तत्तत्–स्तूपकादिरूपः स स भावक्षणोऽस्ति, इत्येव–एतावन्मात्रमेव दृश्यते, अन्यत्–अतो व्यतिरिक्तं कार्यकारणरूपं किंचिन्न दृश्यते । ननु[1] कार्यकारणभावव्यतिरिक्तोऽन्यः कोपि संबन्धो भवत्वित्यत आह "नान्योस्ति" इति, कार्यकारणभावतोऽन्यः संबन्धो नास्ति तस्यायुक्तत्वादिति भावः ॥ १० ॥

---

1. ननु अन्यः कार्यकारणभावव्यतिरिक्तोऽन्यः कोऽपि संबन्धः–C. One "अन्य" seems to be unnecessary. Hence, we have omitted it as printed.

एवं प्रमाणं पराकृत्य, संबन्धे बाधकं सामान्यविशेषमुखेन निरूपयतिः —

**द्विष्ठस्यानेकरूपत्वात् सिद्धस्यान्यानपेक्षणात् ।**
**पारतन्त्र्याद्ययोगाच्च तेन कर्तापि कल्पितः ॥११॥**

संबन्धस्तावत् परस्परप्राप्तिरूपो द्वयोः प्राप्तिभाजोरेकस्तिष्ठति— इति सामान्यलक्षणम् । तच्च कथम् ? न हि एकत्र विश्रमिताशेषशरीरसारोऽन्यत्र विश्रमितुम् अलम् स्वरूपभेदप्रसङ्गात् । एतेन संयोगसमवायौ तन्मूलाश्च अन्येऽपि संबन्धा बाधविधुरां धुरम् अध्यारोपिता मन्तव्याः । योऽपि चेतनेषु तत्कल्पनया च अचेतनेषु पारतन्त्र्यात्मा संबन्धो व्यवह्रियते, तत्र

---

एकादशस्य श्लोकस्यावतरणिकां करोति "**एवम्**" इति ।

अत्र टीका :–

**प्रमाणम्**, साधकमिति भावः, **बाधकम्**-नाशकं प्रमाणम्, सामान्यम्—सामान्यलक्षणम्, विशेषः–विशेषलक्षणम्, तयोर्मुखेन-द्वारण, **निरूपयति**, निर्णयविषयतां नयतीत्यर्थः । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । "**द्विष्ठस्य**" इति ।

अत्र टीका :–

**तावत्**, नात्र विप्रतिपत्तिरित्यर्थः । **प्राप्तिभाजोः**-कुण्डबदरादिरूपयोः तन्तु-पटादिरूपयोश्च परस्परश्लेषभाजोः विषये, **एकः**-एकरूपः, **सामान्यलक्षणम्**, प्रकृतत्वात् संबन्धस्य, **तच्च**-सामान्यलक्षणञ्च, **कथम्**, इह न संभवतीत्यर्थः । **एकत्र**-एकस्मिन् वस्तुनि कुण्डादिरूपे तन्त्वादिरूपे वा । "**अनेक**" इति सूत्रस्थं पदं व्याचष्टे "**स्वरूप**" इति । **तन्मूलाः**-संयोगसमवायमूलाः, **अन्ये**–कार्यकारणभावादयः संबन्धाः, **धुरम्**-अवस्थाम् । सामान्यमुखेन निरूप्य विशेषमुखेनापि निरूपयति "**योऽपि**" इति । **तत्कल्पनया**-चेतनकल्पनया, **पारतंत्र्यात्मा**-अन्योन्यपारतंत्र्यरूपः । **तत्र**-तस्मिन् संबन्धे, **सिद्धस्य**-चेतनस्य, **सिद्धत्वादेव**, न हि सिद्धस्य पारतंत्र्यं युक्तम् असिद्धत्वापातात्

**सिद्धस्य न पारतन्त्र्यम् अस्ति सिद्धत्वादेव, असिद्धस्य नतरां निःस्वरूपस्य ताद्धर्म्यायोगात् । एवमपेक्षायामपि वाच्यम् । द्वे च रूपे कथं शिलष्यतः ? द्वयोरेकत्वानुपपत्तेः; एकत्वे वा कः श्लेषः ? तस्मात् ज्ञानसंबन्धात् 'ज्ञाता' इति यथा विकल्पकल्पितोऽर्थो न वस्तु तथा क्रियासंबन्धात् 'कर्ता' इत्यपि कल्पनामात्रम्—इति पूर्वपक्षस्य[1] संक्षेपः । इति शिवम्[2] ॥ ११ ॥ आदितः १६ ॥**

**इति श्रीमदाचार्याभिनवगुप्तविरचितायां प्रत्यभिज्ञासूत्रविमर्शिन्यां ज्ञानाधिकारे पूर्वपक्षविवृतिर्नाम द्वितीयमाह्निकम् ॥ २ ॥**

---

इति भावः । **असिद्धस्य**-अचेतनस्य, **नतराम्**, अतिशयेन नास्तीत्यर्थः । **एवम्**-पारतंत्र्यवत्, **अपेक्षायाम्**-सूत्रे आदिशब्दगृहीते अपेक्षारूपे संबन्धे । एवं संबन्धस्य सूत्रोक्तं स्वरूपाऽसंभवं व्याख्याय विषयाऽसंभवं स्वबुद्ध्याऽऽह "**द्वे च**" इति । **द्वे च**-कुण्डबदरादिरूपे तन्तुपटादिरूपे वा, हेतुमाह "**द्वयोः**" इति । तर्ह्येकत्वमेव तयोर्भवत्वित्यत्राह, "**एकत्वे वा**"इति । **कः**, न कोपीत्यर्थः । पञ्चम्युक्तस्य हेतु-त्रयस्य पूर्वश्लोकस्थं संबन्धनास्तित्वसाधनं प्रति हेतुत्वं ज्ञेयम् । पूर्वं कृतेन ज्ञातृत्वबाधेन सह संबन्धासंभवमुखेन समनन्तरसाधितं कर्तृत्वबाधं समुच्चिनोति "**तस्मात्**" इति । "**तेन**" इत्यस्य सूत्रस्थस्य "**तस्मात्**" इत्यनेन व्याख्या, **न वस्तु**-परमार्थभूतो न भवति, एतेन सूत्रस्थस्य "**अपि**" शब्दस्य समुच्चयसूचकत्वं द्योतितम् । प्रमेयमुपसंहरति "**इति**" इति । **इति**, एवमित्यर्थः, **पूर्वपक्षस्य**-बौद्धादि-सिद्धान्तरूपस्य, **संक्षेपः**, संक्षिप्ततया कथनमित्यर्थः । "**इति**" शब्दः समाप्तौ, "**शिव**" शब्दो मंगलवाचकः परतत्त्वसूचनपरश्च । इति शिवम् ॥ ११ ॥

इति श्रीभास्करकण्ठविरचितायां श्रीप्रत्यभिज्ञासूत्रविमर्शिनीटीकायां[3] श्रीभास्कर्याख्यायां ज्ञानाधिकारे द्वितीयमान्हिकं समाप्तम् ॥

---

1. इति पूर्वपक्षः–K. S. S.
2. इति शिवम् is missing in the K. S. S. edition.
3. "श्रीप्रत्यभिज्ञासूत्रविमर्शिनीटीकायाम्" is missing in the manuscript, but being very necessary, has been added.

# अथ तृतीयमाह्निकम् ।

विना येन न किंचित्स्यात्समस्ता अपि दृष्टयः ।
अनस्तमितसंबोधस्वरूपं तं स्तुमः शिवम् ॥

---

## अथ तृतीयमाह्निकम् ।

ओम् । न[1] किंचित् पंचयोग्यं स्यान्न विना यं प्रभुं बहिः ।
ज्ञानानां मूलमाद्यं तं तेषां चित्ते शिवं स्तुमः ॥

अथ ज्ञानाधिकारे तृतीयाह्निकव्याख्याया निर्विघ्नपरिसमाप्तये समस्ताह्निकाभिप्रायसूचकं स्वेष्टदेवताप्रह्वीभावपरं मंगलश्लोकमुपनिबध्नाति **'विना येन'** इति ।

अत्र टीका :–

**येन**–उत्तरार्धे वक्ष्यमाणस्वरूपेण उपादानभूतेन, **विना, समस्ता अपि,** अपि–शब्दः साकल्ये, नीलसुखादिरूपबाह्याभ्यन्तरभावविषयाः, **दृष्टयः**–परिमितज्ञानानि, **किंचित्**–वस्तु, **न स्यात्,** मृदा विनेव घटादयो न भवेयुः। **वयं तम्,** अनस्तमितः, यथातथाकल्पितस्य स्वान्तस्यापि साक्षिरूपतया स्थितत्वात्,[2]

---

1. The text here is obscure. If the meaning intended to be conveyed is the same as that of Abhinava's introductory verse, it is not clear how it can come out of the verse, as it stands. For, even if "पंच" is taken as equal to 'प्रपंच', the double negative would still be a difficulty.

2. परमार्थतः तद्रहितः—C. These two words are found immediately after "साक्षिरूपतया स्थितत्वात्" । It is difficult to connect them with what precedes or follows, unless we take the word 'तत्' to stand for 'अस्तमय' The text, without them, yields quite a good meaning.

**एतस्मिन् पूर्वपक्षे यदुक्तं स्मृतेः संस्कारमात्रादेव सिद्धिः—इति, तदेव दूषयितुं**

**'सत्यं ...................।'**

**इत्यादि**

**'...ज्ञानस्मृत्यपोहनशक्तिमान् ॥'**

**इत्यन्तं श्लोकसप्तकम्। क्रियायां संबन्धे च दूषणोद्धरणं द्वितीये क्रियाधिकारे भविष्यति। यत्तु परेण व्यतिरिक्तं ज्ञानं काणादसांख्यादिदृष्टौ**

---

यः संबोधः—विषयोपरागरहितं शुद्धज्ञानम्, तदेव स्वम्—अन्याननुयायि, रूपम्—स्थितिर्यस्य तादृशम्, **शिवम्**-प्रकाशरूपं सुखकारित्वाख्यशिवशब्दप्रवृत्तिनिमित्तधर्मयुतं किमप्यनाख्यं वस्तु परमात्माख्यम्, **स्तुमः**-स्वाभीष्टसिद्धये स्तुतिद्वारेण परामृशामः। एतेन समस्तबोधनिधेः कस्याप्यान्तरस्य तत्त्वस्य स्तुतिरिति द्योतितम्, तथा चानेनैवान्यत्रोक्तम्:—

"य एष विततस्फुरद्विविधभावचक्रात्मकः परस्परविभेदवान् विषयतामुपागच्छति।

यदेकमयभावनांशत एत्यभेदान्वयं स शंभुरशिवापहो जयति बोधभासां निधिः।"

इति। अनेन चात्राह्निके उत्तरपक्षतया स्थितस्य स्मृतिप्रभृतिज्ञानसर्गस्य सारत्वेन संबन्धहेतुत्वेन च साधनं क्रियते इति सूचितम्।

एवं मंगलं संपाद्य समस्तव्यस्तत्वाभ्यामस्याह्निकस्य शिष्यसमाश्वासनार्थं तात्पर्यकथनं तावत् करोति "**एतस्मिन्**" इति।

अत्र टीका:—

**एतस्मिन**—समनन्तराह्निकोक्ते श्लोकसप्तके, भवतीत्यध्याहृतेन संबन्धः। ननु क्रियायाः संबन्धस्य च यन्निराकरणं कृतं तत् किन्न दूष्यते येन "**तदेव**" इत्येवकारः स्थापित इत्यत आह "**क्रियायाम्**" इति। नन्वेवं भवतु यत्तु सप्तमाष्टमाभ्यां श्लोकाभ्यां शाक्यमतमाश्रित्य काणादशास्त्रे सांख्यशास्त्रे चात्म-

निराकृतं तदभिमतमेव ग्रन्थकृत इति तत् दूषणान्तरमेव[1]। तत्र श्लोकद्वयेन ज्ञानस्य स्वसंवेदनरूपतया अनुभवस्य स्मृतौ अप्रकाशत्वं[2] दर्शितं संस्कारजत्वेऽपि। ततः श्लोकद्वयेन स्मृतेः भ्रान्तित्वम् आशङ्कापूर्वकं पराकृत्य तृतीयेन प्रसङ्गात् सर्वाध्यवसायानामपि भ्रान्तित्वाशङ्का शमिता। ततः सत्यपि संस्कारे स्मृत्यनुपपत्तौ व्यवहारोच्छेदः–इति श्लोकेनोक्त्वा स्वपक्षे तदुपपत्तिः—इति श्लोकेनोक्तम्—इति तात्पर्यम्। ग्रन्थार्थस्तु निरूप्यते।

---

व्यतिरिक्तं ज्ञानं निरस्तं तदवश्यं निराकरणीयमित्यपेक्षायामाह "यत्तु" इति। **परेण**–शाक्येन, **व्यतिरिक्तम्**, आत्मन इति शेषः, **ग्रन्थकृतः**–उत्पलदेवस्य, **दूषणान्तरम्**, अभीष्टत्वेन प्रतिसमाधानयोग्येभ्यो दूषणेभ्यो व्यतिरिक्तमित्यर्थः, श्रीशिवनयेऽपि ज्ञानस्यात्मशक्तित्वेन तद्व्यतिरिक्तत्वाभावादिति भावः। एवं श्लोकसप्तकरूपस्याह्निकस्य सामस्त्येनाभिप्रायमुक्त्वा व्यस्तत्वेनापि कथयति "तत्र" इति। **तत्र**–श्लोकसप्तकमध्ये, **ज्ञानस्य**–सामान्यतया स्थितस्य समस्तबोधजातस्य, **अनुभवस्य**–विशेषतया स्थितस्य अनुभवाख्यज्ञानस्य, **स्मृतौ**[3] **अप्रकाशत्वम्**–स्मृत्या प्रकाशाभावः। **तृतीयेन**, समनन्तरश्लोकद्वयापेक्षया, आद्यतस्तु पंचमेनेति भावः। **श्लोकेनोक्त्वा**, षष्ठेनेत्यर्थः। **तदुपपत्तिः**–व्यवहारोपपत्तिः, **श्लोकेनोक्तम्**, सप्तमेनेत्यर्थः। **तात्पर्यम्**, श्लोकसप्तकस्य व्यस्तस्याभिप्राय इत्यर्थः। ग्रन्थार्थनिरूपणं प्रतिजानीते "**ग्रन्थ**" इति।

---

1. दूषणान्तम्—K. S. S.
2. अप्रकाश्यत्वम्—K. S. S.
3. In the manuscript of the Bhāskarī "स्मृतौ" comes after "समस्तबोधजातस्य" which is a part of the explanation of 'ज्ञानस्य' But it seems to be a scribal mistake. Because in the Bhāskarī 'अप्रकाशत्वम्' is explained as 'स्मृत्या प्रकाशाभावः' The position of स्मृतौ, therefore, according to Bhāskara, seems to have been before 'अप्रकाशत्वम्'. Hence we have altered the Bhāskarī, as printed.

**सत्यं किंतु स्मृतिज्ञानं पूर्वानुभवसंस्कृतेः ।**
**जातमप्यात्मनिष्ठं तन्नाद्यानुभववेदकम् ॥ १ ॥**

पूर्वपक्षमध्यात् मया तावत् बहु अङ्गीकर्तव्यम्—इति 'सत्यम्' इत्यनेन दर्शितम् । यत्तु न अङ्गीकर्तव्यं तत् दूष्यते—इत्येतदुक्तं 'किंतु' इत्यनेन विशेषाभिधायिना । इह स्मृतौ विषयमात्रस्य प्रकाशो न समर्थनीयो वर्तते यः संस्कारादेव सिद्ध्येत्, किंतु अनुभवप्रकाशेन विना 'तत्' इत्येवंरूपा

---

प्रथमं श्लोकमवतरणिकां विनैवोपन्यस्य व्याचष्टे । "**सत्यम्**" इति ।

अत्र टीका :–

सूत्रस्थस्य "**सत्यम्**" इति पदस्याभिप्रायं वक्तुमाह "**पूर्वपक्ष**" इति । **बहु**–व्यतिरिक्तज्ञाननिराकरणादिकं वस्तुजातम्, "**दर्शितम्**" इति, अस्य पदस्याङ्गीकारवाचकत्वादिति भावः । तर्हि सर्वमेवाङ्गीकर्तव्यमिति "**बहु**" शब्दोपादानं व्यर्थमेवेत्यत आह "**यत्तु**" इति । अनेन "**किन्तु**" इत्यस्याभिप्राय उक्तः । "**किन्तु**" इत्यस्य वाच्यार्थमाह "**विशेष**" इति । विशेषः–पूर्वस्मात्पक्षाद् व्यतिरेकः । "**स्मृतिज्ञानम्**" इत्यादि व्याख्यातुमारभते "**इह**" इति । **इह**–प्रत्यभिज्ञाशास्त्रे, **समर्थनीयः** । तर्हि किमिह समर्थनीयं वर्तते इत्यपेक्षायां समर्थनीयं वस्तु बहुवक्तव्यतया वाक्येन प्रकटीकरोति "**किन्तु**" इति । "**किन्तु**" इति विषयमात्रप्रकाशसमर्थनपक्षात्पक्षान्तरद्योतनपरम् । किन्त्वित्यनेनाक्षिप्तं वस्तु कथयति "**अनुभव**" इति । **अनुभवप्रकाशेन विना**–पूर्वानुभवसंवेदनेन विना, **कथं स्यात्**, तद्विषयेणैव विषयवत्त्वान्न युक्ता स्यादिति भावः । मास्तु इत्यत आह "**कथं च**" इति । **तया**–तदित्येवंरूपया स्मृत्या, **अभिलाषेण व्यवहारः**–कांक्षया क्रियमाणः पदार्थव्यवहारः । कुतो न स्यादित्यत आह "**अनुभव**" इति । **अस्य**–व्यवहारविषयस्य भावस्य, **ततः**–सुखसाधनतानिश्चयानन्तरम्, बहुकालेनेत्यर्थः, **उपादानम्**–ग्रहणम्, तस्यैव भावस्येति शेषः । अत्र च मध्ये स्मृतिरवश्यमाश्रयणीया, न हि सुखसाधनतास्मृत्यभावे कोपि भावस्योपादानं करोति । ननु पूर्वानुभववेदनमपि तत्रोपादानपर्यन्तकार्यवत् संस्कारादेव

कथं स्मृतिः स्यात्, कथं च तया विना अभिलाषेण[1] व्यवहारः स्यात् ?
अनुभवेन हि अस्य सुखसाधनता निश्चिता, तत उपादानम्; तत्र पूर्वानु-
भवजनितात् संस्कारात् एतावत्[2] जातम् । यद्यपि तज्ज्ञानं विषयेण न
जनितम्, तथापि तद्विषयम्—इति । न च एतावता किंचित्, आत्मनिष्ठे
स्वप्रकाशज्ञाने विषयस्येव अनुभवस्य प्राच्यस्य अप्रकाशात् ॥ १ ॥

---

जायतामित्यत आह " तत्र " इति । पूर्वानुभवः-सुखसाधनतानिश्चयः, तेन जनितात,
**संस्कारात्**–सुखसाधनतासंस्कारात्, **एतावत्**–उपादानपर्यन्तं कार्यजातम्, न तु
पूर्वानुभववेदनमपीति भावः। ननु तत् स्मृतिज्ञानं किंविषयमित्यत आह
" **यद्यपि** " इति। **विषयेण**–पूर्वानुभवविषयेण, पुरःस्थत्वाभावादिति भावः।
**तद्विषयम्**–पूर्वानुभूतविषयम्, संवेद्यमानस्याप्रत्याख्येयत्वादिति भावः, "**इति**"
शब्दः प्रमेयपरिसमाप्तौ। ननु तद्दर्यैतेनैवास्याः पूर्वानुभवप्रकाशकत्वमायातमित्यत
आह "**न च**" इति। **एतावता**–तद्विषयेण विषयवत्त्वेन, **न किंचित्**, किमपि
न सम्पन्नमित्यर्थः। कथं न किंचिदित्यपेक्षायां हेतुमाह " **आत्म** " इति।
**आत्मनिष्ठे**–स्वप्रकाशनपरे, अत एव **स्वप्रकाशज्ञाने**–स्मृतिज्ञाने, **प्राच्यस्य**–
आद्यस्य, **अप्रकाशात्**–अस्फुरणात्, अत्र च स्वानुभवः साक्षीति भावः ॥ १ ॥

---

1. The K. S. S. edition gives "पेन" within brackets as an alternative to "षेण"
2. एतावत् जातम्–यद्यपि तज्ज्ञानम्—K.S.S. Bhāskara makes a full stop after "जातम्" and interprets "एतावत्" as "उपादानपर्यन्तं कार्यजातम्" । This involves attribution of a view to the Siddhāntin which he does not hold, as the preceding sentence shows : "किंतु अनुभव-प्रकाशेन विना तत् इत्येवंरूपा कथं स्मृतिः स्यात्, कथं च तया विना अभिलाषेण व्यवहारः स्यात् ।" We, therefore, think that the K. S. S. text as given above, which takes the sentence beginning with "यद्यपि" as an explanation of "एतावत्", is correct.

ननु संस्कारजत्वादेव प्राच्यमनुभवमपि विषयीकुरुतां स्मृतिः-इत्याशङ्क्याह :—

**दृक्स्वाभासैव नान्येन वेद्या रूपदृशेव दृक् ।**
**रसे संस्कारजत्वे[1] तु तत्तुल्यत्वं न तद्गतिः ॥ २ ॥**

'दृक्' ज्ञानम्, तच्च जडात् विभिद्यते स्वप्रकाशैकरूपतया, जडो हि प्रकाशात् पृथग्भूतो वक्तव्यः, तेन दृक् 'स्वाभासा,' आभासः प्रकाशमानता

---

अथ द्वितीयश्लोकस्यावतरणिकां करोति "**ननु**" इति।

अत्र टीका :–

**संस्कारजत्वात्**–पूर्वानुभवसंस्कारोत्पन्नत्वात्, **प्राच्यम्**–आद्यम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**दृक्**" इति ।

अत्र टीका :–

सूत्रस्थं "**दृक्**" इति पदं व्याचष्टे "**ज्ञानम्**" इति । **तच्च**–ज्ञानञ्च, **जडात्**–ज्ञेयाख्यात् जडवस्तुनः। व्यतिरेकेणाप्येतदेव साधयति "**जडो हि**" इति। **वक्तव्यः**–वक्तुं योग्यः । फलितमाह "**तेन**" इति। "**स्वाभासा**" इति पदं व्याचष्टे "**आभासः**" इति। "**आभास**" इत्यवयवं व्याचष्टे "**प्रकाश**" इति। **प्रकाशमानता**–बाह्यसंवन्धिप्रकाशकर्तृत्वम्, "**स्व**" इत्यवयवं व्याचष्टे "**रूपम्**" इति। **अव्यभिचारि**–अन्याननुयायि, एतेन प्रकाशकाख्यमस्य स्वरूपमुक्तम्। अत्र च स्वः–स्वरूपभूतः आभासो यस्याः सा स्वाभासेति सामानाधिकरण्येन विग्रहो बहुव्रीहिमाश्रित्य कार्यः। अथ वैय्यधिकरण्येन बहुव्रीहिमाश्रित्य स्वप्रकाशकाख्यमप्यस्या रूपं कथयति "**स्वस्य च**" इति। **स्वस्य**–दृगाख्यस्य आत्मनः, आभासनम्–आभासः, रूपम्–स्वरूपं यस्याः सेति। अत्र तु स्वः स्वरूपभूतः स्वस्याभासो यस्याः सेति तंत्रेण स्वशब्दस्य द्विर्योजना। अथवा स्वरूपमित्येकस्य स्वशब्दस्य लोपः, रूपकाश्रयणे तु पुल्लिङ्गताप्रसङ्गः।

---

1. संस्कारजत्वं तु–K. S. S.

सा स्वं रूपमव्यभिचारि यस्याः, स्वस्य च आभासनं रूपं यस्याः । सत्यपि बाह्ये तच्छरीरसंक्रान्तं न प्रकाशनं ज्ञानस्य रूपं भवितुमर्हति, परप्रकाश-नात्मकनिजरूपप्रकाशनमेव हि स्वप्रकाशत्वं ज्ञानस्य भण्यते । ननु स्वाभासमेव सत् तत् अनुभवज्ञानं स्मरणे भासिष्यते, न—इत्याह 'नान्येन वेद्या' । परत्र यदि दृक् भासेत तर्हि न सा स्वाभासा, इदमेव हि स्वप्रकाशस्य लक्षणम्—स्वयं हि यदि प्रकाशेत तदा परेण सह

ननु दृक् स्वाभासा भवतु तथापि बाह्यविषयतामहिमोपनतबाह्योपरागवशो-पागतं जडत्वमस्या दुर्निवारमेवेत्यत आह **"सत्यपि"** इति, परमार्थविचारे बाह्यमेव नास्तीत्यपिशब्दाभिप्रायः । **तच्छरीरसंक्रान्तम्**–बाह्यस्वरूप-लग्नम्, तदुपरक्तमिति यावत् । **प्रकाशनम्**–प्रकाशः । पुनः किन्तस्य स्वरूप-मित्यत आह **"पर"** इति । परप्रकाशनात्मकम्–बाह्यप्रकाशरूपं यत् निजम्–स्वम्, रूपम्, तस्य प्रकाशनम्–प्रकाशः, तदेव न तु तत्र कर्तृत्वम्, तथात्वेऽपसिद्धान्ता-पत्तेः, ज्ञानस्य स्वप्रकाशत्वं नाम स्वरूपमिति शेषः । **भण्यते**–कथ्यते । तथा च बाह्यस्पर्शो दूरत एवास्तामिति भावः । **"एव"** शब्दार्थव्याख्याभूतस्य **"नान्येन वेद्या"** इत्यस्य व्याख्यां करोति **"ननु"** इति । **स्मरणे**-स्मृतिविषये, **"भासिष्यते"** इति कर्मकर्तृलकारः । एतेन **"अन्येन"** इत्यस्यावतरणिका कृता । अत्रोत्तरमाह **"नेत्याह"** इति । केन आह इत्यपेक्षायां वाक्यमुपन्यस्य व्याचष्टे **"नान्येन"** इति । स्पष्टत्वेन निगदव्याख्यातमेतत । कुतो न वेद्या इत्यत आह **"इदमेव"** इति । **"परत्र"** इति । **सा**–दृक्, कुतो[1] न सा स्वाभासा इत्यत आह **"नान्यत्र वेद्या"** इत्यस्य नान्यत्र भास्या इति पर्याय इति सूचितम् । स्वप्रकाशस्य–**स्वप्रकाशस्य**–स्वाभासस्य, **लक्षणम्**–असाधारणो धर्मः । एतेन स्वाभासस्य किमित्यपेक्षायामाह **"स्वयम्"** इति । प्रथमं तस्य स्वयं–

1. In the manuscript before us, the word 'लक्षणम्' together with its explanation comes immediatey after '**सा दृक्**' but it seems to be a scribal mistake. Its proper place seems to be as printed.

**असंबन्धात् संबन्धप्राणा कथं 'परत्र' इति सप्तमी[1] संगच्छताम्; तथा च रूपज्ञानेन 'रसे दृक्' रसविषयं ज्ञानं न वेद्यते, एवं हि चक्षुषैव रसः फलतो गृहीत एव स्यात्। ननु यदि न आभाति स्मरणेऽनुभवः किं तर्हि संस्कारेण कृतं स्यात्, रूपज्ञानं न रसज्ञानजात् संस्कारात् जातम्, तत् कथम् अयं प्रसङ्गः, तस्मात् संस्कार एव भवत्संभावितदोषभङ्गाय प्रभवेत्। नैतत्, यतो हि असौ तत्संस्कारसंस्कृतात् समनन्तरप्रत्ययात् उत्थितः**

प्रकाशरूपत्वेन प्रकाशापेक्षैव नास्ति, यदि तु प्रकाशते स्वयं स्वेन स्वं प्रति, न तु स्वव्यतिरिक्तेन प्रमाणेन स्वव्यतिरिक्तं प्रमातारं प्रति, तदा परेण सह **असंबन्धात्**—संबन्धाभावात्, **संबन्धप्राणा**—संबन्धमूला, **परत्रेति सप्तमी**—परशब्दाग्रस्थत्रल्प्रत्ययवाच्या सप्तमीविभक्तिः, **कथं संगच्छताम्,** विषयाभावात् अन्येनेतितृतीयाविभक्तिव्याख्यात्वेन स्थिता तृतीयापर्यायत्वेन न संगच्छते इत्यर्थः। परत्रेतिसप्तमीप्रयोगाविषयत्वमेव स्वप्रकाशलक्षणम् इति वाक्यार्थः। **"रूपदृशेव दृक् रसे"** इति वाक्यं व्याख्यातुमाह **"तथा च"** इति। **"तथा"** शब्दः इवशब्दवाच्योपमाद्योतकः। यथा रूपज्ञानेन रसज्ञानं न वेद्यते स्वप्रतीतिप्रसिद्धत्वात् तथा स्मृत्यापि पूर्वानुभवो न वेद्यते इत्यर्थः। ननु यदि वेद्येत तर्हि किं भवेदित्यत आह **"एवं हि"** इति। **फलतः**, न तु साक्षात्, रूपज्ञानेन रसज्ञाने गृहीते तद्विषयस्य रसस्यापि रूपग्राहकनेत्रविषये ग्रहणमर्थायातमेव स्यादिति भावः। **"संस्कारजत्वे तु तत्तुल्यत्वम्"** इति व्याख्यातुमवतरणिकां करोति **"ननु"** इति। **अयं प्रसंगः**—रूपज्ञानेन रसविषयज्ञानाभासनरूपा अनिष्टापत्तिः। प्रश्नमुपसंहरति **"तस्मात्"** इति। भवता-उत्तरपक्षवादिना त्वया, संभावितो यो दोषः—स्मृत्यसंभवाख्यः, तस्य भंगाय—नाशाय, **प्रभवेत्**—समर्थो भवेत्। उत्तरमाह **"नैतत्"** इति। कुत इत्यपेक्षायामाह **"यतो हि"** इति। तत्संस्कारेण—आद्यानुभवसंस्कारेण, संस्कृतात्—स्मृत्युत्पादने समर्थीकृतात्, एतेन "संस्कारजत्वे"

1. The Vimarśinī here is a little obscure. Space permitting, we will deal with it in the Introduction.

**स्मृतिबोधः, तेन तत्सदृशो भवतु शाखासंनिवेश इव पूर्वसंनिवेशतुल्यः, न तु यो यत्संस्कारात् जातः स तस्य वेदनस्वभावो भवति—इति युक्तम् । सदृशत्वस्यापि गतिरवगमः कथम् ? न हि अनुभवज्ञानं सादृश्यं गमयति, नापि स्मृतिज्ञानम्, परस्परम् असंवेदने द्वयनिष्ठसादृश्याध्यवसायायोगात्, अन्यस्य च तदुभयवेदनरूपस्य अभावात् इति संस्कारात् परं सविष-**

---

इति निमित्तसप्तमीति द्योतितम् । अथवा संस्कारजत्वे इत्यस्य स्थाने "संस्कारजत्वम्" इति पाठः । **समनन्तरप्रत्ययात्**—संस्कारोद्बोधकसदृशज्ञानात्, यदुक्तम्:—

"सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः"

इति । सदृशेन हि सदृशज्ञानमेवात्रेष्टम्, स्मृतिबीजं च संस्कार एव इति । **तत्सदृशः**—पूर्वानुभवसदृशः, **शाखासन्निवेशः**—शाखारचना, अन्यथाकृता हि शाखा मुच्यमाना संस्कारेण पुनः पूर्वरचनयैवावतिष्ठते, सदृशत्वं चात्र एकविषयताकृतं ज्ञेयम् । **"न तद्गतिः"** इति व्याचष्टे **"न तु"** इति । "तत्तुल्यत्वेन"[1] इति पाठे सूत्रे अनुक्तोपि तुशब्दः युक्तत्वेनाध्याहार्यः । "तस्य-पूर्वानुभवस्य, गतिः—वेदनम्, तद्गतिः" इति विग्रहमाश्रित्यायमर्थः । अस्यैवार्थान्तरमाह **"सदृशत्व"** इति । "तस्य-तुल्यत्वस्य, गतिः—अवगमः" इति विग्रहेणायमर्थो ज्ञेयः । कुतो न गतिरित्यत आह **"न हि"** इति । **अनुभवज्ञानम्**—पूर्वमनुभवस्वरूपं ज्ञानम्, **न गमयति,** गतत्वादिति भावः, **"नापि स्मृतिज्ञानम्"** इत्यत्र हेतुमाह **"परस्परम्"** इति । **असंवेदने**—समनन्तरसाधिते, वेदनामविशतीत्यर्थः । ननु अन्यः कोपि सादृश्यं गृह्णात्वित्यत आह **"अन्यस्य"** इति । **'अभावात्'** इत्यत्र भवन्मते इति शेषः, एतन्मते तु आत्मनः तदुभयवेदनरूपत्वमस्त्यवेति न कोपि विरोधः । प्रमेयमुपसंहरति **"इति"** इति । **इति**—अतः कारणात्, **परम्**—केवलम् **सविषयतामात्रम्**—पूर्वानुभवविषयेण विषयसहिततामात्रम्, **अस्य विषयस्य**—स्मृतिविषयस्य । प्रमेय-

---

1. If we adopt this reading, the second half of the kārikā would run as follows:

रसे संस्कारजत्वे न तत्तुल्यत्वेन तद्गतिः ।

यतामात्रं स्मृतेः सिद्धम्, न तु अनुभवविषयत्वम्, नापि अस्य विषयस्य पूर्वानुभवविषयीकृतत्वम्—इति निश्चय एषः ॥ २ ॥

ननु यदि स्मृतिज्ञाने अनुभवस्य सत्यतः प्रकाशः स्यात्, तन्मुखेन च तद्विषयस्य, तदा भवेत् भवदुक्तेरवकाशः, यावता स्मृतिर्विकल्परूपत्वात् केवलमप्रकाशमानमेव अनुभवं तद्विषयं च अध्यवस्यति, तत् इयं भ्रान्ति-स्वभावा, तत्र कोऽयं निर्बन्धः ? तदेतत् दर्शयति शङ्क्यमानत्वेनः—

**अथातद्विषयत्वेऽपि स्मृतेस्तदवसायतः ।**
**दृष्टालम्बनता भ्रान्त्या ... ... ... ... ॥**

न तद्दर्शनं नापि तद्विषयः स्मृतेर्विषयः, तथापि तु उभयम् अध्यवसीयते, भ्रमरूपतया स्मृतेः ।

---

मुपसंहरति "**इति**" इति । **एषः**—समनन्तरोक्तं वस्तु ।

एवमत्र योजना । दृक्-ज्ञानम्, स्वाभासा एव—स्वप्रकाशा एव भवति, अन्येन वेद्या न भवति, का इव ? रसे दृक् इव, यथा रसे दृक् रूपदृशा वेद्या न भवति तथेत्यर्थः । संस्कारजत्वे तु तत्तुल्यत्वं भवति, तद्गतिः—पूर्वानुभवावगमस्तु न भवति, अथ च तद्गतिः तत्तुल्यत्वावगमोपि न भवतीति ॥ २ ॥

अथ तृतीयश्लोकस्यावतरणिकां करोति "**ननु**" इति ।

अत्र टीका :—

**तन्मुखेन**-अनुभवप्रकाशद्वारेण, **तद्विषयस्य**-आद्यानुभवविषयस्य, **अध्यवस्यति**—उल्लिखति, न तु गृह्णाति । एतेन फलितं वस्त्वाह "**तदियम्**" इति । **भ्रान्तिस्वभावा**—भ्रान्तिरूपा, भ्रान्तेर्विकल्परूपत्वादिति भावः । **तदेतत्**-समनन्तरोक्तं वस्तु, **शंक्यमानत्वेन**—शंकाविषयत्वेन, अत्र श्लोके एतदेव वस्तु शंकते इत्यर्थः । एवमवतरणिकां कृत्वा श्लोकमपन्यस्य व्याचष्टे । "**अथ**" इति ।

अत्र टीकाः—

**तद्दर्शनम्**—पूर्वोनुभवः, **स्मृतेर्विषयो न** भवति, **तद्विषयः**—पूर्वानुभव-विषयोऽपि स्मृतेर्विषयो न भवति । यद्येवं तर्हि स्मृतिः कथन्तत्र व्यापारं करोति

एतत् निराकरोति:—

**तदेतदसमञ्जसम् ॥ ३ ॥**

अत्र कारिकया उपपत्तिम् आह:—

**स्मृतितैव कथं तावद्भ्रान्तेश्चार्थस्थितिः कथम् ।**
**पूर्वानुभवसंस्कारापेक्षा च किमितीष्यते ॥ ४ ॥**

अनुभूतस्य अनुभवप्रकाशितस्य विषयस्य अप्रमोषोऽनपहार: तथैव प्रकाशनं यत् एतत् स्मृते: [1]आत्मीयं रूपं तत् तथाप्रकाशनाभावे विघटेततमाम् ।

---

इत्यत आह "**तथापि**" इति । **अध्यवसीयते**—अध्यवसायविषयतां नीयते, स्मृत्येति शेषः । अत्र हेतुमाह "**भ्रम**" इति ।

"**तदेतत्**" इति वाक्यस्यावतरणिकां करोति "**एतत्**" इति । अवतरणिकाविषयीकृतं वाक्यमुपन्यस्यति "**तदेतत्**"इति । निगदव्याख्यातमेतत् ।। ३ ।।

अथ चतुर्थश्लोकस्यावतरणिकां करोति "**अत्र**" इति ।

अत्र टीका :–

**अत्र**—असमंजसत्वविषये, **कारिकया**—श्लोकेन, **उपपत्तिम्**—युक्तिम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । "**स्मृतितैव**" इति ।

अत्र टीका :–

"**अनुभूतस्य**" इति पदं स्वयमेव व्याचष्टे "**अनुभव**" इति । **विषयस्य**—घटादेः । "**अप्रमोष:**" इति पदं स्वयमेव व्याचष्टे "**अनपहार:**" इति । अस्यैव पर्यायान्तरमाह "**तथैव**" इति । **तथैव प्रकाशनम्**—पूर्वानुभवानुगुण्येन स्फुरणम्, तदिति स्फूर्तिरिति यावत्, इदमिति ग्रहणे हि नवीनमेव ग्रहणम् । **आत्मीयं रूपम्**—निजं स्वरूपम्, **तत्**–आत्मीयं रूपम्, **तथाप्रकाशनाभावे**,–प्रमोषरूपे इदमिति स्फुरणे सति, **विघटेततमाम्**—अतिशयेन विघटेत । भ्रान्तौ तु 'इदम्' इति प्रकाशनम् अवश्यंभावि एव, अन्यथा भ्रान्तित्वायोगात्, अतः भ्रान्तेः स्मृतित्वं न युक्तमिति भावः । एतेन "**स्मृतितैव कथं तावद् भ्रान्तेः**"

---

1. आत्मीयं रूपं तथाप्रकाशनाभावे–K. S. S.

**किं च भ्रान्तौ असद्वा आत्माकारो वा प्रख्याति, न तु तया अर्थः स्वीक्रियते तस्य अप्रकाशनात् इति तया अर्थो न व्यवस्थापित एव। प्रकाशनात्मा हि व्यवस्थापना, ततश्च स्मरणादभिलाषेण[1] कथम् अर्थविषयो व्यवहारः? न च तदप्रकाशने संस्कारजत्वेन किंचित् कृत्यम्, तद्धि सादृश्यं लब्धुम् अवलम्ब्यते; न च अनुभवेन विषयप्रकाशनात्मना स्मृत्यभिधानाया भ्रान्तेः किंचिदपि सादृश्यम् अस्ति, सर्वथा विषयमस्पृशन्त्याः॥ ४॥**

---

इत्यन्तं गतव्याख्यम्। शिष्टस्य पूर्वार्धस्य व्याख्यां करोति "**किं च**" इति। **भ्रान्तौ**—भ्रमे, **असत्**, असत्ख्यातिवादिपक्षे[2], आत्मैव **प्रख्याति**। यदुक्तम्:—

"यदन्तर्ज्ञेयतत्त्वं तद् बहिर्वदवभासते"

इति। न तु **तया**—स्मृत्या, **अर्थः**—बाह्यार्थः, **स्वीक्रियते**—गृह्यते, **तस्य**—अर्थस्य, **अप्रकाशनात्**—अस्फूर्तेः। फलितमाह "**इति**" इति। **इति**—अतः कारणात्, **तया**—स्मृत्या, **न व्यवस्थापितः**—स्थितियुक्तो न कृतः, **व्यवस्थापना**—अर्थस्थितिः। एतेनात्र वाक्ये सूत्रस्थं "**भ्रान्तेः**" इति पदं पंचम्यन्तत्वेन योजनीयमिति सूचितम्। अस्यैव वाक्यस्य द्वितीयमप्यर्थमाह "**ततश्च**" इति। **ततश्च**—भ्रान्तिरूपात् स्मरणाच्च, **अभिलाषेण व्यवहारः**—अभिलाषपूर्वको व्यवहारः, उपादानरूपा व्यवहृतिरिति यावत्, **कथं** स्यात्, न हि भ्रमसिद्धस्य व्यवहारविषयत्वं दृष्टम् अननुभवादिति भावः। एतेन सूत्रस्थस्य "**अर्थस्थितिः**" इत्यस्य अर्थव्यवहारो वाच्यम् इति सूचितम्। उत्तरार्धं व्याचष्टे "**न च**" इति। **तदप्रकाशने**-अर्थाग्रहणे। कथं न कृत्यमित्यत आह "**तत्**" इति। **तत्**-संस्कारजत्वम्, **सादृश्यम्**—पूर्वानुभवसदृशत्वम्, **सर्वथा विषयमस्पृशन्त्याः**—भ्रान्तित्वांगीकारे स्तोकमपि विषयस्य स्पर्शमप्राप्तवत्याः, एतेन

---

1. अभिलापेन–K. S. S.
2. The Bhāskarī here requires emendation. Could it have been: **असत्**, असत्ख्यातिवादिपक्षे, **आत्माकारः**-आत्मैव, **प्रख्याति**?

**ननु योऽनुभवो यश्च तद्विषयः स यतः तया अध्यवसीयते, ततः अंशात् सादृश्यम् अनुभवेन स्मृतेः, तत्सिद्धये च संस्कारपरिग्रहः। 'अध्यवसीयते' इति किम् उच्यते? 'प्रकाश्यते' इति चेत् न भ्रान्तित्वम्; 'न प्रकाश्यते' इति चेत् पुनरपि विषयो न स्पृष्ट एव अनया इति सादृश्यमिति[1] शब्दगडुमात्रम्, तदेतत् दर्शयितुमाहः—**

स्तोकं विषयस्पर्शो स्मृतेर्विद्यत एवेति सूचितम्। तदुक्तम्:–

"स्मृतिरपि द्विविधा यथार्था अयथार्था च"

इति॥४॥

अथ पंचमश्लोकस्यावतरणिकां करोति "**ननु**" इति।

अत्र टीका:–

**अनुभवः**, पूर्वकालीन इति भावः। **तद्विषयः**–अनुभवविषयः, **तया**–भ्रान्तित्वेन कल्प्यमानया स्मृत्या, **अध्यवसीयते**–उल्लिख्यते, **ततः**-अध्यवसायाद्धेतोः, **तत्सिद्धये**-सादृश्यसिद्धये। अत्रोत्तरं दातुं प्रश्नं करोति "**अध्यवसीयते**" इति। अध्यवसीयते इत्यस्य कोर्थः? प्रकाशार्थत्वं विकल्प्य दोषमाह "**प्रकाश्यते**" इति। न हि प्रकाशविषयस्य भ्रान्तित्वं युक्तमिति भावः। अप्रकाशार्थत्वमपि विकल्प्य दोषमाह "**न प्रकाश्यते**" इति। **अनया**–स्मृत्या, प्रकाशनस्यैव स्पर्शत्वात् अध्यवसायस्य तु दूरत एवोल्लेखमात्रनिष्ठत्वादिति भावः। **इति**-अतः कारणात्, **सादृश्यमिति शब्दगडुमात्रम्**, व्यर्थमेवेति भावः। व्यवहारानर्हत्वात्[2], उभयोर्मध्ये एकस्य जडत्वात्, अर्थभ्रान्तित्वकल्पितस्मृत्यवसायात्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"भ्रान्तित्वे"** इति।

1. सादृश्यमपि–K. S. S.
2. व्यवहारानर्यत्वा अशत् तदुयोर्मध्ये एकस्य जडत्वार्थभ्रान्तित्वकल्पितस्मृत्यवसायात्—C. This is obscure. Some meaning, however, can be got out of it, if we change it as printed. "अश" has been omitted as it has two vertical strokes above it, the usual indication of the copyist that the letters are wrongly written and are, therefore, to be omitted.

**भ्रान्तित्वे चावसायस्य न जडाद्विषयस्थितिः ।**
**ततोऽजाड्ये[1] निजोल्लेखनिष्ठान्नार्थस्थितिस्ततः॥ ५ ॥**

इह स्मृतेः अन्यस्य वा भ्रान्तिबोधस्य स्वसंवेदनांशे प्रकाशमाने न भ्रान्तिता, तत्र वैपरीत्याभावात्; यस्तु तत्र अध्यवसीयते स्वाकारः स विपरीततया अस्वाकारत्वेन अर्थतया इति तत्रांशे भ्रान्तिता। स चांशोऽर्थलक्षणो न स्मृत्या अन्यया वा भ्रान्त्या स्पृश्यते इति तत्र असौ

अत्र टीका :–

पूर्वार्धं व्याचष्टे "इह" इति। **स्मृतेः**-स्मृतित्वेन कल्प्यमानस्य, **अन्यस्य वा**–स्मृतित्वेन अकल्प्यमानस्य वा, **भ्रान्तिबोधस्य**-भ्रमज्ञानस्य, **स्वसंवेदनांशे**–बोधत्वेनापरिहार्ये स्वप्रकाशभागे, कीदृशे? **प्रकाशमाने**-स्वं प्रति स्वयं स्फुरणशीले, **न भ्रान्तिता**–भ्रान्तिभावो न भवति। अत्र हेतुमाह "तत्र" इति। **तत्र**-स्वसंवेदनांशे, विषयग्रहणरूपत्वस्य तत्रापि भावादिति भावः। ननु तर्ह्यस्या अपि प्रमात्वमेव युक्तमित्यत आह "यस्तु" इति। **यस्तु तत्र**–भ्रान्तौ, **अध्यवसीयते**–उल्लिख्यते, **स्वाकारः**–ज्ञानाकारः, **सः**-स्वाकारः, **अस्वाकारत्वेन**–यतोऽसावस्याः स्वाकारो न भवति ततो हेतोः, **विपरीततया**–वैपरीत्येन, अध्यवसीयते न हि सा प्रमा अपि तु भ्रान्तिरेव। कुतोऽस्य विपरीतता इत्याह "अर्थतया" इति। **अर्थतया**, अर्थभावेन स्थितत्वादिति भावः, अध्यवसायकाले ज्ञानमर्थरूपमेव संपद्यते अन्यथा ग्रहणासंभवात्। फलितमाह "इति" इति। **इति**–अतः कारणात्, **तत्रांशे**–अध्यवसीयमाने स्वाकारांशे, **भ्रान्तिता** भवति न प्रमात्वम्। **स चांशः**–अध्यवसीयमानः स्वाकारांशश्च, कीदृशः? **अर्थलक्षणः**–अर्थस्वरूपतां प्राप्तः, **स्मृत्या**–स्मृतिभावेन कल्प्यमानया, **अन्यया वा भ्रान्त्या न स्पृश्यते**–तत्सदृशस्य अन्यस्य कस्यापि कल्पनात् पुरःस्थोपि

1. The second half of this verse is printed in the K.S.S. edition after "व्यवहारो विलुप्येत" coming in the Vimarśinī on the next page.

तूष्णीका इति बलादेव तत्रांशे जडत्वम् अस्या आयातं घटज्ञानस्येव पटे । न च जडेन विषयस्य किंचित् कृत्यम्, ततश्च अर्थविषयो व्यवहारो विलुप्येत ।

अथ तु तम् अवसायरूपं स्वसंवेदनांशं स्वाकारं वा अवलम्ब्य अजडत्वम् अस्याः, एवमपि 'अजाड्ये' निजं स्वसंवेदनम् उल्लेखश्च स्वाकारः– इतीयति एषा परिनिष्ठिता स्मृतिः इति विषयस्य नामापि ग्रहीतुम् अशक्नुवतः 'ततः' स्मृत्यध्यवसायात् कथं विषयस्य व्यवस्थापनं व्यवहार्यत्वसंपादनसामर्थ्यम् ? ॥ ५ ॥

---

ग्रहणविषयतां न नीयते, **इति**–अतः कारणात्, **तत्र**–तस्मिन्नंशे, **असौ**–स्मृतिरूपा अन्या वा भ्रान्तिः, **तूष्णीका**–मौनदशामापन्नैव भवति, **इति**–अतः कारणादेव, **जडत्वम् अस्याः**–स्मृतिरूपाया अन्याया वा भ्रान्तेः, **तत्रांशे आयातम्**, कस्य इव कुत्र इति दृष्टान्तापेक्षायामाह "**घट**" इति। ननु आयातु ततः किमित्यत आह "**न च**" इति। मा करोतु इत्यत आह "**ततश्च**" इति । **विलुप्येत,** नश्येदित्यर्थः।

द्वितीयार्धं व्याख्यातुमाह "**अथ**" इति । "**तु**" शब्दः पक्षान्तरद्योतकः, **तम्**–समनन्तरोक्तम्, "**अवसायरूपम्**" इत्यस्य व्यवहितेनापि "**स्वाकारम्**" इत्यनेन सह संबन्धः । **निजम्**–स्वरूपभूतम्, **उल्लेखश्च स्वाकारः**–अवसायरूपः स्वाकारः, **इतीयति**–निजभूते स्वसंवेदने उल्लेखरूपे स्वाकारे च, **परिनिष्ठिता**–अवसानं गता, **स्मृतिः**–भ्रान्तित्वेन कल्प्यमाना स्मृतिः, **ततः**–तस्मात्, **स्मृत्यध्यवसायात्**–भ्रान्तित्वेन कल्पितात् स्मृतिरूपादध्यवसायात्, **व्यवस्थापनम्**–व्यवस्थायाः करणम्, कीदृशम् ? व्यवहार्यत्वस्य-अर्थनिष्ठस्य व्यवहारयोग्यत्वस्य यत् संपादनं तत्र सामर्थ्यं यस्य तादृशम्, व्यवस्थापित एव अर्थो व्यवहारयोग्यः । अप्रकृतत्वादन्यस्या भ्रान्तेरिहाकथनम्, सविकल्पस्यानुभवस्य चेयमेवावस्थेति तावदेतदास्ताम् ।। ५ ॥

संस्कारे सत्यपि स्मृतिः न कथंचन घटते, ततश्च परस्परसङ्गतिहीनानि सकलानि ज्ञानानि-इति यदुक्तं श्लोकपञ्चकेन तत् इदानीं प्रकृते योजयतिः—

**एवमन्योन्यभिन्नानामपरस्परवेदिनाम् ।**
**ज्ञानानामनुसंधानजन्मा नश्येज्जनस्थितिः ॥ ६ ॥**

'जनस्य' लोकस्य या काचन 'स्थितिः' व्यवहारः सा सर्वज्ञानानां यत् 'अनुसंधानम्' एकविषयभावोपपन्नस्मृतिताप्राप्तिरूपम्, तत्र आयत्ता । तथा

---

अथ षष्ठस्य श्लोकस्यावतरणिकां करोति "**संस्कारे**" इति ।

अत्र टीका :–

**न घटते**—न युज्यते, उक्तन्यायादिति भावः । मा घटतामित्याशंकायामाह "**ततश्च**" इति । **परस्परसंगतिहीनानि**—परस्परमसंबद्धानि, स्मृतेरेव संबन्धहेतुत्वादिति भावः । **इति**—एवम्, **उक्तम्**—युक्तिपूर्वकं कथितम्, सिद्धान्तिनेति शेषः । **श्लोकपंचकेन "सत्यम्"** इत्यादिना **"भ्रान्तित्वे"** इत्यन्तेन, **प्रकृते**—आरब्धे आत्मसाधने । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । **"एवम्"** इति ।

अत्र टीका :–

**या काचन**—शुद्धाऽशुद्धा वा, **"स्थितिः"** इति पदं व्याचष्टे "**व्यवहारः**" इति । अनुसन्धानस्य स्वरूपमाह "**एक**" इति । एकविषयभावेन—पूर्वानुभवेन सह एकविषयतया[1] उपपन्ना या स्मृतिता स्मृतिभावः तस्या या प्राप्तिः सा रूपं यस्य तादृशम्, **तत्र**—उक्तरूपे अनुसंधाने, **आयत्ता**—वशा, तत उत्पन्नेति यावत् । कथमायत्तेत्यत आह "**तथा हि**" इति । **स्मरणनिबन्धनाः**—अभिलाषोत्पादनद्वारेण स्मृतिकार्याः, **व्यवहाराः**—उपादानादिरूपाः । कुत इत्यपेक्षायामाह "**प्रथमम्**" इति । **प्रथमम्**—सर्वप्रमाणमूलभूतत्वेन तेषामाद्यभूतम्, अहमिति—अहं पश्यामीत्यादौ स्थितो योऽहंपरामर्शः, तद्रूपं यत् पूर्वापरानुसंधानं तेन, अहं पश्यामीत्यादौ हि दृष्टा प्रथमं स्वात्मानमेव परामृशति स परामर्शश्च फलतः पूर्वापरकालविशेषितस्वात्मरूपद्वयमेलनरूप एव, तदेव

---

1. एकविषयता तया–C.

हि—स्मरणनिबन्धनाः[1] सर्वे व्यवहाराः । प्रथममपि हि प्रत्यक्षज्ञानम् अहमितिपूर्वापररूपानुसंधानेन स्मरणानुप्राणितेन विना न घटते, प्रमातरि विश्रान्त्यभावात् अप्रत्यक्षत्वप्रसङ्गात् । एवं सुखादौ मन्तव्यम् । हानादानप्रेरणाभ्युपगमादयस्तु व्यवहाराः स्मरणमया एव । 'एवं ज्ञानानाम्' यत् 'अनुसंधानम्' ततो जायमाना 'जनस्थितिः' 'एवम्' इति पराभ्युपगमे सति, 'नश्येत्' नश्यति—इति संभाव्यते, कुत इति चेत्,

---

च अनुसन्धानम् । कीदृशेनानुसंधानेन ? **स्मरणानुप्राणितेन**—पूर्वकालविशेषितात्मरूपविषयानुभवनेन सह एकविषयापरकालविशेषितस्वात्मरूपविषयस्मृतिदत्त-सत्ताकेन, तद्रूपेणेति यावत्, **विना**—अन्तरेण, **न घटते**—न युज्यते, कुतः ? **प्रमातरि**—द्रष्टरि, **विश्रान्त्यभावात्**[2] **अप्रत्यक्षत्वप्रसंगात्**—आपातात्, "अहं पश्यामि" इति हि नेत्रद्वारेण "अहम्" शब्दवाच्ये प्रमातरि विश्रान्तं दर्शनं "प्रत्यक्षम्" इति वक्तुं योग्यम् । **'अपि'** शब्देनान्येषामनुमानादीनां का कथेति द्योत्यते। अमुमेव न्यायम् "अहं सुखी" इत्यादौ सुखाद्यान्तरभाव-प्रत्यक्षेप्यतिदिशति "**एवम्**" इति। **मन्तव्यम्**—ज्ञातव्यम् । ननु उपादाना-दिरूपाणां व्यवहाराणां का वार्ता इत्यत आह "**हानादान**" इति । **स्मरणमया एव**—स्मृतिहेतुकत्वेन तद्रूपा एव, न हि विस्मृते उपादानादि दृष्टमिति भावः। उक्तं न्यायं प्रकृते योजयति "**एवम्**" इति। **अनुसंधानम्**—विषयद्वारेण मेलनम्। सूत्रस्थम् **"एवम्"** इति पदं व्याचष्टे "**एवम् इति**" इति। **पराभ्युपगमे**—बौद्धमताश्रयणे, फलतः आत्माऽनङ्गीकारे इति यावत् ।

---

1. स्मरणनिबन्धनः सर्वो व्यवहारः–K.S.S.
2. विश्रान्त्यभावात् आपातात् अप्रत्यक्षत्वप्रसंगात्–C. The word "आपातात्" appears to be in the wrong place in the manuscript. Because it cannot be an explanation of "विश्रान्त्यभावात्"। We have, therefore, altered its position as printed, for, "प्रसंगात्" can be interpreted as "आपातात्" ।

विशेषणद्वारेण हेतुमाह। 'अन्योन्यम्' तावत् 'भिन्नानि' ज्ञानानि— अन्यत् अनुभवज्ञानम्, अन्यत् इदानीन्तनं ज्ञानं विकल्पाभिमतम्, अन्यत् स्मरणसंमतं ज्ञानम्। तदेतानि स्वविषयप्रकाशमात्ररूपाणि परविषये जडान्धानेडमूककल्पानि, न च अन्योन्यस्य प्रकाशरूपाणि ॥ ६ ॥

एवं[1] न स्वरूपतो न वेद्यतो वा एकीभावरूपम् अनुसंधानम् अस्ति। अन्योन्यं च विषयविषयिभावो नास्ति। न च तुर्यं ज्ञातेयनिबन्धनम् अनुसन्धानाधायि संभाव्यते इति ध्वंसेरन् व्यवहाराः। न च 'ध्वंसन्ताम्' इति भवदभीष्टशापमात्रात् ते ध्वंसन्ते, प्रकाशन्ते यतः तत

**नश्येत्**—नाशं गच्छेत्, संभावनायामयं लिङ इत्याह "**नश्यति**" इति। "**अन्योन्यभिन्नानाम्**" इत्यस्यावतरणिकां करोति "**कुतः**" इति। कोसौ हेतुरित्यपेक्षायामाह "**अन्योन्यम्**" इति। भिन्नत्वमेव दर्शयति "**अन्यत्**" इति। "**अपरस्पर**" इति सूत्रपदं व्याचष्टे "**तदेतानि**" इति। **एतानि**— अविकल्पसविकल्पज्ञानस्मरणरूपाणि, स्वरूपप्रकाशनमनपेक्ष्य मात्रचः प्रयोगः ॥६॥

सप्तमस्य श्लोकस्यावतरणिकां करोति "**एवम्**" इति।

अत्र टीका:—

**स्वरूपतः**—स्वरूपेण, **वेद्यतः**—वेद्यद्वारेण, **तुर्यम्**—स्वरूपैकीभाव–वेद्यैकीभाव–विषयविषयिभावाख्यत्रयापेक्षया चतुर्थं किमपि, **ज्ञातेयनिबन्धनम्**—कारणम्, **अनुसंधानाधायि**—ज्ञानानां मेलकारकम्, **ध्वंसेरन्**—नाशं गच्छेयुः। ननु ततः किमित्यत आह "**न च**" इति। ते—व्यवहाराः, कुतो न ध्वंसन्ते इत्यतआह "**प्रकाशन्ते यतः**" इति। प्रकाशमानस्य ध्वंसो वक्तुमयुक्त एवेति भावः। तर्हि किं कार्यमित्यत आह "**तत**" इति। **एतत्**—वक्ष्यमाणं वस्तु, **आपद्यते**,

1. From "एवं" up to "उद्यन्तव्यमिति" is printed in the K. S. S. edition as a part of the commentary on verse 6. But Bhāskara takes it along with "तच्च" etc. as a part of the introduction to verse 7.

एतत् आपद्यते-एतदेव समर्थयितुम् उद्यन्तव्यम्—इति । तच्च अस्मदभिमतप्रकारेण विना विधेरपि अशक्यसमर्थनम्—इति दर्शयतिः—

**न चेदन्तःकृतानन्तविश्वरूपो महेश्वरः ।**
**स्यादेकश्चिद्वपुर्ज्ञानस्मृत्यपोहनशक्तिमान् ॥ ७ ॥**

'संवित् तावत् प्रकाशते' इति तावत् न केचित् अपह्नुवते । सा तु संवित् यदि स्वात्ममात्रविश्रान्ता अर्थस्य सा कथं प्रकाशः ? स हि अर्थधर्म एव तथा स्यात्; ततश्च अर्थप्रकाशः तावत्येव पर्यवसित इति

---

बलादंगीकर्तव्यमित्यर्थः । एतच्छब्दापेक्षितं वस्तु कथयति "**एतदेव**" इति । **उद्यन्तव्यम्**–उद्योगः कार्यः । तत उद्योगमेव करिष्याम इत्यत आह "**तच्च**" इति । अस्माकमभिमतो यः प्रकारः–आत्मसमर्थनरूपः, तेन, **विना**, अशक्यं समर्थनं यस्य तादृशम् ।

अवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । **"न चेत्"** इति ।

अत्र टीका :–

**नापह्नुवते**–नापह्नवं कुर्वन्ति । यच्छ्रुतिः–

"[1] असन्स एव भवति असद् बुध्यति वेद चेत् "

इति । एतेन **"चिद्वपुः"** इति गतव्याख्यम् । प्रकाशतां ततः किमित्यत आह "**सा तु**" इति । **स्वात्ममात्रविश्रान्ता**–स्वयंप्रकाशनिजस्वरूपमात्रपरा, **सा**–संवित् । कुतो न सा अर्थस्य प्रकाश इत्यत आह "**स हि**" इति । **हि**–यस्मात् **सः**–अर्थस्य प्रकाशः, **अर्थधर्म एव स्यात्**, न तु स्वतन्त्रसंवित्स्वरूपभूत इति भावः । ननु तथैवास्तु इत्यत आह "**ततश्च**" इति । **तावत्येव**—स्वात्म-

---

1. This Śruti is usually found as follows:–
असन्नेव स भवति । असद् ब्रह्मेति वेद चेत् । Tait Up. 2. 6. As 'बुध्यति' and 'वेद' mean the same thing, we are inclined to think that 'बुध्यति' is only a scribal mistake for 'ब्रह्मेति' ।

गलितो ग्राह्यग्राहकभावः। अतोऽर्थप्रकाशरूपां संविदम् इच्छता बलादेव अर्थोऽपि तद्रूपान्तर्गत एव अङ्गीकर्तव्यः; स च अर्थप्रकाशो यदि अन्यश्च अन्यश्च, तत् न स्मरणम् उपपन्नमित्यत एक एव असौ–इति। एकत्वात् सर्वो वेद्यराशिः तेन क्रोडीकृतः–इत्येतदपि अनिच्छता अङ्गीकार्यम्। एवमपि सततमेव उन्मग्नेन निमग्नेन वा विश्वात्मना प्रकाशेत, तथास्वभावत्वात्। न चैवम्, अतः स्वरूपान्तर्त्रुडितम् अर्थराशिम् अपरमपि भिन्नाकारम् आत्मनि परिगृह्य, कंचिदेव अर्थं स्वरूपात्

मात्रे एव, **गलितः**–नष्टः, अर्थप्रकाशस्य स्वात्ममात्रनिष्ठत्वेन प्रमातृस्पर्शासंभवादिति भावः। ननु तर्हि ग्राह्यग्राहकभावसंबन्धः कथं सिद्ध्येदित्यत आह "**अतः**" इति। **संविदम्**–स्वतन्त्रसंवित्तत्त्वम्, **तद्रूपान्तर्गत एव**–स्वतन्त्रसंविद्रूपान्तर्गत एव, न तु ततो बहिःस्थः, तत्त्वे हि अर्थधर्मत्वापातात् ग्राह्यग्राहकभावासंभवापात इति भावः। ननु सोर्थप्रकाश एक एव उत उत्तरोत्तरं नव एव इत्यत आह "**स च**" इति। **अन्यश्चान्यश्च**, नवो नव इत्यर्थः। **नोपपन्नम्**, अनुसन्धातुरसंभवादिति[1] भावः। **असौ**–अर्थप्रकाशः, एतेन सूत्रस्थम् "**एक**" इति पदं व्याख्यातम्। एकत्वेन आयातं सर्वागूरकत्वम् अङ्गीकारयति "**एकत्वात्**" इति। **अङ्गीकार्यम्**, अन्यथा वेद्यभेदेन तस्यापि भेदापातादिति भावः। एतेन "**अन्तःकृत**" इति पदं व्याख्यातम्' "**ज्ञान**" इति पदं व्याख्यातुमाह "**एवम्**" इति। **एवमपि**–सर्ववेद्यराशिक्रोडीकारेऽपि, **उन्मग्नेन**–विषयाश्रयणात् लेशतः प्रादुर्भूतेन, **निमग्नेन**–साकल्येन तदनाश्रयणाद् बाहुल्येन अप्रकटेन, **विश्वात्मना**–सर्वात्मना, **प्रकाशेत**, न ह्येकस्य वस्तुनो युगपत् प्रकाशाप्रकाशौ युक्ताविति भावः। अत्र हेतुमाह "**तथा**" इति। **तथास्वभावत्वात्**–प्रकाशस्वभावत्वात्, स्वभावस्य च त्यागो दुःशक एवेति भावः। **न चैवम्**, न त्वेतदनुभूयते इत्यर्थः। तर्हि किं कार्यमित्यत आह "**अतः**" इति। **अपरम्**–तन्मध्ये विषयीकृतं कमपि

1. अनुसंधातुमसंभवात्—C.

**उन्मग्नम् आभासयति–इति आपतितम् । सैषा ज्ञानशक्तिः । उन्मग्ना-भासभिन्नं[1] च चित्स्वरूपं बहिर्मुखत्वात् तच्छायानुरागात् नवं नवं ज्ञान-मुक्तम् । एवमपि नवनवाभासाः प्रतिक्षणम् उदयव्ययभाज इति सैव व्यवहारनिवहहानिः । तेन क्वचित् आभासे गृहीतपूर्वे यत् संवेदनं बहिर्मुखम् अभूत्, तस्य यत् अन्तर्मुखं चित्स्वरूपत्वं तत् कालान्तरेऽपि अवस्थास्नु स्वात्मगतं तद्विषयविशेषे बहिर्मुखत्वं परामृशति इति एषा**

भावम् । **"भिन्नाकारम्"** इति, ज्ञेयतया स्थितत्वादिति भावः । **कंचिदेवार्थम्,** अपरं भिन्नाकारमित्यर्थः, **स्वरूपात्**–स्वान्तःकृतसर्ववेद्यराशेः निजरूपात्, **उन्मग्नम्**–प्रादुर्भूतम्, **आपतितम्**–बलादायातम् । **सैषा**–उन्मग्नाभासरूपा, एतेन ज्ञानशक्तेः साधनं कृतम् ।

ननु यद्येषा ज्ञानशक्तिस्तर्हि घटपटज्ञानादेः किं रूपम् इत्यत आह **"उन्मग्न"** इति । उन्मग्नाभासैः–विषयीकरणेन प्रादुर्भावं नीतैः घटपटादिरूपैः आभासैः, भिन्नम्–भिन्नमिव संपादितम्, **चित्स्वरूपम्**–चितो निजं रूपम्, **बहिर्मुखत्वात्**–इदमितिबहिर्मुखताऽऽश्रयणेन, **तच्छायानुरागात्**, उन्मग्नाभासच्छायोपरागात्, **नवं नवं ज्ञानम्**–प्रमाणरूपं नवीनं नवीनं ज्ञानम्, **उक्तम्**, दृश्यते चैकस्यैव जलस्य तरंगादिरूपैराभासैर्नवनवत्वम् इति न कोपि विरोधः । ननु अनया ज्ञानशक्त्यैव सर्वे व्यवहाराः सिद्धिमायान्तु इत्यत आह **"एवमपि"** इति । **एवमपि**–ज्ञानशक्तेर्नवनवज्ञानत्वेपि, **सैव**–पूर्वोक्तैव, पूर्ववस्तुस्मरणाऽसंभवादिति भावः । ननु तर्हि किं कार्यमित्यत आह **"तेन"** इति । पूर्वम्–अनुभवकाले, गृहीते, **गृहीतपूर्वे, संवेदनम्**–अनुभवरूपम्, **तस्य**–पूर्वम् इदमितिबहिर्मुखीभूतस्य संवेदनस्य, **अन्तर्मुखम्**-अहमिति स्थितम्, **चित्स्वरूपत्वम्**–सारतया स्थितः चित्स्वरूपभावः, कीदृशम् ? **कालान्तरेऽपि**–स्मृतिकालेऽपि, **अवस्थास्नु**–नित्यतया तिष्ठत् सत्, **स्वात्मगतम्**–संस्कारभावेन स्वात्मनि स्थितम्, **तत्**–पुरातनम्, **विषयविशेषे**–स्वान्तर्गतवेद्यराशिमध्यात् विषयतया

1. उन्मग्नाभाससंभिन्नम्– K.S.S.

स्मृतिशक्तिः। यच्च तत् नवं भासयति स्मरति वा तत् वस्तुतः संविदा विश्वमय्या तादात्म्यवृत्ति इति विश्वमयं पूर्णमेव इति नवं न किंचित् आभासितं स्मृतं वा स्यात्। इदमपि प्रवाहपतितम् ऊरीकार्यम्—यत् किल तत् आभास्यते तत् संविदो विच्छिद्यते, संविच्च ततः, संविच्च संविदन्तरात्, संवेद्यं च संवेद्यान्तरात्; न च विच्छेदनं वस्तुतः संभवति, इति विच्छेदनस्य अवभासमात्रम् उच्यते। न च तत् इयता पारमार्थिकम्[1],

गृहीते कुत्रापि वेद्ये, **बहिर्मुखत्वम्**—इदमितिग्रहणरूपं बहिर्भावम्, **परामृशति**—"तत्" इत्येवम् आमर्शविषयतां नयति, **इति**—तत्र शक्तत्वात्, **एषा स्मृतिशक्तिः** भवति। एतेन स्मृतिशक्तेः साधनं कृतम्।

प्रोक्तशक्तिद्वयप्राणप्रदाम् अपोहनशक्तिं साधयति **"यच्च"** इति। **वस्तुतः**-परमार्थेन, **विश्वमय्या**—अन्तःकृतसर्ववेद्यरूपया सह, तादात्म्येन-तद्रूपतया, वृत्तिः—स्थितिः यस्य तादृशम्, **विश्वमयम्**—संवित्स्वरूपम्, **न स्यात्**, अन्यथा पूर्णत्वासंभवादिति भावः। **प्रवाहपतितम्**—अनिच्छया आगतम्। तत् कथमनुभवस्य स्मृतेर्वा उत्थानं युक्तम्, तयोस्तद्विषययोश्च संविदि निमग्नत्वादित्यत आह **"यत्किल"** इति। **आभास्यते**—आभासविषयतां नीयते, उपलक्षणं चैतत्स्मर्यते इत्यस्य। **विच्छिद्यते**—निष्कृष्यते, **ततः**—तस्माद्विषयात्, **संविच्च**—तद्विषया संविच्च[2], **संविदन्तरात्**—सर्वागरकत्वेन स्थिताया अन्यत्वेन भासमानायाः संविदः, **संवेद्यम्**—संविदो विषयोऽर्थः, **संवेद्यान्तरात्**—तस्मिन् काले विषयतामगतात्[3], संवेद्यराशेः। ननु यद्येवं तर्हि विच्छेदनस्यापि सत्यतया स्थितत्वाद् अद्वैतहानिरित्यत आह **"न च"** इति। केवलमवभासनम् **अवभासमात्रम्**। ननु तथापि सत्यमेव भवत्वित्यत आह **"न च"** इति। **तत्**—विच्छेदनम्, **इयता**—अवभासमात्रेण, **पारमार्थिकम्**—सत्यभूतम्, अन्यथा

1. अपारमार्थिकम्—K.S.S.
2. तद्विषयसंविच्च—C.
3. विषयतामागतात्—C.

निर्मीयमाणस्य सर्वस्य अयमेव परमार्थः । यत: एष एव परितश्छेदनात् परिच्छेद उच्यते, तदवभासनसामर्थ्यम् अपोहनशक्तिः । अनेन शक्तित्रयेण विश्वे व्यवहाराः । तच्च भगवत एव शक्तित्रयम्—यत् तथाभूतानुभवितृ-स्मर्तृ-विकल्पयितृस्वभाव चैत्रमैत्राद्यवभासनम् । स एव हि तेन तेन वपुषा जानाति, स्मरति विकल्पयति च । यथोक्तम् आचार्येणैव:–

'यद्यप्यर्थस्थितिः प्राणपुर्यष्टकनियन्त्रिते ।
जीवे निरुद्धा तत्रापि परमात्मनि सा स्थिता ॥'

---

चन्द्रद्वित्वस्यापि पारमार्थिकतापत्तेरिति भावः। ननु अवभास्यमानस्य स्मर्यमाणस्य चायं न्यायो भवतु निर्मीयमाणस्य तु का वार्ता इत्यत आह "**निर्मीयमाणस्य**" इति । **अयमेव**–अवभास एव, सर्वत्र ज्ञेये कार्ये वा अवभासनमात्रमेव परमार्थः, तथा च न अद्वैतहानिरिति भावः । ननु सर्वत्र परिच्छेदस्यैवावभासनत्वमुद्घोष्यते, त्वया कथमेवमुच्यते इत्यत आह "**यतः**" इति । **यतः** पंडितैः **एष एव**–विच्छेद एव, **परितश्छेदनात्**–समनन्तरोक्तस्य छेदस्य करणात्, **परिच्छेद उच्यते, तत्**–तस्मात्कारणात्, अवभासने–प्रोक्तस्वरूपस्यावभासस्य करणे, सामर्थ्यम्-समर्थता, **अपोहनशक्तिः**–विच्छेदशब्दवाच्या अपोहनरूपा शक्तिर्भवति ।

अस्यैव शक्तित्रयस्य व्यवहारकारणतां कथयति "**अनेन**" इति। **विश्वे**–सर्वे । ननु तथापि न त्वदभीष्टाऽऽत्मसिद्धिरित्यत आह "**तच्च**" इति। **भगवतः**–ऐश्वर्ययुक्तस्यात्मतत्त्वस्य, शक्तिमन्तं विना शक्त्यसिद्धेरवश्यं शक्तिमत्स्वरूपस्याऽऽत्मनोऽङ्गीकार इति भावः। ननु तच्छक्तित्रयं देवदत्तादिगतत्वेनैव दृश्यते, त्वया कथमेवमुच्यते इत्यत आह "**यत्**" इति । **हि**–यस्मात्, **स एव**–भगवान्, **तेन तेन वपुषा**–स्वरूपेण, **जानाति स्मरति विकल्पयति च**, तेन केन ? **यत्**, तथाभूताः–परमार्थतो भगवत्स्वरूपाः, अनुभवितृस्मर्तृविकल्पयितृस्वभावा ये चैत्रमैत्रादयस्तेषामवभासनं भवति । अत्राचार्यसम्मतिमाह "**यथोक्तम्**" इति । **अर्थस्थितिः**–अर्थविषयो व्यवहारः, **निरुद्धा**-स्थितिं गता, **सा**-अर्थस्थितिः। "**आदि**"

**इत्यादि । एतासां च ज्ञानादिशक्तीनाम् असंख्यप्रकारो वैचित्र्यविकल्प इति तत्सामर्थ्यं स्वातन्त्र्यम् अपराधीनं पूर्णं महदैश्वर्यं तन्निर्मितब्रह्मविष्णुरुद्राद्यैश्वर्यापेक्षया उच्यते । तदेवं[1] 'चिद्वपुः' इत्येवं कृत्वा इयदायातम् 'विश्वरूपः' इति । तत एव च परिनिष्ठितैकरूपजडभाववैलक्षण्यात्**

---

शब्देन अन्येषां तद्वाक्यानां ग्रहणम् । एतेन **"ज्ञानस्मृत्यपोहनशक्तिमान्"** इति पदं गतव्याख्यम्[2] ।

**"महेश्वर"** इति पदं व्याख्यातुमस्य शक्तित्रयस्य महदैश्वर्यत्वं कथयति **"एतासाञ्च"** इति । **वैचित्र्यविकल्पः**-विचित्रतारचना, **तत्सामर्थ्यम्**-प्रोक्तशक्तित्रयरूपा समर्थता, **स्वातन्त्र्यम्**-स्वतन्त्रतारूपम्, **ऐश्वर्यम्**-ईश्वरता । ननु किमपेक्षमस्य महत्त्वमित्यत आह **"तन्निर्मित"** इति । तेन-प्रोक्तेन भगवता, निर्मिता-अवभासिता ये ब्रम्हविष्णुरुद्रादयः, आदिशब्देन देवेन्द्रादीनां ग्रहणम्, तेषां यदैश्वर्यम्-यथास्वमीश्वरभावः, तस्य अपेक्षया ।

उपसंहारं करोति **"तदेवम्"** इति । **तत्**-तस्मात्कारणात्, **"एवम्"** सति, **चिद्वपुरित्येवं कृत्वा**-चिद्वपुरित्यनेन कारणेन, **इयदायातम्** । इयत् किम्? **"विश्वरूपः"** इति । भगवान् **विश्वरूपः**-सर्वभावस्वरूपो भवति, स्वप्ने चित एव सर्वरूपत्वदर्शनात् । **तत एव च**-विश्वरूपत्वाद्धेतोश्च, परिनिष्ठिताः-स्वरूपमात्रेऽवसानं गताः, अत एव एकरूपा ये जडभावाः तेभ्यो वैलक्षण्यात्-

---

1. तदेव-K.S.S.
2. After "इति पदं गतव्याख्यम्" the manuscript has "मत्तः शयीत्यर्थः". The word "मत्तः" occurs nowhere in the Vimarśinī. 'शयीत्यर्थः', therefore, cannot be corrected into 'मयीत्यर्थः' and taken as an explanation of 'मत्तः'। Nor is the whole of 'मत्तः शयीत्यर्थः' connected in any way with what precedes or follows. It has, therefore, been omitted.

**ज्ञानादिशक्तियुक्तामाहेश्वर्यम् उपसंप्राप्तः । एतदनुपगमे न किंचित् इदं भासेत–इति प्रसङ्गः । भासते तु, तस्मात् एतत् अवश्याङ्गीकर्तव्यम्[1]–इति प्रसङ्गविपर्ययः । नश्येज्जनस्थितिः, यद्येवं न स्यात्–इति प्राक्तनेन श्लोकेन सह संबन्धः[2] । 'चेत्' इत्यनेन तद्विपर्ययः सूचितः ॥ ७ ॥**

भिन्नत्वेन, स भगवान्, **ज्ञानादिशक्तियुक्तामाहेश्वर्यम्**–ज्ञानादिशक्तिसहितत्वरूपमैश्वर्यम्, **उपसंप्राप्तो** भवति, तदुक्तम् :–

> "अस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः ।
> महेश्वरत्वं सर्वत्वं[3] तदत्यक्ष्यद् घटादिवत् ॥"

इति । पूर्वमुक्तं प्रसंगं प्रसंगविपर्ययं च एतदवष्टंभेन अनुस्मरति **"एतद्"** इति । **एतदनुपगमे**–चिद्वपुषोऽनंगीकारे सति, **इदं किंचिन्न भासेत**, निःसाक्षिकत्वात्, **इति प्रसंगः** भवति, पूर्वपक्षवादिनं प्रतीति भावः । इदन्तु भासते एव स्वप्रतीतिसाक्षिकत्वात्, **तस्मात् एतत्**–चिद्वपुराख्यं वस्तु, **अवश्याङ्गीकर्तव्यम् इति प्रसंगविपर्ययो** भवति, उत्तरपक्षवादिन इति भावः ।

अस्य श्लोकस्य पूर्वश्लोकेन सह योजनां स्फुटीकरोति **"नश्येत्"** इति । **संबन्धः**–योजना । चेच्छब्दद्योत्यं वस्तु स्फुटीकर्तुमाह **"चेदित्यनेन"** इति । **तद्विपर्ययः**–जनस्थितिनाशविपर्ययः, **"सूचितः"** इति, निपातानां सूचनामात्रे

1. अवश्यम् अङ्गीकर्तव्यम्–K.S.S.
2. इति प्राक्तनेन श्लोकेन सह प्रसङ्गः । 'चेत्' इत्यनेन तद्विपर्ययः सूचितः–K.S.S.

   This text will yield a good meaning if the word 'सह' is taken out. Bhāskara, however, had a different reading as printed. As the word 'प्रसंग' was not present in Bhāskara's reading, he could not explain it as "प्रसंगविपर्ययः" । He, therefore, explains it as "जनस्थितिनाशविपर्ययः" ।
3. The printed text of the Tantrāloka from which this verse is quoted has "संवित्त्वम्" instead of "सर्वत्वम्" ।

इति शिवम्[1] । आदितः ॥ २३ ॥

**इति श्रीमदाचार्याभिनवगुप्तविरचितायाम् ईश्वरप्रत्यभिज्ञासूत्रविमर्शिन्यां ज्ञानाधिकारे परदर्शनानुपपत्तिर्नाम तृतीयमाह्निकम् ॥ ३ ॥**

---

शक्तत्वात् । इदमाह्निकं च पूर्वपक्षनिष्ठपूर्वाह्निकप्रतिसमाधानरूपत्वेन उत्तरपक्षरूपं ज्ञेयम्, आत्मप्रत्याख्यानस्य पूर्वपक्षत्वात् तत्प्रतिसमाधानस्य तूत्तरपक्षत्वात् । "**इति**" शब्दः समाप्तौ । "**शिव**" पदं मंगलवाचकं परतत्त्वसूचकञ्च । इति शिवम् ॥ ७ ॥

इति श्रीभास्करकण्ठविरचितायां श्रीप्रत्यभिज्ञासूत्रविमर्शिनीटीकायां श्रीभास्कर्याख्यायां ज्ञानाधिकारे तृतीयमाह्निकं समाप्तम् ॥

---

1. "इति शिवम्" is not found in the K.S.S. edition.

# अथ चतुर्थमाह्निकम् ।

पदार्थरत्ननिकरं निजहृद्गञ्जपुञ्जितम् ।
ग्रथ्नन्तं स्मृतिसूत्रान्तः संतत्यैव स्तुमः शिवम् ॥ १ ॥

एवं ज्ञानपूर्विका स्मृतिः, तदुभयानुग्राहिणी अपोहनशक्तिः—इति तावत् वस्तुसंभवक्रमेण प्रदर्शितम् । उपक्रमानुसारेण स्मृतिरेव सूचितप्रसङ्गविपर्ययसमर्थनदृशा विवेच्या ।

---

## अथ चतुर्थाह्निकम् ।

स्मृतिसूत्रोम्भितां कृत्वा भावमुक्तावलीं सिताम् ।
स्वान्तस्थितां तयात्मानं भूषयन्तं स्तुमः शिवम् ॥

अथ ज्ञानाधिकारे चतुर्थान्हिकव्याख्यामारभमाणो निर्विघ्नतत्समाप्तिकामनया समस्तान्हिकाभिप्रायसूचकं स्वेष्टदेवताप्रह्वीभावपरं मङ्गलश्लोकमुपनिबध्नाति **"पदार्थ"** इति ।

अत्र टीका :–

वयं तं **शिवं स्तुमः**, कीदृशम् ? पदार्था एव–ब्राह्यान्तरतया स्थिताः पदार्था एव, रत्ननिकरस्तम्, **निजहृद्गंजपुञ्जितम्**––निजहृदयाख्यकोशपुन्जीभूतं सन्तम्, **स्मृतिसूत्रान्तः**–स्मृत्याख्यसूत्रमध्ये, **सन्तत्या**–पंक्त्या, **ग्रथनन्तम्,** स्वरूपे तादात्म्येन लीनमपि सन्तं[1] व्यवहारार्थं परिपाट्याऽनुसंदधानमिति यावत् । अन्योपि कोशे राशिभावेन स्थितं रत्ननिकरं कण्ठादिभूषणार्थं सूत्रे ग्रथ्नाति इति ध्वनिः । यद्यपि पदार्थानां तत्त्वेनैव स्थितत्वात् पुन्जीभावो वक्तुमयोग्य एव, तथाप्यौत्तरकालिकं निर्गमनमपेक्ष्यैवमुक्तम् । एतेन स्मृतिशक्तेरत्र निरूपणं करोतीति सूचितम् ।

एवं मङ्गलं संपाद्य समस्तव्यस्तत्वाभ्याम् आन्हिकस्य शिष्यप्रवृत्त्यर्थं तावदभिप्रायं कथयति **"एवम्"** इति ।

---

1. सत्वम्—C.

**'सत्यं किंतु स्मृतिज्ञानम् ······।'**

**इति हि उपक्रान्तम्। तत्र संस्कारमात्रात् तावत् मा नाम उदपादि स्मृतिः, इदं तु वक्तव्यम्—तथाभूतभवदभ्युपगतभगवत्प्रभावोऽपि कथम् एनां कुर्यात्·—इति शङ्कां शमयितुं स्मृतितत्त्वनिरूपणाय**

**'स हि पूर्वानुभूतार्थोपलब्धा ·········।'**

**इत्यादि**

**'·········अर्थो भातः प्रमातरि।'**

**इत्यन्तं श्लोकाष्टकम्। तत्र श्लोकेन स्वपक्षे स्मृतिरुपपन्ना—इति कथितम्।**

---

अत्र टीका :—

**तदुभयानुग्राहिणी**—विषयस्वरूपव्यवस्थापकत्वेन ज्ञानस्मृत्योरनुग्राहिणी, वस्तुनः—परमार्थस्य यः सम्भवः तस्य क्रमेण, एवमेव वस्तु संभवतीति क्रममाश्रित्येत्यर्थः। **उपक्रमानुसारेण**—प्रक्रियानुरोधेन, **स्मृतिरेव,** न तु ज्ञानमपोहनं च। सूचितः, न तु साक्षात्कथितः, यः प्रसङ्गः—न किञ्चिदपि भासेतेत्येवंरूपाऽनिष्टापत्तिः, तस्य यः विपर्ययः—भासते तु तस्मादेतद् अवश्यमङ्गीकर्तव्यमित्येवंरूपः, तस्य यत्समर्थनम्—दृढीकरणम्, तस्य दृशा—दृष्ट्या, लक्षणया मार्गेणेति यावत्, **विवेच्या**—अवश्यं विचारणीया। ननु तस्या विवेकः पूर्वान्हिक एव कृत इति किं **"विवेच्या"** इत्युक्तम् इत्यत आह **"सत्यम्"** इति। **उपक्रान्तम्**—पूर्वान्हिकारम्भे आरब्धम्। ततः किम् इत्यत आह "**तत्र**" इति। **तत्र**—तस्मिन् उपक्रान्ते सति, **मा नाम उदपादि**—मा उत्पद्यताम्, तत्र एतावन्मात्रस्य सूचनादिति भावः। किं तेन तवात्र निर्णयसिद्धिर्न संपन्ना इत्यत आह **"इदम्"** इति। किं वक्तव्यमित्यपेक्षायामाह "**तथाभूत**" इति। तथाभूतः—परमार्थभूतः, यो भवताऽभ्युपगतो भगवान्—ज्ञानादिशक्तित्रययुक्तः परमात्मा, तस्य प्रभावः—माहात्म्यम्, **एनाम्**—स्मृतिम्, **इति शङ्काम्**—प्रश्नोत्तरपूर्वं स्थितां शिष्यशङ्काम्। **श्लोकाष्टकम्,** भवतीति संबन्धः।

सामस्त्येनाभिप्रायमुक्त्वा व्यस्तत्वेनापि कथयति **"तत्र"** इति। **तत्र,** श्लोकाष्टकमध्ये इत्यर्थः। **स्वलक्षणम्**—अन्याननुयायिवस्तुरूपम्। **अनुभवेन**—

द्वितीयेन स्मृतेः पूर्वानुभवविषयीकृतस्वलक्षणप्रकाशनसामर्थ्यमुक्तम् । तृतीयेन अनुभवेन तद्विषयेण च एकीभावपर्यन्त आवेशः स्मरणस्य उक्तः । तुर्येण अनुभवस्य न विषयतया स्मृत्या प्रकाशनम्—इति निरूपितम् । पञ्चमेन योगिज्ञानमपि अनुभवं पृथग्भावेन न विषयीकरोति—इति वदता तुर्यश्लोकार्थ एव उपोद्बलितः । षष्ठेनाशङ्क्यमानम् अनुभवस्य स्मृत्या पृथग्विषयीकरणं काल्पनिकम्—इत्यवास्तवीकृतम् । सप्तमेन स्मृतिप्रसङ्गात् विकल्पेऽपि पूर्वानुभवेन ऐक्यात्मावेशो दर्शितः । अष्टमेन स्मर्तव्यस्य स्मृतेः स्मर्तुश्च एकचित्तत्त्वविश्रान्तिः उक्ता, प्रसङ्गाच्च दृश्यस्य दर्शनस्य द्रष्टुश्च—इति तात्पर्यार्थः । अथ क्रमेण श्लोकार्थ उच्यते ।

**स हि पूर्वानुभूतार्थोपलब्धा परतोऽपि सन् ।**
**विमृशन्स इति स्वैरी स्मरतीत्यपदिश्यते ॥ १ ॥**

'पूर्वमनुभूतस्य अर्थस्य' य 'उपलब्धा' अन्तर्मुखो बोधः स तावत् अद्यापि 'परतः' स्मृतिकालेऽपि अस्त्येव, संविन्मात्रस्वरूपस्य कालकृत-

---

पूर्वानुभवेन, **तद्विषयेण**–पूर्वानुभवविषयेण, **एकीभावपर्यन्त आवेशः**–एकीभावावसानः समावेशः । **वर्णयता**–कथयता आचार्येण, "वदता" इत्यपि पाठः । **विकल्पेऽपि**–सविकल्पज्ञानेऽपि, ऐकात्म्येन–एकात्मतया, आवेशः–प्रवेशः । **तात्पर्यार्थः**–तात्पर्यभूतोऽर्थः ।

प्रथमश्लोकमुपन्यस्य व्याचष्टे । **"स हि"** इति ।

अत्र टीका :–

**पूर्वम्**–अनुभवकाले, **उपलब्धा**–ग्राहकः, **अन्तर्मुखः**–अहमिति स्थितः, **बोधः**–ज्ञानम्, न तु प्रमाणतया स्थितः इदमिति बहिर्मुखो बोधः । **"परतः"** इति व्याचष्टे **"स्मृति"** इति । **अस्त्येव**, न तु नास्ति, तत्र अस्तित्वस्य साक्षिसिद्धत्वे व्याघातापातात् तदसिद्धत्वे तु असत्त्वापातात् । अत्र हेतुमाह **"संविन्मात्र"** इति ।

**संकोचरूपविशेषात्मकावच्छेदा[1]योगात् । अनुभवस्य च अन्तः अर्थोऽपि अपृथग्भावेन अवस्थितः—इत्येतदपि अयत्नसिद्धम् । इयत्[2] तु चिन्त्यम्—अकालकलिते संवेदने तदन्तर्वर्तिनि च विश्वत्र भावजाते यदि तावत् चिन्मयतापरामर्शः, तत् 'अहम्' इति एतावतैव पूर्णेन विमर्शेन भाव्यम्; अथ इदन्तया पृथग्भावावभासनेन, तथापि तत्र द्वयी गतिः । 'अहम्'**

कालेन—वर्तमानादिभेदयुक्तेन क्रियावैचित्र्यरूपेण कालतत्त्वेन, कृतो यः संकोचः—वर्तमानादिनिजभेदपरिच्छिन्नतारूपं संकोचनम्, तद्रूपो यो विशेषः—अवस्थाभेदः, तदात्मको योवच्छेदः—अव्यापकता, तस्या अयोगात् । संविदैव हि तत्क्रियावैचित्र्यरूपस्य संवेद्यस्य कालस्यावच्छेदो युक्तः, न तु तेनाऽस्या इति भावः । ननु सोऽर्थः स्मृतिकाले नास्तीत्यत आह '**अनुभवस्य**" इति । **अपृथग्भावेन**—तादात्म्येन, **अयत्नसिद्धम्**, ग्राह्यग्राहकभावान्यथानुपपत्तिमात्रेण सिद्धत्वान्नात्र यत्नापेक्षेति भावः। ननु तर्हि तूष्णींभाव एव युक्त इत्यत आह "**इयत्**" इति । **संवेदने**—संविन्मात्रे, **विश्वत्र भावजाते**—विषयीभूतेऽविषयीभूते च भावराशौ, चिन्मयतया परामर्शः—अनुसंधानरूपं ग्रहणम्, **चिन्मयतापरामर्शः**, परमार्थतः स्थितेन चिन्मात्ररूपत्वेन परामर्शनमिति यावत् । **पूर्णेन**—सर्वभावभरितेन, सर्वं हि भावजातमाद्यस्पन्दभूतायाम् अपरिमिताहन्तायामेव विश्रान्तम्, तत एव च अन्तर्गतसमस्ताक्षराऽकारहकारात्मकप्रत्याहारवाच्यत्वमस्याः, तदुक्तम्:—

"अनुत्तराद्या प्रसृतिर्हन्ता विश्वस्वरूपिणी ।
प्रत्याहृताशेषविश्वा "

इति । "अम्" इति तु अत्र प्रत्ययभाग एव सुप्रत्ययादेशत्वात्, यस्तु प्रकृत्यकारः सोपि "अमि पूर्वः" इति सूत्रेण प्रत्ययनिगीर्ण एव । अथवा अन्ते पुनरपि "अम्" इति बिन्दुसंमतस्यानुत्तरस्य[3] स्थापनम्, अक्षराणां समस्तभावरूपत्वं समस्तवाचक-

1. विशेषात्मकविच्छेद—K. S. S.
2. इदम्—K. S. S.
3. बिन्दुयतस्य—C.

इत्यंशे यदि विश्राम्यति इदन्ता, तदा अहमिदमितिसदाशिवादिदशया[1] भाव्यम् । अथ न रोहति, तत् 'इदम्' इत्येव आभासनेन भवितव्यम्; अपूर्वताभासनाच्च तत् अनुभवनमेव स्यात् न स्मरणम्—इत्याशङ्क्याह 'स्वैरी' इति । 'स्वम्' आत्मीयम् उपकरणम् ईरयति स्वकर्तव्येषु[2] अवश्यं तच्छीलश्च; 'स्वं' च आत्मानम् ईरयति न पुनः स्वकर्तव्ये प्रेरकमपेक्षते—इति 'स्वैरी' स्वतन्त्रः । तेन स्वतन्त्रत्वात् 'स' इति[3] विमृशति । 'स' इति विमर्शनस्य च इयद्रूपम्—यत् सर्वथा अकालकलितस्वरूपपरामर्शनमेव

त्वेन स्फुटमेवेत्यलं बहुतरया रहस्यचर्चया । पक्षान्तरमाह "अथ" इति । **पृथग्भावावभासनेन,** चिद्व्यतिरिक्तचेत्यभावेन भासनरूपया इत्यर्थः, परामर्शः इति योजना । **द्वयी**–द्व्यवयवा, **गतिः**–प्रकारः, प्रकारद्वयमिति यावत् । प्रथमं प्रकारमाह "**अहम्**" इति । **विश्राम्यति**–पर्यवस्यति, "अहमिदम्" इति स्थिता सदाशिवादिदशा तया, आदिशब्देनेश्वरदशादेर्ग्रहणम्, तद् वक्ष्यतिः—

"ईश्वरो बहिरुन्मेषो निमेषोन्तः सदाशिवः ।"

इति । अथ द्वितीयं प्रकारमाह "**अथ**" इति । **न रोहति**–विश्राम्यति, **तत्**–तदा, अपूर्वतया यद्भासनं तस्मात्, "अहम्" इत्येव हि सदातनं भासनमिति भावः । "**स्वैरी**" इति पदस्यावयवार्थमाह "**स्वम्**" इति । "स्व" इत्यवयववाच्यम् आह "**आत्मीय**" इति । **उपकरणम्**–प्रमाणरूपां सामग्रीम्, **स्वकर्तव्येषु**–प्रमादिरूपेषु निजकार्येषु । अस्यैवार्थान्तरमाह "**आत्मानम्**" इति । अवयव्यर्थमाह "**स्वतन्त्र**" इति । ननु भवतु स्वतन्त्रः ततः किमित्यत आह "**तेन**" इति । स स्वैरी "**स**" **इति विमृशति**–विमर्शं करोति, न हि स्वतन्त्रः सापेक्षो युक्त इति भावः । शतुः कर्तरि विहितत्वादेवं व्याख्या । ननु तस्य विमर्शस्य किं रूपमस्तीत्यत आह "**स इति**" इति । **विमर्शनस्य**–विमर्शस्य, इयच्छब्दाकाङ्क्षां पूरयति "**यत्**" इति । **सर्वथा अकालकलितस्वरूपपरामर्शनमेव न,**

1. 'अहमिदम्' इति सदाशिवदशया—K. S. S.
2. कर्तव्येषु—K. S. S.
3. इत्येवम्—K. S. S.

**न, नापि अत्यन्तं भेदेन विमर्शनमेव[1] अपि तु यो भावः पूर्वमनुभवकाले तद्देशकालप्रमात्रन्तरसाचिव्येन पृथक्कृतो न च अहन्तायामेव लीनीकृतः[2], स तादृगेव तमसेव आच्छाद्य अवस्थापितः संस्कारशब्दवाच्यः, तस्य तमाच्छादकम् अपहस्तयति; तत्र अपहस्तिते स पूर्ववत् पृथक्कृते[3] एवावभाति । ननु च इदन्तया अवभासेत् पूर्ववदेव, नैवम् । तदानीन्तनावभा-**

अहंशब्दवाच्यव्यापकचिद्रूपपरामर्शनमात्रं केवलं नेत्यर्थः । **अत्यन्तं भेदेन विमर्शनम्**-इदमिति विमर्शनम् । पुनस्तस्य किं रूपमित्यत आह **"अपि तु"** इति । **"पूर्वम्"** इत्यस्य स्वयमेव व्याख्यां करोति **"अनुभव"** इति । तद्देशकालम्–अनुभवसंबन्धिदेशकालावच्छिन्नम्, यत् प्रमात्रन्तरम्—परप्रमातुरन्योनुभवित्राख्यः परिमितः प्रमाता, तस्य साचिव्येन–अवष्टंभेन, तं मध्येकृत्येति यावत् । **पृथक्कृतः**–अपोहनशक्त्या भेदेनावभासितः, **"नच अहन्तायामेव लीनीकृतः"** इति, अन्यथा तद्विषयस्मृत्यभावप्रसङ्गाद् इति भावः । एतेन पुनः स्मृतिविषयमनागत्य भावजातमहन्तायामेव लीयते इति द्योतितम् । **सः**–भावः, **तादृगेव**–पृथक्कृतः, **न** चाहन्तायां लीनीकृत इति यावत् । **तमसा**–अज्ञानेन, **अवस्थापितः** हृदये इति शेषः, परमार्थतोऽवच्छादने स्मृतिविषयताऽयोगादिवशब्दोपादानम् । **"संस्कार"** इति । संस्कारशब्दस्य गोशब्दस्येव सास्नावत्यर्थेऽत्रैवार्थे सङ्केतितत्वादिति भावः । **तस्य**–उक्तविशेषणस्य संस्कारतया स्थितस्य भावस्य, **तम्**–तमोरूपम्, **अपहस्तयति,** सादृश्यदर्शनाद्यवष्टंभेन येन तदुद्भूतिः स्यादिति भावः । ननु ततः किमित्यत आह **"तत्र"** इति । तत्र–तस्मिन्नावरके, **पृथक्कृते एव**–"अहम्" शब्दवाच्याच्चिन्मात्राद् भिन्नीकृते एव, इदंपरामर्शविषयतयेति यावत् । अत्र शिष्य आक्षिपति **"ननु"** इति । **पूर्ववदेव**–अनुभवकालवदेव, पृथक्कृतत्वाऽविशेषादिति भावः । गुरुः प्रतिसमाधानं करोति **"नैवम्"** इति । कुत

1. अत्यन्तभेदपरामर्शनम्—K. S. S.
2. विलीनीकृतः—K. S. S.
3. पृथक्कृत इव—K. S. S.

**सनपृथक्कृतशरीरादिसंबन्धमनवधूयैव हि तत्प्रकाशः; ततश्च इदानीन्तनावभासनस्मरणकालपरामर्शोऽपि[1] न निमीलति इति तत्परामर्शभित्तिप्राधान्येन[2] पूर्वकालपरामर्शः इति विरुद्धपूर्वापरपरामर्शस्वभाव एव 'स' इति परामर्श उच्यते । एवं च स एव परमेश्वरः 'स्मरति' । एतदेव हि तस्य**

इत्यपेक्षायामाह **"तदानीन्तन"** इति। **हि**—यस्मात् कारणात्, पण्डितैः **"स"** **इति परामर्शः** विरुद्धौ-कालभेदेन परस्परं विरोधयुक्तौ, यौ पूर्वापरपरामर्शौ—अनुभवकालीनस्मृतिकालीनौ परामर्शौ, तौ स्वभावः—एकीभूय स्वरूपं यस्य तादृशः, **एवोच्यते**, अतो योग्यतया तेनैवात्र भासनम् इति भावः। कुत एवं-स्वभाव एवासौ इत्याह **"इति"** इति । कुतः ? **पूर्वकालपरामर्शः**—अनुभवकालपरामर्शः, **तत्परामर्शभित्तिप्राधान्येन**—स्मृतिकालपरामर्शाधारतया भवति, अन्यथा तस्य गतत्वात्, अत एव परामर्शद्वयस्वभावत्वं "स" इति विमर्शस्य इति भावः। तदपि कुत इत्याह **"इति"** इति । कुतः ? **तत्प्रकाशः**—स्मर्यमाणस्य भावस्य प्रकाशः, तदानीन्तनावभासेन—अनुभवकालीनज्ञानेन, पृथक्कृतः—परिच्छेदविषयतां नीतः, यः शरीरादिसंबन्धः—तस्य भावस्य निजस्वरूपयोगः, तम्, **अनवधूयैव**—अपेक्ष्यैव भवति । तथा **ततश्च**—तस्मात् प्रकाशाच्च, इदानीन्तनावभासनरूपो यः स्मरणकालपरामर्शः—तमवधीकृत्य स्थितः, अर्थात्तस्य भावस्य परामर्शः, अनुभवानन्तरभावी परामर्शः, **न निमीलति**—न तिरोभवति, परामर्शमवधीकृत्य परामर्श इति राहोः शिर इतिवत् प्रयोगः द्वयोरप्येकपरामर्शरूपत्वात्। अवध्यवधिमद्भावस्तु शिष्यबोधनमात्रप्रयोजनः । यतः पूर्वानुभूतभावस्वरूपानुसारेण प्रकाशोऽपि वर्तते परामर्शश्च, तत एव स्मृतिकालपरामर्शभित्तिप्राधान्येन पूर्वकालपरामर्श इति संक्षेपः।

पादत्रयं व्याख्याय चतुर्थमपि व्याचष्टे **"एवम्"** इति । **स एव**—स्वैरी एव । ननु तर्हि तस्यापि मितप्रमातृत्वमायातम् इत्यपेक्षायामेतदुत्तरभावेन योज्यम् ।

1. इदानींतनावभासनकालपरामर्शोऽपि—K. S. S.
2. इति एतत्परामर्शभित्तिप्राधान्येन—K. S. S.

**स्मर्तृत्वम्[1]–यत् एवंप्रकारपरामर्शोचितकालकलादिस्पर्शसहिष्णुमायाप्रमातृभावपरिग्रहः इति मायाविद्याद्वयाद्वयमयम् । तत एव सकलसिद्धिवितरणचतुरचिन्तामणिप्रख्यम् आगमिकाः स्मरणमेव मन्त्रादिप्राणितं मन्यन्ते। तथा चः—**

**'ध्यानादिभावं स्मृतिरेव लब्ध्वा**
**चिन्तामणिस्त्वद्विभवं व्यनक्ति।'**

---

**"अपदिश्यते"** इतिपदसूचितं वस्त्वाह **"एतत्"** इति। तस्य परमेश्वरस्य स्मर्तृभूतपरिमितप्रमातृभावासादनमेव स्मर्तृत्वम्[2], न तु परिमितप्रमातृवत् परमार्थतः स्मरणकर्तृत्वेनेति भावः। बाह्यव्यवहारानुप्राणकत्वेन स्थितस्य अस्य स्मरणस्यैव परमात्मप्राप्तिं प्रत्यपि साधकत्वं कथयति **"इति माया"** इति। **इति**–पूर्वोक्ताद्धेतोः, अद्वयचित्तत्त्वस्य द्वयरूपस्मर्तृभावग्रहणाद्धेतोरिति यावत्। माया-मायातत्त्वम्, विद्या-शुद्धविद्यातत्त्वम्, तद्रूपं यद्द्वयाद्वयम्, तत्र मायाया भदकत्वेन द्वयत्वं विद्यायास्तदपसारकत्वेन अद्वयत्वम्, तन्मयम्-तद्रूपम् । **तत एव**–द्वयाद्वयरूपत्वेनैव, सकला याः सिद्धयः–बाह्याभ्यन्तरत्वेन स्थिता द्विविधाः सिद्धयः, तासां यद्वितरणम्-प्रतिपादनम्, तत्र चतुरो यः चिन्तामणिः तस्य प्रख्यम्, तत्सदृशमिति यावत्। तत्र द्वयाख्येन रूपेण बाह्यसिद्धिहेतुत्वम् अद्वयेनान्तरसिद्धिहेतुत्वम् इति क्रम आश्रयणीयः, तथा मंत्रादिभिः प्राणितम्–उच्चारादिद्वारेण उपोद्बलितम्। तत्र आन्तरव्यवहारे मंत्रप्राणितं बाह्यव्यवहारे तु आदिशब्दगृहीतेन सादृश्यदर्शनादिना प्राणितमित्यपि क्रमो ज्ञेयः। **आगमिकाः**–शिवशासनज्ञाः, तद्वाक्यमेव शब्दतः पठति **"ध्यानादि"** इति। **ध्यानादिभावम्**–स्वाभीष्टदेवताचिन्तनादिरूपताम्, **चिन्तामणिः**–सर्वप्रदत्वेन चिन्तामणिरूपा, **त्वद्विभवम्**–तव माहात्म्यम्, **"इति"** शब्दो वाक्यसमाप्तौ । ननु बहु वक्तव्यमत्रास्तीति तदपि कथनीयम् इत्यत आह **"अलम्"** इति, अप्रकृतत्वादिति भावः।

---

1. स्मरणम्—K.S.S.
2. स्मर्तृकर्तृत्वेन—C.

इति । **अलं तावत् । अनेन[1] तृन्नन्तसमासेन यत्नतोऽनुभवस्यार्थमुखेन कालस्पर्शम् अर्थविश्रान्ततां द्वयोरपि प्रमातरि निरूढिं भेदाभेदाभ्यां दर्शयति, वृत्तौ एकार्थीभावात् । तस्य च भेदाभेदमयत्वम्-इति वक्ष्यामः ॥ १ ॥**

---

"**पूर्वानुभूतार्थोपलब्धा**" इत्यस्य समासस्याभिप्रायमाह "**अनेन**" इति। **अनेन**–सूत्रस्थेन, **यत्नतः**–समासनिषेधेऽपि "द्वितीया श्रितातीत" इत्यत्र सूत्रे योगविभागरूपाद्यत्नात्, कृतेनेति शेषः । **तृन्नन्तसमासेन**–पूर्वानुभूतार्थमुपलब्धा इति विग्रहेण तृन्प्रत्ययान्तसमासेन, **अनुभवस्य**–पूर्वानुभवस्य, **अर्थमुखेन**––विषयद्वारेण, **कालस्पर्शम्**––अकालकलितत्वेऽपि निष्ठावाच्यातीतकालस्पर्शम्, **अर्थविश्रान्तताम्**—प्रमातरि विश्रान्तत्वेपि विषये विश्रान्तिं नीलमुत्पलमितिवत् । "**अनुभूत**" इत्यर्थविशेषणम्, तथा **द्वयोरपि**–अनुभवार्थयोरपि[2], **प्रमातरि**–उत्तरपदार्थभूते प्रधाने उपलब्धरि, **निरूढिम्**–विश्रामम्, **भेदाभेदाभ्यां दर्शयति,** आचार्य इति शेषः । तत्र भेदेन अनुभवस्य कालस्पर्शोर्थविश्रान्तिश्च, अभेदेन तु उत्तरपदार्थप्रधानत्वात् तत्पुरुषस्य द्वयोः प्रमातरि विश्रान्तिः इति क्रमो योजनीयः । कुतो दर्शयतीत्यपेक्षायां हेतुमाह "**वृत्तौ**" इति । **वृत्तौ**–समासे, अनेकार्थानामेकार्थभावासादनम् एकार्थीभावः, तस्मात्, समासे परस्परं भेदेन स्थितानि पदानि एकीभवन्ति । कुत एकार्थीभावस्य भेदाभेदत्वम् इत्यत आह "**तस्य च**" इति । **तस्य च**–एकार्थीभावस्य च, **वक्ष्यामः**, अग्रे संबन्धनिर्णये इति भावः ।

एवमत्र योजना । हि–यस्मात्, स पूर्वानुभूतार्थोपलब्धा परतोऽपि सन् अत एव स इति विमृशन् "स्मरति" इति अपदिश्यते कथ्यते, कुतः ? स्वैरी–स्वतन्त्रः, न हि स्वतन्त्रस्य किमपि दुष्करम् ॥ १ ॥

अथ द्वितीयस्य श्लोकस्य अवतरणिकां करोति "**एतदेव**" इति ।

---

1. अलं तावत् अनेन। तृन्नन्तसमासेन—K. S. S.
2. अनुभवार्थयोः—C.

**एतदेव स्मृतितत्त्वमुपपादयितुं श्लोकान्तराणि। तत्र यदि कश्चिद् ब्रूयात्–इह स्मृतिर्विकल्पः, न च अनेनार्थः प्रकाश्यते, अर्थासंस्पर्शिनो हि विकल्पाः, अनुभवेन च येन सोऽर्थः प्रकाशतां नीतः स इदानीं कीर्तिमात्र-मूर्तिर्जातः, न च सोऽपि स्मृत्या प्रकाश्यते–ज्ञानस्य ज्ञानान्तरेणासंवेद्यत्वात् असत्त्वाच्चेति अर्थस्य प्रकाशनाभावात् 'इदं स्मरामि' इति ज्ञानं भ्रान्तिमात्रमेव–इति पुनरपि आपतितम्–इति, तदा तं प्रति उच्यतेः–**

**भासयेच्च स्वकालेऽर्थात्पूर्वाभासितमामृशन् ।**
**स्वलक्षणं घटाभासमात्रेणाथाखिलात्मना ॥ २ ॥**

---

अत्र टीका :–

ननु पूर्वश्लोकेनैव स्मृतिसमर्थनं कृतमिति किमर्थमन्ये श्लोका इत्यत आह "**एतदेव**" इति। **उपपादयितुम्**–उपपत्त्या[1] दृढीकर्तुम्, **श्लोकान्तराणि**–अन्यत् श्लोकसप्तकम्। ननु तावद् द्वितीयः श्लोकः किमर्थं कृत इत्यत आह "**तत्र**" इति। **तत्र**–श्लोकान्तरमध्ये, **कश्चित्**–कोपि बौद्धादिः, **अनेन**–विकल्पेन। कुतो न प्रकाश्यत इत्यत आह "**अर्थ**" इति। **अर्थासंस्पर्शिनः**–क्षणरूपवस्तुस्पर्शरहिताः, तत्सन्तानावसायमात्रपरत्वात् इत्यर्थः। ननु स पूर्वानुभव एव पुनस्तं प्रकाशयत्वित्यत आह "**येन**" इति। **कीर्तिमात्र-मूर्तिर्जातः**, नष्ट इत्यर्थः। ननु स्मृतिरेव तमनुभवं प्रकाशयत्वित्यत आह "**न च**" इति। **सोपि**—पूर्वानुभवोपि। अत्र हेतुमाह "**ज्ञान**" इति। एतच्च "**दृक् स्वाभासा**" इत्यत्र निर्णीतम्, **असत्त्वात्**–प्रध्वंसाभावविषयत्वात्। फलितमाह "**इति**" इति। **इति**—अतः कारणात्, "**इति**" शब्दो बौद्धादिवाक्यसमाप्तौ, **तं प्रति**—बौद्धादिकं प्रति।

एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**भासयेच्च**" इति।

---

1. उपपादयितुम्–उत्पत्त्या दृढीकर्तुम्—C.

इह स्मृतिविकल्पे[1] तावत् अर्थोऽवसीयते[2], अन्यथा सुप्तमूर्च्छितकल्पतापत्तेः। एवं च यावत् अध्यवसायोऽर्थस्य तावत् 'अर्थात्' इति सामर्थ्यात् इयत् अभ्युपगन्तव्यम्—यत् सोऽर्थः प्रकाशते, अप्रकाशमानेऽध्यवसातव्येऽध्यवसायोऽन्धप्रायः स्यात्। प्रकाशनं च न तदानीन्तनकालस्य त्यागेन, नापि स्वीकारेण, इदम् इत्येवावभासनप्रसङ्गात्। तस्मात् अतीतानुभवकालः पूर्वानुभूतभावस्वालक्षण्याक्षेपकत्वेनापेक्षणीयो वेद्यभागे प्रकाशा-

अत्र टीका :—

इह—अस्मिन् जगति, **स्मृतिविकल्पे**—स्मृतिरूपे विकल्पे, **तावत्**, नात्र विप्रतिपत्तिरित्यर्थः। **अर्थः**—पूर्वानुभूतो घटादिर्विषयः, **अवसीयते**—उल्लेखविषयतां नीयते, **अन्यथा**—अध्यवसायाभावे, न हि सुप्तादेरध्यवसायो दृश्यत इति भावः। ननु ततः किमित्यत आह "**एवञ्च**" इति। सूत्रस्थम् "**अर्थात्**" इति पदं व्याचष्टे "**सामर्थ्यात्**" इति। "**इयत्**" शब्दः अर्थाक्षेपपरः। इयच्छब्दाकाङ्क्षां पूरयति "**यत्**" इति। **सः**—स्मृतिविकल्पे अध्यवसीयमानः। प्रकाशाभावे दोषमाह "**अप्रकाश**" इति। **अध्यवसातव्ये**—अध्यवसायविषयीभवति पूर्वानुभूतेऽर्थे, **अन्धप्रायः**-अर्थविषयत्वाभावेनान्धसदृशः, प्रकाशित एवार्थे तस्य प्रवृत्तेरिति भावः। ननु स प्रकाशः किमनुभवकालस्वीकारेण वर्तते त्यागेन वा इत्यत आह "**प्रकाशनञ्च**" इति। **तदानीन्तनकालस्य**—अनुभवकालस्य। कुत इत्यपेक्षायामाह "**इदम्**" इति। तस्य त्यागे हि स्मृतिकालस्यैव प्रकाशविशेषणत्वापत्त्या स्फुटम् "**इदम्**" इत्यवभासप्रसङ्गः, स्वीकारे तु तत्रस्थस्य "इदम्" इत्यवभासस्यापि स्वीकारप्रसङ्ग इति भावः। तर्हि किं कार्यमित्यत आह "**तस्मात्**" इति। **तस्मात्**-यतः पूर्वकालस्य त्यागे स्वीकारे च "इदम्" इत्यवभासप्रसङ्गः ततो हेतोः, **अतीतानुभवकालः**—पूर्वानुभवकालः, पूर्वानुभूतस्य भावस्य-घटादेः, यत्स्वालक्षण्यम् अन्याननुयायिस्वरूपत्वम्, तस्य

1. स्मृतिकाले—K. S. S.
2. अध्यवसीयते—K. S. S.

**त्मकावभासाभिनिवेशितया, स्मर्तृदेहप्राणाद्यवभासकालश्चावलम्बनीयो वेदकभागे विमर्शांशाभिनिवेशित्वेन। आभासमात्रं हि भावस्य स्वरूपम्, प्रत्याभासं प्रमाणस्य व्यापारात्। तदेव आभासान्तरव्यामिश्रणया दीप-**

---

आक्षेपकत्वेन-अवच्छेदकत्वेन, **वेद्यभागे**–स्मृतेर्विषयरूपे अंशे, **अपेक्षणीयः**— विशेषणत्वेनाश्रयणीयः। केन कृत्वा? प्रकाशात्मको योवभासः–पूर्वकालीनो– वभासः, तत्र अभिनिवेशः–हठोस्यास्तीति तादृशः, तस्य भावस्तत्ता तया। यतः पूर्वकाले घटस्य स्वलक्षणं प्रकाशितं स एव च घट इहापि स्मृतिविषयीभवत्यतो घटाख्यविषयविषये विशेषणत्वेन स एव कालोऽपेक्षणीय इति संक्षेपः। ननु वेदकभागे कोऽपेक्षणीय इत्यत आह "**स्मर्तृ**" इति। स्मर्तुर्यद् देहप्राणादि–अर्थात् स्वरूपम्, तस्यावभासकालश्च, स्मृतिकालश्चेति यावत्। **वेदकभागे**–वेदकांशे, **अवलंबनीयः**–विशेषणत्वेनाश्रयणीयः। केन कृत्वा? विमर्शांशे–अद्यतनपरामर्शाख्ये भागे, यदभिनिवेशित्वं तेन। यतः परामर्शकारी स्मर्ता स्मृतिकाल एव संभवति ततः स्मृतिकाल एव वेदकविशेष-णत्वेनाश्रयणीयः। यद्यपि वेदकस्य नित्यत्वेन सद्भावः सर्वदैव वर्तते तथापि परामर्शकत्वाख्यं विशेषमपेक्ष्यैवमुक्तम्। ननु घटस्य स्वरूपमत्र नास्ति कथमस्य वेद्यत्वं कथयसीत्यत आह "**आभासमात्रम्**" इति। **आभासमात्रम्**, न तु मृत्कार्यत्वेन स्थितं स्थूलं किमपि वस्तु, **भावस्य**–घटादिपदार्थस्य। कुत इत्यपेक्षाया-माह "**प्रत्याभासम्**" इति। **प्रत्याभासम्**—आभासे आभासे, सर्वेषु घटतद्धर्मा-द्याभासेष्विति यावत्। **प्रमाणस्य**–बहिर्मुखबोधरूपस्य प्रमाकरणस्य, **व्यापारात्**– प्रवृत्तेः। अयं भावः–प्रमाणं हि सर्वत्राभासमात्रमेव करोति न तूपादानीभूय कस्यापि सत्तां करोति, तत्प्रवृत्तिमन्तरेण च न कोपि सत्तां लभते। यदुक्तम्:–

"प्रमाणगम्यतैव सत्ता"

इति। ततः प्रमाणकृतमाभासमात्रमेव भावस्य स्वरूपमिति। यत्तु मृदादेरुपादानत्वं दृश्यते तदप्याभासमात्रमेवेत्यलमाभासमात्रे जगति तदन्तर्वर्तिपदार्थाभासमात्रत्व-विषयाभिः सूक्ष्मेक्षिकाभिः। ननु यद्याभासमात्रमेव भावस्वरूपं तर्हि गलितः स्फुटत्वास्फुटत्वव्यवहारः सर्वत्राभासमात्रस्याविशेषादित्यत आह "**तदेव**" इति।

**सहस्रप्रभासंमूर्च्छनवत् स्फुटीभवति। आभासान्तरव्यामिश्रणाभावेऽपि तु कालाभाससंभेदेनैव स्वालक्षण्यं तस्य आभासस्य करोति, कालशक्तेरेव भेदकत्वात् इति वक्ष्यते । एवं तावत् स्वलक्षणीभावः प्राक्तनदेहाभाससाचिव्याभ्युदितकालाभासया[1] घटाभासस्य इति ।**

---

तदेव—आभासमात्रमेव, **आभासान्तरव्यामिश्रणया**-ऊर्ध्वबुध्न्यादिधर्माभासमिश्रणेन। ननु आभासमात्रत्वे असाधारणधर्माभासग्रहणासंभवात् स्वलक्षणं गृहीतं न स्यादित्यत आह "**आभासान्तर**" इति । **कालाभाससंभेदेन**-वर्तमानादिकालरूपाभाससंयोजनेन, **तस्य आभासस्य**— सामान्यरूपघटाभासमात्रस्य, **स्वालक्षण्यम्**— स्वलक्षणभावम्, "**करोति**" इति, प्रमातेति शेषः । कुत इत्यपेक्षायां हेतुमाह "**काल**" इति । **भेदकत्वात्**—विशेषणत्वात् । असाधारणेन भेदकेनैव च स्वलक्षणं व्यवतिष्ठते नात्र कस्यापि विप्रतिपत्तिः। कालस्य चासाधारणत्वं घटाभासदेशाद्याभासमिश्रीभावेन स्फुटमेवेति न काप्यनुपपत्तिः। तथा च क्रियाधिकारे सामान्यस्य कालादियोजनया स्वलक्षणीभावं कथयिष्यति। उपसंहारं करोति "**एवम्**" इति । एवं सति तावत् **घटाभासस्य**–घटत्वावच्छिन्नस्य आभासस्य, प्राक्तनः–अनुभवकालीनः, यो देहाभासः–घटदेहरूपाभासः, तस्य यत्साचिव्यम्–सहायता तेन अभ्युदिता या कालाभासा, विशेषणता इति यावत्, तया, **स्वलक्षणीभावः** भवति, उक्तन्यायादिति भावः। "**इति**" शब्दः प्रमेयपरिसमाप्तौ। स्मृतेरेव तावद्रूपतां कथयति "**तावत्येव**" इति । **तावत्येव**-आभासमात्ररूप एव, **आभासान्तरैः**–अन्यैर्धर्मरूपैराभासैः, **अतिस्फुटा**, मिश्रीभावाद्धेतोरतिस्फुटेत्यर्थः । द्वितीयः "**इति**" शब्दः प्रमेयपरिसमाप्तौ । ननु

---

1. प्राक्तनदेहाभाससाचिव्याद्युदितकालाभासयोजनया—K. S. S. This reading is probably the correct one, considering that the word 'आभास' is not found used in the feminine gender elsewhere. We have, however, adopted Bhāskara's text, as it appears in his dissolution of the compound.

**तावत्येव वा स्मृतिः आभासान्तरैरपि व्यामिश्रा अतिस्फुटेति[1] । अत्यन्तस्फुटीभावेऽपि तदानीन्तनकालता न त्रुट्यति अन्यसाधारण्यानवभासात्[2] । तथावभासे तु योगिनस्तन्निर्माणमेव । ब्रह्मभाषितादौ तु**

स्फुटीभावे स्मृतेः "इदम्" इति रूपं वर्तते "तत्" इति वा इत्यपेक्षायामाह "**अत्यन्त**" इति । **तदानीन्तनकालता**–वेद्यविषया पूर्वकालता, "तत्" इति ग्रहणमिति यावत् । कुतः ? अन्यैः–प्रमातृभिः यत्साधारण्यं तेन यः अनवभासः ततो हेतोः, न हि अन्येन अत्यन्तं स्फुटतया स्मर्यमाणो घटोऽन्यस्य ग्रहणविषय इत्यर्थः, अस्फुटीभावे तु का कथेति "**अपि**" शब्दस्याभिप्रायः । ननु योगिस्मृतेः कथमन्यसाधारणत्वं दृश्यते, योगिस्मृतं हि अन्येऽपि पुरःस्थं पश्यन्तीत्यत आह "**तथा**"इति । **तथावभासे**–साधारण्येनावभासे, **तन्निर्माणमेव**–तस्य वस्तुनः सम्पादनमेव, न तु स्मरणम्, योगप्रभावेण तत्र शक्तत्वादिति भावः । न चैतेन महावैराग्ययुक्तेभ्यो महाविवेकेभ्यः स्मृतिमात्रेण वस्तुनिर्माणासमर्थेभ्योपि[3] विमुखेन भाव्यम्, वैराग्यपूर्वस्य विवेकित्वमात्रस्य महायोगित्वात् । ऐन्द्रजालिकेष्वपि स्मृतिमात्रेण विषयनिर्माणं दृश्यते एव इति न तन्मात्रैणैव[4] योगित्वं ज्ञेयमित्यलं प्रपंचेन। ननु स्मृतिकल्पिताभिर्देवताभिः सह भाषणादेः का वार्तेत्यत आह "**ब्रह्म**" इति। ब्रम्हणा सह–ध्यानाभ्यासवशेन प्रत्येयतां[5] नीतं यत् ब्रम्ह–ब्रम्हतत्त्वं तेन सह, भाषितम्–भाषणम् आदिर्यस्य तस्मिन् । आदिशब्देन अन्यदेवताभिः सह भाषणस्य ग्रहणम् । तत्र **नवमेवावभासनं** भवति कल्पितत्वात् । '**इति**' शब्दः समाप्तौ । कुत इत्यपेक्षायामाह "**अत्र**" इति। '**तु**' शब्दः यतःशब्दार्थे, **तु**–यतः, आगमादिमानान्तरेण–शास्त्रादिप्रमाणान्तरेण, अनुभूतम्–ध्यानेनानुभवविषयतां

1. The word "इति" coming after "अतिस्फुटा" is not found in the K. S. S. edition.
2. साधारण्येन अनवभासनात्—K. S. S.
3. वस्तुनिर्माणसमर्थेभ्यः—C.
4. इति तन्मात्रेणैव योगित्वम्—C.
5. प्रत्ययताम्—C.

नवमेव अवभासनम् इति। अत्र[1] तु आगमादिमानान्तरानुभूतब्रह्मादिस्वरूपस्मरणपरम्परा अभ्युपायः। 'भासयेत्' इति विधिरूपेण नियोगेन नियमो लक्ष्यते, न भासयति इत्येतत् न, अपि तु भासयत्येव इति। 'स्वकाले' इति स्मरणकाले। 'आमृशन्' इति वेदकभागनिवेशी वर्तमानकाल उक्तः। 'पूर्वाभासितं[2] स्वलक्षणम्' इति वेद्यांशस्पर्शी भूतकालो घटाभासस्यापि

---

नीतम्, यद् ब्रम्हादिस्वरूपं तस्य यत्स्मरणम्—परामर्शनरूपा स्मृतिः, तस्य या परंपरा सा एव **अभ्युपायः**-उपायो भवति, न तु पूर्वं प्रत्यक्षीकृतं ब्रम्हतत्त्वं तस्य प्रत्यक्षाविषयत्वात्।

उक्तप्रक्रियानुसारेण श्लोकस्य योजनां कर्तुमारभते **"भासयेत्"** इति। नियोगस्यापि विधिविशेषत्वात् **"विधिरूपेण"** इत्युक्तम्। तदुक्तम्:—

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्या विधीयते॥"

इति। नियोगलक्षणं नियममेव स्फुटयति **"न भासयति"** इति। एतेन **"भासयेत्"** इति पदं कृतव्याख्यम्। **"स्वकाले"** इति पदं व्याचष्टे **"स्मरण"** इति। स्मृतिकालस्मरणकालयोरेकत्वादिति भावः। **"आमृशन्"** इति पदं व्याचष्टे **'आमृशन्'** इति। **वेदकभागनिवेशी**—वेदकांशविशेषणीभूतः, **उक्तः**, शतुर्वर्तमाने प्रयुक्तलडादेशत्वादिति भावः। मध्ये **"अर्थात्"** इति प्रथममेव कृतव्याख्यमितीह न व्याख्यातम्। **"पूर्वाभासितं स्वलक्षणम्"** इति पदद्वयं विशेषणविशेष्यभावेन स्थितं संकलय्य व्याचष्टे **'वेद्यांश'** इति। **वेद्यांशस्पर्शी**—वेद्यभागविशेषणीभूतः, **भूतकालः**—क्तप्रत्ययवाच्योतीतकालः, **"दर्शित"** इति संबन्धः। **"घटाभासमात्रेण"** इति पदं व्याख्यातुं

---

1. तत्र—K. S. S.
2. पूर्वविभासितम्—K. S. S.

केवलस्य स्वालक्षण्यापत्तिहेतुर्दर्शितः। इयदेव स्मृतेः अव्यभिचारि वपुः, अर्थितातिशयात् तु स्फुटत्वम् इति 'अथ' शब्दो द्योतयति। तदेवाह 'अखिलात्मना' इति। सर्वाभासमिश्रेण वपुषा इत्यर्थः॥ २॥

ननु एवं स्वलक्षणस्य प्रकाशने भेदेन बहिस्तदवभासेत। एतदेव हि बहिरवभासनम्—यत् स्वलक्षणप्रकाशनम् इति शङ्काशमनाय निरूपयति:-

**न च युक्तं स्मृतेर्भेदे स्मर्यमाणस्य भासनम्।**
**तेनैक्यं भिन्नकालानां संविदां वेदितैष सः॥ ३॥**

---

विशेषणमाह **"केवलस्य"** इति। स्वालक्षण्यस्य आपत्तिः–प्राप्तिः तस्या हेतुः। घटाभासमात्रे कालाभासस्य समनन्तरमेव स्वालक्षण्यकारित्वसमर्थनात्। एतन्मात्रस्यैव स्मृतित्वं कथयति **"इयदेव"** इति। **इयत्**, वस्तुनः आभासमात्रं भूतकालकृता स्वालक्षण्यापत्तिश्चेत्यर्थः। **अव्यभिचारि वपुः**, असाधारणं स्वरूपमित्यर्थः। ननु आभासान्तरव्यामिश्रणया कृता स्फुटताप्यस्याः कदाचित् स्यान्न वा इत्यत आह **"अर्थिता"** इति। **अर्थितातिशयात्**–अतिकाङ्क्षणीयत्वेन, कदाचित् स्मृतिरपि अतिकाङ्क्षणीया भवत्येव, **स्फुटत्वम्**–धर्माभासव्यामिश्रणाकृतः स्फुटीभावः। **"द्योतयति"** इति। अस्फुटपक्षात् पक्षान्तरत्वादिति भावः। **तदेव**–समनन्तरोक्तमेव स्फुटत्वम्। केन इत्यत आह **"अखिल"** इति। एतदपि पदं व्याचष्टे **"सर्व"** इति। सर्वाभासाः–धर्माभासाः, **वपुषा**, घटस्वरूपभूतेन घटाभासेनेत्यर्थः। आमृशन्-परामर्शकारी, स्वैरी कर्ता पूर्वाभासितं स्वलक्षणं कर्म भासयेत् इति श्लोके योजना। तृतीयाद्वयम् इत्थंभावे॥ २॥

अथ तृतीयस्य श्लोकस्यावतरणिकां करोति **"ननु"** इति।

अत्र टीका:–

**एवम्**–उक्तनीत्या, **बहिः**–भेदेन, इदन्तया। अत्र हेतुमाह **"एतद्"** इति। स्वलक्षणस्य–घटसंबन्ध्यसाधारणस्वरूपस्य, प्रकाशनम्–प्रकाशः, **स्वलक्षणप्रकाशनम्**। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"न च"** इति।

स्मरणज्ञानात् भिन्नत्वेन बहीरूपतया यदि सोऽर्थो भासेत 'स्मर्यमाणस्य' च यत् 'भासनं' तदेव न स्यात् स्मर्यमाणमेव तत् न स्यात्, अनुभूयमानमेव तत् भवेत् इति यावत् । ननु चैवं कथं स्वलक्षणस्य प्रकाशनम्[1] उक्तम् ? एतत् न इदानीं प्रकाशनम् अपि तु पूर्वकाले एव, तदा चासौ बहिरवभासत एव । ननु चेदानीं तर्हि किम् ? विमर्शनम् इति ब्रूमः । ननु प्रकाशनविमर्शनयोः भिन्नकालत्वम् आपतितम् । ततः किम् ? उभय-

---

अत्र टीका :–

**"स्मृते:"** इति पदं पंचम्यन्ततया व्याचष्टे **"स्मरण"** इति । **"भेदे"** इति पदं व्याचष्टे **"भिन्न"** इति । अस्य पदस्य स्वयमेव व्याख्यां करोति **"बही"** इति, इदन्तयेत्यर्थः । **भासेत**–प्रकाशेत । पुनस्तत् किं स्यादित्यत आह **"अनुभूयमानम्"** इति । **तत्**–भासनक्रियाया विषयः सोऽर्थः[2] । उत्तरार्धं व्याख्यातुमवतरणिकां करोति **"ननु च"** इति । **उक्तम्**–पूर्वश्लोके कथितम् । उत्तरं कथयति **"एतत्"** इति । **एतत्**–पूर्वश्लोकोक्तम्, **प्रकाशनम्** । तर्हि किंकालीनमित्यत आह **"अपि तु"** इति । प्रकाशनमिति पूर्वेण संबन्धः । ननु ततः किम् इत्यत आह **"तदा च"** इति । **तदा**–पूर्वकाले, **अवभासत एव**, न तु न भासते इति वर्तमानप्रयोगः[3] पूर्वकालीनवर्तमानविषयत्वेन न विरोधावहः । पुनः शिष्यः प्रश्नयति **"ननु"** इति । **इदानीम्**–स्मृतिकाले । गुरुरुत्तरमाह **"विमर्शनम्"** इति । पुनरपि शिष्यः प्रश्नं करोति **"ननु"** इति । **आपतितम्**–बलादायातम् । गुरुराह **"ततः"** इति । गुरुकृते प्रश्ने शिष्य उत्तरं ददाति **"उभयम्"** इति । **उभयम्**–प्रकाशविमर्शयोर्युगलम् ।

---

1. कथं स्वलक्षणस्य प्रकाशनम् ? उक्तमेतत्–न इदानीम्—K. S. S.
2. सोऽन्यः—C.
3. वर्तमानाप्रयोगः पूर्वकालीनवर्तमानाविषयत्वेन न विरोधावहः—C.

The text has been altered as printed, because the sentence is meant to be a justification of the use of the present tense in "अवभासत एव" with the word "तदा", which expresses the past time.

**मपि न किंचित् स्यात्, अन्योन्यजीवितत्वात् अस्य । मैवम्, यस्य हि संवेदनान्येव भिन्नानि तत्त्वम्, तस्य इदम् अप्रतिसमाधेयमेव, अस्मद्दर्शने तु भिन्नकाला अपि संविदः तत्कालात्यागेनैव एकतावभासनेन[1] स्वतन्त्रः प्रमाता यावदन्तर्मुखतया तावत्यंशे विमृशति तावत् प्रकाशस्य तात्कालिक-बहिर्भावावभासो विमर्शस्य इदानीन्तनान्तर्मुखा स्थितिरिति[2] । एतदेव**

कथं न किंचित्स्यादित्यत आह **"अन्योन्य"** इति। **अस्य**–उभयस्य, प्रकाशो हि विमर्शेनैव प्रकाशो भवति, तद्वक्ष्यति :–

"स्वभावमवभासस्य विमर्शं विदुरन्यथा ।
प्रकाशोर्थोपरक्तोपि स्फटिकादिजडोपमः ॥"

इति । विमर्शस्तु स्फुटमेव प्रकाशकार्यं प्रकाशानन्तरमेव हि विमर्शोत्पादः, यश्च यस्मान्नियमेनानन्तरं भावी स तस्य कार्यम्, तदुक्तम् :–

"अनन्यथासिद्धनियतपश्चाद्भावित्वं कार्यत्वम्"

इति । अत्रोत्तरार्धव्याख्यात्वेन समाधानं करोति **"मैवम्"** इति। कुत इत्यपेक्षायामाह **"यस्य हि"** इति। **तत्त्वम्**–परमार्थः, **अप्रतिसमाधेयम्**–प्रतिसमाधातुमशक्यम्। ननु तव दर्शने किं तत्त्वम् इत्यत आह **"अस्मद्"** इति। **तत्कालात्यागेन**–भासमानाया भिन्नकालतायाः त्यागाभावेनैव स्थितेन, **एकतावभासनेन**–सारभूतेन किंचिद्रूपान्तरप्रमातृतत्त्वापेक्षया सिद्धेन एकतायाः स्फुरणेन, तद्भावेनेति यावत्। इत्थंभावे तृतीया। **स्वतन्त्रः**–स्वरूपभूतसंविदां संयोजने वियोजने च स्वातन्त्र्ययुक्तः, **प्रमाता** भवति, अर्थात् स एव प्रमाता **यावत्**–यस्मिन् क्षणे एव, **अन्तर्मुखतया**–अन्तर्मुखत्वेन, "अहम्" इति यावत्, **तावत्यंशे**–तद्भविष्यमाण-स्मृतितायोग्ये स्वांशे, **परामृशति**–"अहम्" इति परामर्शं करोति स्वप्रकाशत्वात्, **तावत्**–तत्क्षणादेव, **प्रकाशस्य**–पूर्वानुभवस्य, **तात्कालिकबहिर्भावावभासः**–परामर्शावकाशदायी स्वकालीन इदन्तावभासः, भवति। **विमर्शस्य**–परामर्शस्य, **इदानीन्तना**–स्मृतिकालीना, **अन्तर्मुखा**–अहंरूपा, **स्थितिः** भवति। **"इति"**

1. एकताभासनेन—K. S. S.
2. स्थितिरेव—K. S. S.

**वेदनाधिकं वेदितृत्वं—वेदनेषु संयोजनवियोजनयोः यथारुचि करणं स्वातन्त्र्यम्, कर्तृत्वं च एतदेव[1] उच्यते। घटमहमन्वभूवम् इति वा स घटः इति वा 'ऐक्यम्' अनुसंधानम् अनुसंधातुरभिन्नम् इति दर्शयितुं यदेव ऐक्यं 'स एव वेदिता' इति सामानाधिकरण्येन दर्शितम्। 'एष स' इति आच्छादितस्येव प्रमातृतत्त्वस्य स्फुटावभासनं कृतम्, इदम् इति विस्मयगर्भयानया[2] उक्त्या प्रत्यभिज्ञा[3] एव सूचिता। यदाह ग्रन्थकार एवः—**

---

शब्दः प्रमेयपरिसमाप्तौ। ननु तर्हि "इदमहम्" इति ग्रहणं कथं न भवति? सत्यम् अत्र इदन्तायाः अहन्तायाश्च तादृशी पुष्टता न भवति येन ईश्वरदशावत् यथास्वं ताभ्यां ग्रहणं सिद्ध्येत्, किन्तु द्वयोरपि विषयग्रहणायोग्यं लेशद्वयं वर्तते, तदेव च द्वयमेकीभूय "तत्" इति भावेन परिणमते तदेव च "स" इति परामर्शः इति। तावदंशविषयस्य विमर्शनस्यैव वेदितृत्वादिकं कथयति "**एतदेव**" इति। **एतदेव**-स्वांशविषयमहमिति विमर्शनमेव, **वेदनाधिकम्**-प्रमाणरूपाद् बहिर्मुखज्ञाना-दधिकम्, **करणम्**-करणरूपम्, तदुक्तम्:—

"स्वातन्त्र्यमथ कर्तृत्वं मुख्यमीश्वरतापि च"

इति। सूत्रस्थस्य ऐक्यवेदित्रोः सामानाधिकरण्यस्याभिप्रायमाह "**घटम्**" इति। "**घटमहमन्वभूवम्**" इति विस्तरेण परामर्शः, "**स घट**" इति तु संक्षेपेण, **ऐक्यम्**-ऐक्यरूपम्, **अनुसन्धानम्**-अनुसन्धानाख्यक्रिया। भिन्नप्रवृत्तिनिमित्तयोरेकार्थ-निष्ठत्वम् एकविभक्तिकत्वञ्च सामानाधिकरण्यम्, न हि क्रियाक्रियावतोर्भेदो युक्त इति भावः। शिवसूत्रेष्वपि "चैतन्यमात्मा" इति सूत्रेण एतदेव कटा-क्षितम्। "**एष स**" इत्यस्य सूचनीयमर्थमाह "**एष सः**" इति। "एष स" इत्य-नेन पदेन, **विस्मयगर्भया**—विस्मयकारित्वान्यथानुपपत्त्याऽन्तःकृतविस्मयया **उक्त्या, प्रत्यभिज्ञा एव सूचिता,** कुतः? इति। इति कुतः? **अनया उक्त्या आच्छादितस्येव**—परमार्थतो भानेऽपि प्रतिबन्धकवशेनाऽभातकल्पस्य। तदुक्तम्:—

---

1. कर्तृत्वं चैतदेव उच्यते घटमहमन्वभूवमिति—K. S. S.
2. विस्मयगर्भया उक्त्या—K. S. S.
3. प्रत्यभिज्ञानमेव सूचितम्—K. S. S.

**'इत्थं स्वसंवित्तिमपह्नुवानैर्यत्तद्वदद्भिः कलुषीकृतं यत् ।**
**प्रमातृतत्त्वं स्फुटयुक्तिभिस्तान्मूकान्विधाय प्रकटीकृतं तत् ॥'**

**इति ॥ ३ ॥**

**ननु च प्राच्य एव अनुभवो यदि स्मर्यमाणस्य बहिरवभासनरूपः प्रकाशः तर्हि इयत् उच्यताम्—सोऽनुभव इदानीं स्मरणेन विषयीक्रियते—इति, ऐक्येन तु अलौकिकेन कोऽर्थः इति व्यामोहं विहन्तुमाह:—**

---

"भानेप्यभानं भानस्य प्रतिबन्धेन युज्यते"

इति। **प्रमातृतत्त्वस्य**–आत्मतत्त्वस्य, **स्फुटावभासनं कृतम्,** प्रत्यभिज्ञा च विस्मृतस्य प्रत्यक्षीकरणमेव। अत्र ग्रन्थकारवाक्यमुदाहरणत्वेन कथयति **"यदाह"** इति। **कलुषीकृतम्,** विकल्पैरिति शेषः, **तान्**–संवित्तिमपह्नुवानान्, **प्रकटीकृतम्,** प्रमातॄन् प्रति प्रत्यभिज्ञामुत्पाद्य प्रकटं संपादितमित्यर्थः।

एवमत्र संक्षेपः–स्मृतेः भेदे, अर्थात् स्मृतिविषयस्य अर्थस्य स्मृतेः सकाशाद् भेदे, इदन्ताग्रहणेन भेदे सति, स्मर्यमाणस्य भासनं न च युक्तं स्यात्, सोऽर्थः प्रकाशमान एव स्यान्न स्मर्यमाणः इति भावः, तेन–ततः, भिन्नकालानां संविदाम्–अनुभव–स्मृत्यादिज्ञानानाम्, ऐक्यं भवति, एककालत्वात् भिन्नकालस्याकिंचित्करत्वात्। तथा च प्रकाशमानत्वेऽपि स्मर्यमाणत्वमर्थस्य सिद्ध्यतीति भावः। ननु तथापि ग्रहीतुरभावात् कथं सिद्ध्यति इत्यत आह "वेदिता" इति। एष सः–उक्तम् ऐक्यमेव लक्षणया क्रियातद्वतोरैक्यात् योजकः, ऐक्यग्रहीतैव वेदिता ग्रहीता भवति। अद्वैतभङ्गमाशङ्क्य कृतो लक्षणाप्रयोगो न दुष्ट इति॥ ३॥

अथ चतुर्थश्लोकस्यावतरणिकां करोति **"ननु च"** इति।

अत्र टीका:–

**बहिरवभासनरूपः**–बहिःप्रकाशनरूपः, इयच्छब्दाकाङ्क्षां पूरयति **"सोऽनुभव"** इति। **इदानीम्**–स्मृतिकाले। **"क्रियते"** इति, अन्यथा गतस्य तस्य स्वलक्षणविषयत्वायोगादिति भावः। **"इति"** शब्दः प्रमेयपरिसमाप्तौ। **ऐक्येन**–वेदितृतया साधितेन संविद्रामनुसंधानेन, **अलौकिकेन**–लौकिकेष्वप्रसिद्धेन। अवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"नैव"** इति।

**नैव ह्यनुभवो भाति स्मृतौ पूर्वोऽर्थवत्पृथक्।**
**प्रागन्वभूवमहमित्यात्मारोहणभासनात् ॥ ४ ॥**

वैधर्म्यसाधर्म्याभ्यां दृष्टान्तः। 'प्राक्' इति अनुभवकाले यथा स 'पूर्वो' घटादिः अर्थः 'पृथक्' इति इदन्तया भाति स्म नैवं स्मरणकाले स्मृतिज्ञानात् पृथक्त्वेन इदं पूर्वमनुभवनम् इति 'भाति'। यथा च स्मृतिकाले तस्मात् स्मृतिज्ञानात् सोऽर्थः 'प्राक्' इति पूर्वस्वभावो न भेदेन आभाति, स्मृतिकाले बहिरवभासाभावात् एवं तत एव हेतोः 'पूर्वोऽपि अनुभवो' न भेदेन आभाति, कथं तर्हि उभयं भाति? अन्वभूवम् इत्येवम्। एतत् किमुच्यते इति चेत्, 'अहम्'-इत्येवंस्वभावो य 'आत्मा'

अत्र टीका :–

**दृष्टान्तः**—लक्षणया उदाहरणम्, इदं सूत्रमिति शेषः। तत्र प्रथमं वैधर्म्यमेव स्फुटयति "**प्राक्**" इति। "**प्राक्**" इति पदं व्याचष्टे "**अनुभव**" इति। "**अर्थवत्**" इति पदं व्याचष्टे "**यथा**" इति। अर्थस्य पूर्वत्वमर्थादेव[1] सिद्धम्। "**पृथक्**" इति पदं व्याचष्टे "**इदन्तया**"इति। "**स्मृतौ**" इति पदं व्याचष्टे "**स्मरण**" इति। "**पूर्वम् अनुभवनम्**" इत्याभ्यां "**पूर्वः अनुभवः**" इति पदद्वयव्याख्या। साधर्म्यदृष्टान्तं स्फुटीकृत्याह "**यथा च**" इति। चः समुच्चये, **तस्मात् स्मृतिज्ञानात्**–इत्यनयोः "प्राक्" इत्यनेनापेक्षितत्वात् अध्याहारः। "प्राक्" इति पदस्यह अर्थपदविशेषणत्वमाह "**पूर्व**" इति। "**न पृथक्**" इति पदद्वयं संकलय्य व्याचष्टे "**न भेदेन**" इति। कुतः इति हेत्वपेक्षायामाह "**स्मृतिकाले**" इति। "यथा" शब्दाकाङ्क्षां पूरयति "**एवम्**" इति। **तत एव हेतोः**, बहिरवभासाभावाद्धेतोरित्यर्थः। एतेन "प्राक्" इत्यन्तं व्याख्यातम्।

एवं दृष्टान्तद्वययोजना। हि–यस्मात्, स्मृतौ पूर्वः अनुभवः पृथक् नैव भाति, कथम्? अर्थवत्–यथा प्राक् अर्थः पृथग् भाति स्म नैवमनुभव इति।

1. अर्थवदेव सिद्धम्—C.

**पूर्वापरसंविदन्तर्मुखस्वभावः तत्र यत् 'आरोहणम्' विश्रमः तेन हेतुना पूर्वसंविद्रूपतायाः स्वप्रकाशाया 'भासनात्' तल्लीनस्यापि घटस्य स्वप्रकाश-**

---

अत्रार्थानुभवगतस्य भानाभानरूपस्य विरुद्धधर्मद्वयस्य साधनात् वैधर्म्यदृष्टान्तत्वमिति एका योजना।

अथ द्वितीया। स्मृतौ पूर्वोऽनुभवो न पृथग्भाति। कथम्? अर्थवत्—यथा प्राग् अर्थः स्मृतौ न पृथग् भाति तथा अनुभवोऽपि न भाति इति। अत्र च साधर्म्यदृष्टान्तत्वम्, नभानरूपस्य समानधर्मस्योभयत्र साधनात्।

अत्र शिष्यः प्रश्नयति "**कथम्**" इति। **उभयम्**—पूर्वानुभवः पूर्वार्थश्च, न हि अत्र अभानं युक्तमिति भावः। अत्रोत्तरं दातुम् "**अन्वभूवम्**" इति पदमुपन्यस्यति। "**अन्वभूवमित्येवम्**" एवंप्रकारेण भातीत्यर्थः। अत्र शिष्यशङ्कापूर्वकं हेतुं कथयिष्यन् "**अहम्**" इत्यादि पदद्वयं व्याचष्टे '**एतत्**' इति। "**अन्वभूवम्**"[1] इत्यस्य पदस्य हेतुरीत्या सूत्रकारेण स्वयंकृतं व्याख्याग्रन्थं व्याचष्टे "**अहम् इत्येवम्**" इति। "**अहम्**" इति पदं व्याचष्टे "**एवंस्वभावः**" इति, अहमर्थस्वभाव इत्यर्थः। '**इति**' शब्दोऽर्थ-निर्देशपरः। "**आत्म**" पदं व्याचष्टे "**पूर्व**" इति। पूर्वापरसंविद्रूपश्चासावन्त-र्मुखश्च, तत्स्वभावः—तत्स्वरूपः। एतेन "अत सातत्यगमने" इति धात्वनुसारेणार्थः कृतः, सातत्यगमनं हि नित्यत्वं तदेव च पूर्वापरकालव्यापित्वम्। "**तत्र**" तस्मिन्नात्मनि। "**आरोहण**" पदं व्याचष्टे "**विश्रमः**" इति। पंचम्यर्थमाह "**तेन हेतुना**" इति। "**पूर्वसंविद्रूपतायाः**" पूर्वानुभवरूपतायाः, "**स्वप्रकाशायाः**" स्वप्रकाशत्वेन स्थितायाः। सविशेषणं "**पूर्वसंविद्रूपतायाः**" इति पदं प्रसिद्धत्वेन भासनक्रियाकर्तृत्वेन आनीतम्। ननु तद्विषयस्य घटस्य कथमारोहणं संभवती-

---

1. एतदन्वभूवम्—C. The Kārikā does not contain the word 'एतत्'. Bhāskara's use of the singular number in "इत्यस्य पदस्य" also shows that he is quoting only one word. The word 'एतत्', therefore, probably crept in by scribal mistake from the preceding sentence.

**देशीयत्वेन भासनम्[1]। 'आत्मनि च आरोहणम्' विश्रमणा अनुभवस्य अर्थस्य च। प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः—इति न्यायात् संख्याक्षिप्ते तद्वति वा कर्तृभूतेऽस्मदर्थे प्रत्ययार्थेऽनुभवो ब्रुडितः तद्द्वारेण अर्थोऽपि च,**

---

त्यत आह "**तल्लीनस्य**" इति, विषयत्वेन तस्यां संविदि लग्नस्य, अन्यथा प्रकाशाऽयोगात्। **घटस्य**–विषयीभूतस्य घटस्य, **स्वप्रकाशदेशीयत्वेन भासनम्**–आत्मारोहेण भासनं भवति, न हि सत्योत्पलत्वं सितत्वं विहाय कुत्राप्यन्यत्र तिष्ठतीति भावः। एतेन "**आरोहण**" पदं णिज्रहितत्वेन व्याख्यातम्। आत्मगता हि संविद्रूपता आत्मनि स्वयमेव आरोहति तद्द्वारेण अर्थोऽपि। एतदेव पदं णिजन्तत्वेन व्याचष्टे "**आत्मनि च**" इति। **विश्रमणा**–विश्रमकरणम्। कयोरित्यपेक्षायामाह "**अनुभवस्य**" इति। प्रमाता हि तां संविद्रूपतां तद्विषयं च घटादिमात्मन्यारोहति। अत्र च णिचः "णेरनिटि" इति लुप्तत्वं ज्ञेयम्। ननु तर्हि कथं न "**अन्वभूवम्**" इत्यत्र कर्मणो निर्देशः कृत इत्यपेक्षायामाह "**प्रकृति**" इति। अथवा कथम् "**अन्वभूवम्**" इत्यत्र अनिर्दिष्टस्य कर्मणः अनुभवद्वारेणात्मनि विश्रम इत्यपेक्षायामाह "**प्रकृति**" इति। **सह ब्रूतः**–एकीभावमासाद्य कथयतः, प्रकृतिः प्रत्ययार्थे ब्रुडति इति यावत्। **इति न्यायात्**–एवं स्थितेन पूर्वाचार्यन्यायेन, **संख्याक्षिप्ते**–प्रत्ययवाच्यसंख्यामात्रेण धर्मेण धर्मितया[2] आक्षिप्ते, स्वयमेव प्रत्ययवाच्यसंख्याधर्मयुक्ते धर्मिणि वा, केषांचिन्मते संख्यामात्रमेव प्रत्ययार्थः धर्मी तु तदाक्षिप्त एव, केषांचित्तु धर्म्यव प्रत्ययार्थः। **कर्तृभूते**—अनुभवक्रियाकर्तृत्वेन स्थिते, **अस्मदर्थे**—अस्मच्छब्दरूपाहंशब्दवाच्येऽर्थे "अस्मद्युत्तमः" इति सूत्रानुसारेण उत्तमपुरुषभूतलुङादेश "मिप्" प्रत्ययवाच्यभूते वस्तुनि, **अनुभवः**–अनुपूर्व "भू" धातुप्रकृत्यर्थभूतः, **ब्रुडितः**–लीनीभूतः, **तद्द्वारेण**—अनुभवद्वारेण च, **अर्थोऽपि**—तद्विषयभूतो घटोपि, ब्रुडितः इति

---

1. अवभासनम्—K. S. S.
2. धर्मिताया—C.

**न तु स्वातन्त्र्येणैव असौ, तदर्थमेव कर्म न निर्दिष्टम्। घटादिः पुनः अनुभवकाले न अस्मदर्थमारोहति, 'हि' यस्मात् नैव भाति पूर्वोऽनुभवः पृथक् अपरार्धोक्तात् हेतोः, तस्मात् संविदामैक्यम् इति पूर्वेण संबन्धः।**

---

योजना। अयं भावः—अर्थं विना अनुभवः स्वात्मरूप एव। यदुक्तम्:—

"पृथक्स्थयोर्ग्रहे रूपं तत्सत्यमितरन् मृषा।
इति कः कुत्र रोहेत"

इति। अनुभवखण्डने सिद्धमेवार्थखण्डनम्। ननु तर्हि अनुभवार्थयोः को विशेष इत्यत आह **"न तु"** इति। **असैा**-अर्थः, न हि सितोत्पलमानयेत्युक्ते विशेषणीभूतः सितगुण आनेतुं शक्यत इति भावः। स्वातन्त्र्याऽस्वातन्त्र्यरूप एवानयोर्भेद इति भावः। एतदवष्टंभेन कर्माऽनिर्देशस्य युक्तत्वं कथयति **"तदर्थमेव"** इति। न हि अयत्नसिद्धे वस्तुनि यत्नापेक्षेति भावः। ननु "अनुभूतोऽर्थः" इत्यादौ अनुभवस्याप्यर्थविशेषणता दृश्यते एव, विशेषणविशेष्यभावो हि काल्पनिक एव, सत्यम्, अयं विशेषणविशेष्यभावः बाह्यव्यवहारयोग्य एव, बहिरर्थस्य प्राधान्यात् ज्ञानस्य तु गौणत्वात्। आन्तरे व्यवहारे तु ज्ञानस्यैव प्राधान्यमर्थस्य तु अप्राधान्यमित्यलम्। ननु तर्हि "घटमनुभवामि" इत्यत्र कथं कर्मनिर्देश इत्यपेक्षायाम् आह **"घटादिः"** इति। **न आरोहति**, बहिर्मुखत्वेन ग्रहणात्, अन्यथा "इदम्" शब्दायोगात् "अमुं घटम्" इति युक्तस्तत्र प्रयोगः। **"हि"** शब्दद्योतनीयम् अस्य श्लोकस्य पूर्वश्लोकं प्रति हेतुभावं प्रकटीकरोति **"यस्मात्"**[1] इति। **पृथक्**—इदन्तया। **पूर्वेण**—पूर्वश्लोकेन, **'प्राक्'** पदमनपेक्ष्यैव **"अपरार्धे"** इत्युक्तम् "भूयसा व्यपदेशा भवन्ति" इति न्यायात्।

---

1. 'यस्मात् इति' is not found in the manuscript. Bhāskara's practice is to quote the beginning of the portion of the Vimarśinī to be explained at the end of his introductory sentence. That has not been followed here. But the sentence is incomplete without it. Hence we have amended the text as printed.

लुङा भूतकालस्य द्योतितत्वात् 'प्राक्' इति भिन्नक्रमः, उत्तमपुरुषेण अस्मदर्थस्य 'अहम्' इत्यपि। आरोहणम् इति, रुहिरिति अणिजन्तः णिजन्तोपि[1] ॥ ४ ॥

ननु क एवमाह—अनुभवः पृथक् न भाति इति, घटवत् न भाति इति चेत् किं ततः ? घटोऽपि हि न अनुभवसख्यः[2] भाति इति

---

'प्राक्' शब्दस्य पूर्वार्धे योजने हेतुमाह "**लुङा**" इति। लुङा—लुङिति प्रत्ययेन, "**द्योतितत्वात्**" इति, "लुङ्" इति सूत्रमाहात्म्यादिति भावः। समुच्चयेन "**अहम्**" इति शब्दस्यापि भिन्नक्रमत्वमेव कथयति "**उत्तम**" इति। **उत्तम-पुरुषेण**-मिपा, **अस्मदर्थस्य**—"अहम्" इत्यस्य, द्योतितत्वात् "**अहम् इत्यपि**" भिन्नक्रमो भवति, "**अन्वभूवम्**" इत्यस्य कर्तृत्वेन न वर्तते इति भावः। ननु कथमेकस्य "आरोहण" शब्दस्य "विश्रम" "विश्रमणा" रूपमर्थद्वयमित्य-पेक्षायामाह "**आरोहणम्**" इति। आरोहणशब्दस्य अणिजन्तस्य णिजन्तस्य च विग्रहः। **रुहिरिति अणिजन्तः**, "रुह बीजजन्मनि" इति धातुः यस्य विश्रमोऽर्थ इति भावः। **णिजन्तोऽपि,** यस्य विश्रमणाऽर्थ इति भावः॥ ४॥

अथ पंचमश्लोकस्यावतरणिकां करोति "**ननु**" इति।

अत्र टीका :—

**पृथक्**—इदन्तया, नेदं वक्तुं युक्तमिति भावः। सत्यं भाति परन्तु "घटवन्न भाति" इति गुरुशङ्कापूर्वं हान्यभावं स्वस्य गुरुं प्रति कथयति "**घटवत**" इत्यादि "**किं ततः**" इत्यन्तम्। **किं ततः**, न कापि हानिरिति भावः। हान्य-भावमेव घटेन समानन्यायत्वमाश्रित्य कथयति "**घटोपि**" इति। **अनुभवसख्यः**—अनुभवसदृशः, अनुभववदिति यावत्। "**इति**" शब्दो हेतौ, अतः स घटः किन्न

---

1. रुहिरपि णिजन्तोऽपि – K. S. S.
2. अनुभवभङ्ग्या—K. S. S.

**किं न भाति[1] ? स्वभावेन भाति इति तु उभयत्रापि समानम्। तथा हि— अतीतानागतसूक्ष्मादि यथा योगिज्ञाने विषयीभवति इति अभ्युपगतम्, तथा परचित्तमपि**

**'प्रत्ययस्य परचित्तज्ञानम्।'** ( योगद० ३ पा० १६ सू० )

**इत्यादौ। तत्र ज्ञानवृत्तिपरिणतमेव सत्त्वं चित्तशब्देनोक्तम्, अन्यथा प्रत्ययस्य संयमविषयीकार्यत्वं कथमुच्येत[2], आलम्बनयोगश्च कथं शङ्क्येत**

---

भाति इत्यर्थः। शिष्यः पुनराक्षेपं करोति **"किन्न"** इति। गुरुः अभानम् अयुक्तं ज्ञात्वा अन्यथा अर्थं करोति **"स्वभावेन भाति"** इति, घटवन्न भाति इत्यस्य अभानं नैवार्थः किन्तु स्वरूपेण भानमेवेत्यर्थः। शिष्यः स्वभावेन भान-मनुभवेऽप्यारोपयति **"इति तु"** इति। **इति तु**—एतत्तु, स्वभावेन भानं समानं भवति, अनुभवस्यापि घटस्वभावेन अभानात्। एतदेव समर्थयितुमुपक्रमं करोति **"तथा हि"** इति। **"तथा हि"** शब्दाक्षिप्तं वस्तु प्रकटयति **"अतीत"** इति। **"आदि"** शब्देन विप्रकृष्टादेर्ग्रहणम्, **अभ्युपगतम्**—अङ्गीकृतम्, अतीतादिविषयीभाववत् परचित्तमपि विषयीभवतीत्यभ्युपगतम्। कुत्राभ्युपगत-मित्यपेक्षायामाह **"प्रत्ययस्य"** इति। **प्रत्ययस्य**—योगिज्ञानस्य, **परचित्तज्ञानम्** भवति, **इत्यादौ**, एवमादौ पतञ्जलिसूत्रे इत्यर्थः। नन्वत्र चित्तस्य ज्ञानमुक्तं न तु ज्ञानस्येत्यत आह **"तत्र"** इति। **तत्र**—समनन्तरोक्ते पातञ्जलसूत्रे, ज्ञानवृत्त्या—ज्ञानाख्यबुद्धिवृत्तिभावेन, परिणतम्—रूपान्तरं गतम्, **सत्त्वम्**—बुद्धिरूपं महत्तत्त्वम् **उक्तम्**, न तु लोकप्रसिद्धं मनः तस्य संकल्पमात्रनिष्ठत्वेन मनःशब्देन कथनात्। **अन्यथा**—ज्ञानवृत्तिकथनाभावे, **प्रत्ययस्य**—परज्ञानस्य, **संयमविषयीकार्यत्वम्**—योगिप्रणिधानविषयीकरणयोग्यत्वम्, **कथमुच्येत**, विरोधापातात्। तथा **आलम्बनयोगश्च**—स्वस्वविषयसंबन्धश्च, अर्थात् तस्य चित्तस्य **कथं**

---

1. भाति इति, किं न भाति—K. S. S.
2. किमुच्यते—K. S. S.

'न च सालम्बनम्' इति। तस्मात् परकीयमनुभवनमिव निजमपि विषयीक्रियताम् इत्याशङ्क्य दृष्टान्त एवासिद्धः इति 'भान्ति' इत्यन्तेन, अभ्युपगमेन वा सिद्धत्वेऽपि प्रकृतेऽर्थे विषमः इति शेषेण दर्शयति :—

**योगिनामपि भासन्ते न दृशो दर्शनान्तरे।**
**स्वसंविदेकमानास्ता भान्ति मेयपदेऽपि वा ॥ ५ ॥**

'योगिनाम्' यत् एतत् 'दर्शनान्तरम्' भावनाद्युद्भवः परचित्तविषयो ज्ञानविशेषः, तत्र 'दृशः' इति उपलब्धयो न भान्ति। तथा हि–सौगतानां

---

**शङ्क्येत**। कुत्र इत्यपेक्षायामाह **"न च"** इति, अस्मिन् सूत्रे इत्यर्थः। अयं भावः, यदि चित्तशब्देन अस्मिन् सूत्रे मनस एवोक्तिः स्यात् तर्हि अन्यसूत्रे आलंबनविषयां शङ्कां योगिनां परज्ञानं विषयसंबद्धमेव विषयीकरोत्वित्येवंरूपां न कुर्यात्। कर्णे पृष्टस्य कटिपृष्ठचालनकारित्वापातात् इति। उपसंहारं करोति **"तस्मात्"** इति। **निजमपि**–स्वकीयमनुभवनमपि, सामान्यप्रमात्रा **"विषयीक्रियताम्"** इति, अनुभवत्वाऽविशेषादिति भावः। **दृष्टान्तः**–योगिज्ञानेन परज्ञानविषयीकरणरूपः। **"भान्ति"** **इत्यन्तेन**–चतुर्थपादादिभूत "भान्ति" इतिशब्दान्तेन निषेधपरेण श्लोकखण्डेन, **अभ्युपगमेन**–अङ्गीकाररूपेण, **शेषेण वा**–**"मेयपदेऽपि वा"** इत्येवंरूपेण खंडेन वा। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"योगिनाम्"** इति।

अत्र टीका :–

सूत्रस्थं **"दर्शनान्तरे"** इति पदं व्याचष्टे **"भावना"** इति। भावनायाः–आत्मभावनायाः, आदिशब्दात् करणादेश्च, उद्भवः–प्रादुर्भावो यस्य सः, **परचित्तविषयः**–अन्यज्ञानविषयः, **ज्ञानविशेषः**–अन्यज्ञानेभ्योतिशययुक्तं ज्ञानम्, **तत्र**–तस्मिन् ज्ञानविशेषे। **"दृशः"** इति पदं व्याचष्टे **"उपलब्धयः"** इति, ज्ञानानीति यावत्। न भानम् एव समर्थयितुमुपक्रमं करोति **"तथा हि"** इति। **"तथा हि"** शब्दाक्षिप्तं वस्तु प्रकटयति मतभेदेन **"सौगतानाम्"**

**तावत् स्वप्रकाशैकरूपं ज्ञानम्, तत् चेत् ज्ञानान्तरेण वेद्यम्, तर्हि यद् अस्य निजं वपुः अनन्यवेद्यतया प्रकाशनं नाम, न तत्प्रकाशितं स्यात्। सांख्यानामपि पुरुषच्छायैव उपलब्धिः, पुरुषश्च असंवेद्यपर्वा इति कथं वेद्या[1] स्यात्। वैशेषिकाणामपि आत्मनि अभेदेन समवायि संवेदनं परगतं मनसा कथं गृह्येत अन्तःशरीरवृत्तिना, तच्छरीरान्तरनुप्रवेशे तु तस्यैव अहम् इति शरीरीकरणात् अहन्तावभासितत्वात् आत्मनो भेदो**

इति। **सौगतानाम्**–सुगतभक्तानाम्, बौद्धानामिति यावत्। स्वप्रकाशम् एकम्-केवलम्, रूपम्-स्वरूपं यस्य तादृशम्, अनन्यवेद्यतया प्रकाशनं नाम स्वप्रकाशं नामेत्यर्थः। **"न स्यात्"** इति, स्वप्रकाशत्व[2]व्याघातापातादिति भावः। **पुरुषच्छायैव**–बुद्धौ पुरुषप्रतिबिंब एव, **उपलब्धिः**–ज्ञानाख्यबुद्धिवृत्तिभिन्नं प्रकाशाख्यं फलम्, **असंवेद्यपर्वा**–असंवेद्यस्वरूपः, **"वेद्या"** इति उपलब्धिविशेषणम्, न हि प्रतिबिंबं बिंबविलक्षणं युक्तमिति भावः। **वैशेषिकाणाम्**–तार्किकाणाञ्च, **समवायि**–गुणत्वेन समवायवृत्त्या स्थितम्, **संवेदनम्**–ज्ञानम्, **परगतम्**–परात्मनि समवेतम्, **मनसा**, कीदृशेन? **अन्तःशरीरवर्तिना**–शरीरान्तर्गतेन, अत्र मनसः विभुत्वाभावमेव हेतुत्वेन योजनीयम्। **तच्छरीरान्तःप्रवेशे**—परशरीरान्तःप्रवेशे, **तस्यैव**–परशरीरस्यैव, **शरीरीकरणात्**-स्वशरीरतया संपादनात्, अहंभावगृहीतमेव शरीरं स्वशरीरमिति भावः। तथा **अहन्तावभासितत्वात्**–परशरीरस्यापि अहन्तया प्रकाशितत्वात्, **आत्मनः**–निजात्मनः, **भेदः**–परात्मना सह भेदः, **विगलेत्**–नश्येत्, इदन्ताग्रहणमात्रस्यैव भेदत्वात्, तथा च अपसिद्धान्तापत्तिस्तेषामिति भावः। ननु वैशेषिकमते आत्मनो नित्यानुमेयत्वमिति त्वया मनसा "अहम्" इति प्रत्यक्षग्रहणेन भेदविगलनं प्रसञ्जितमित्यत आह **"नित्य"** इति। **नित्यानुमेयत्वम्**–बुद्ध्यादिलिङ्गेन सर्वदैवानुमितिविषयत्वम्, मानसप्रत्यक्षविषयत्वस्याङ्गीकारादिति

1. इति कथं वेद्यः स्यात् – K. S. S.
2. स्वप्रकाशव्याघातापातात्—C.

विगलेत्, नित्यानुमेयत्वं तु न आत्मन उपपद्यते, ज्ञानस्य च ज्ञानान्तरवेद्यत्वेऽनवस्थानादि[1] उक्तम् ।

तस्मात् योगिनः परचित्तवेदनावसरे इयान् प्रकाशः–एतद्देहप्रकाशसहचारी घटसुखादि[2]प्रकाशः–इति । तत्र घटसुखादि इदन्तया भाति, तद्गतस्तु प्रकाशोऽहम्–इत्येव स्वप्रकाशतया प्रकाशते । प्रमात्रीकृतपरदेहप्राणादिसमवभाससंस्कारात् तु तन्निष्ठाम् इदन्ताम्

---

भावः । वैशेषिकैः स्वयमेवोक्तं दोषान्तरमप्याह "ज्ञान" इति । "**अनवस्थानादि**" इति, तस्याप्यन्येन ग्रहणं तस्याप्यन्येन इत्येवंरूपात् अनवास्थानात्, "**आदि**" शब्देन चक्रकादेर्ग्रहणम् ।

पूर्वार्धं व्याख्याय "**भान्ति**" इत्यन्तम् उत्तरार्धं व्याख्यातुमवतरणिकां करोति "**तस्मात्**" इति । **तस्मात्**–यतो योगिनां दर्शनान्तरे दृशो न भासन्ते, सर्वथाऽभासनञ्च अयुक्तमेव, ततः कारणात् । "**इयान्**" इति पदेनापेक्षितं वस्त्वाह "**एतद्**" इति । एतद्देहप्रकाशस्य–परदेहावच्छिन्नप्रकाशस्य, सहचारी–विषयभावेन सहचरणशीलः, **घटसुखादिप्रकाशः**–घटसुखादिरूपः प्रकाशो भवति । "**इति**" शब्दः प्रमेयपरिसमाप्तौ । ननु ततः किमित्यत आह "**तत्र**" इति । **तत्र**–तस्मिन् परचित्तज्ञाने, **घटसुखादि**–परज्ञानविषयीभूतं बाह्यमान्तरं वा वस्तु घटरूपं सुखरूपं वा, आदिशब्दात् सर्वं बाह्यमान्तरञ्च वस्तु, **इदन्तया भाति**–इदन्ताग्रहणे एव योग्यत्वात् । **तद्गतस्तु**–घटसुखादिविषयीभूतस्तु, **प्रकाशः**–अनुभवः, "**अहम्**" **इत्येव स्वप्रकाशतया**–स्वप्रकाशभावेन, **प्रकाशते**, तादृक्स्वभावत्वात् । फलतस्तु भासनापेक्षैव नास्ति सदा स्वात्मत्वेन स्थितत्वादिति भावः । तर्हि कथम् "इदं परज्ञानम्" इति कथयत्यसौ इत्यत आह "**प्रमात्रीकृत**" इति । प्रमात्रीकृतम्–अव्युत्पन्नत्वेन पूर्वम् अप्रमातृरूपमपि प्रमातृतया संभावितं यत् परदेहप्राणादि, तस्मिन्यः समवभासः–इदन्तया

---

1. अनवस्थादि–K. S. S.
2. घटसुखादिः–K. S. S.

**एव प्रकाशभागेऽपि मन्यमान इदं परज्ञानम् इति अभिमन्यते अविगलित-स्वपरविभागो योगी। प्राप्तप्रकर्षस्तु सर्वम् आत्मत्वेन पश्यन् स्वसृष्टमेव स्वपरविभागं मन्यते[1] इति ज्ञानस्य न योगिज्ञानेन प्रकाश्यता। भवतु वा तथापि प्रकृतं[2] न एतत्समम्। तथा हि—अयमनुभवति इति परनिष्ठ एव**

ज्ञानम्, तस्य यः संस्कारः—पूर्वभ्रामितचक्रभ्रमणरूपः, तस्मात्, **तु, अविगलित स्वपरविभागः**—ईश्वरावस्थां प्राप्तः, न तु सदाशिवादिदशामधिशयानः, **योगी, तन्निष्ठाम्**—परदेहादिविषयाम्, **इदन्ताम्**—इदंभावम्, **प्रकाश-भागेऽपि**—देहादिप्रमातृतादायिनि तदवच्छिन्ने प्रकाशांशेऽपि, **इदं परज्ञानम् इति अभिमन्यते**—अभिमानेन जानाति, न तु तथा संभव ीति भावः। ननु विगलितस्वपरविभागस्य योगिनः का वार्तेत्यत आह "**प्राप्त**" इति। **प्राप्तप्रकर्षः**—स्वपरविभागगलनेन प्राप्तातिशयो योगी तु, **सर्वम्**—समस्तं वेद्यराशिम्, **आत्मत्वेन पश्यन्**—"अहम्" इति ग्रहणेन, **स्वपरविभागं स्वसृष्टमेव मन्यते**—जानाति, तथा च न तस्यापि ज्ञानान्तरेण परज्ञान-भानमिति भावः। अतश्च प्रतारकैः केनापि प्रयोगेण साधितमपि परचित्तज्ञानं दृष्ट्वा न तत्रैव निष्ठा कार्या सर्वत्र स्वात्मतादर्शनमात्रस्यैव परमयोगित्वात्, तस्य पराविषयत्वात् इत्यलम्। फलितमाह "**इति**" इति। **इति**—अतः कारणात्,। एवमत्र वाक्यार्थः।

पदार्थस्तु, स्वसंवित्,—स्वरूपभूता संवित्, एकम्—केवलम्, मानं यासां ताः, स्वप्र-काशा इत्यर्थः, **ताः**—दृशः, **भान्ति**—प्रकाशन्ते इति।

"**मेयपदेऽपि वा**" इति पदं व्याचष्टे "**भवतु वा**" इति। "**भवतु वा**" इत्यनेन पक्षान्तरद्योतकस्य "**अपि वा**" इत्यस्य व्याख्या। **प्रकृतम्**—दृशोऽन्य-दृगवेद्यत्वरूपम् आरब्धं वस्तु, **एतत्समम्**—योगिदृगन्तरवेद्यदृक्समम्। कुतो न समम् इत्यत आह "**तथा हि**" इति। **परनिष्ठः**—परकर्तृकत्वावच्छिन्नः, **एव**, एतेन

1. पश्यति—K. S. S.
2. प्रकृते—K. S. S.

असौ अनुभवे योगिनः प्रकाशः, न तु अहमनुभवामि इति आत्मारोहेण वर्तमानः[1], इह तु अन्वभूवम् इति अहमंशविश्रान्तिः अनालीढेदंभावैव अनुभवस्य इति युक्तमुक्तम्–यस्मात् अनुभवः पृथक् न भाति तस्मात् ऐक्यं भिन्नकालानां संविदां वेदिता इति ॥ ५ ॥

यद्यहंभावविश्रान्तिवशात् अनुभवः स्मृतौ पृथक् न भाति इति उच्यते, तदा परामर्शान्तरं साक्षादेव इदन्तया अनुभवं परामृशत् यदि वा इदंभावोचितघटादिविश्रान्तताम् अनुभवस्य प्रथयत् उपलब्धम्, इति

---

**"मेयपदे"** इत्यस्य व्याख्या, परस्य मेयत्वात्, पदे-गोचरे, परनिष्ठतयेति यावत्। तदुक्तम् :–

"स परो यस्तु मीयते"

इति। **अनुभवे**—परानुभवे, **आत्मारोहेण**—आत्मविश्रान्त्या, **वर्तमानः**, आत्मकर्तृकत्वावच्छिन्न इति यावत्। **"प्रकाशः"** इति **"भान्ति"** इत्यस्य व्याख्या, काकाक्षिगोलकन्यायेन तस्यात्रापि योजनात् । **इह**–प्रकृते, **अनालोढेदंभावा**–अस्पृष्टेदन्ता । प्रमेयजातमुपसंहरति **"इति"** इति । **इति**—अतः कारणात् । किमुक्तमित्यपेक्षायामाह **"यस्मात्"** इति । "नैवं ह्यनुभवो भाति" इत्यत्र श्लोके इति शेषः ॥ ५ ॥

अथ षष्ठश्लोकस्यावतरणिकां करोति **"यद्यहंभाव"** इति ।

अत्र टीकाः–

**परामर्शान्तरम्**–"अन्वभूवम्" इति परामर्शादन्यः परामर्शः "सा मे दृगासीत्" इत्येवंरूपः। इदन्तापरामर्शम् अनुभवस्य अत्यन्तमयुक्तं ज्ञात्वा पक्षान्तरमाह **"यदि वा"** इति । **प्रथयत्**—प्रथां नयत्, **उपलब्धम्**—अनुभूतम्,

---

1. आत्मारोहेण, इह तु—K. S. S.

तदनुसारेणापि किं न व्यवह्रियते इति पराभिप्रायं प्रतिक्षिपति :—

**स्मर्यते यद्दृगासीन्मे सेत्येवमपि[1] भेदतः।**
**तद्व्याकरणमेवास्या मया दृष्टमिति स्मृतेः॥ ६॥**

लोकस्य तावत् एवं न संवेदनम्, स हि न पृथग्भूतां दृशं कांचित् मन्यते–'सा दृक् मे आसीत्' इत्येवम्[2]। एवमपि तु "यत् स्मर्यते" एवंभूतमपि यत् स्मरणं कस्यचित् विवेचकंमन्यस्य, तत् स्मृतेर्व्याकरणम्, पदस्येव

---

**तदनुसारेण**—तस्य परामर्शान्तरस्यानुवृत्त्या, **प्रतिक्षिपति**—उपन्यस्य एवं प्रतिसमाधत्ते। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"स्मर्यते"** इति।

अत्र टीका :–

**"एवम्"** इति, "सा मे दृगासीत्" इत्येवंरूपम्, **संवेदनम्**–स्मृतिज्ञानम्। कुतो नास्तीत्यपेक्षायामाह **"स हि"** इति। **सः**—लोकः, **पृथग्भूताम्**—संबन्धित्वेन कथनात् षष्ठीद्योतितभेदभूषिताम्, एतेन **"भेदतः"** इत्यस्य व्याख्या। **कांचित्**, वक्ष्यमाणद्वाविंशतिभेदभिन्नज्ञानजातमध्ये एकामपीत्यर्थः। **न मन्यते,** "अहमनुभवामि" इत्यादिरूपाहमंशविश्रान्ततयैव सर्वत्र संवेदनात् इति भावः। सूत्रे स्थितामेतामेव दृशमनुकृत्य दर्शयति **"सा"** इति। एतच्चासंभवनं सूत्रस्थेन **"अपि"** इति शब्देन द्योतितम्, अपिशब्दस्य असंभवद्वस्तुसंभवद्योतकत्वात्। "इति **एवम्**" इति शब्दाभ्यां दृक्स्वरूपपरामर्शनं कृतम्। कथंचित्संभवेपि त्वदिष्टं न सिद्ध्यतीत्याह **"एवमपि तु"** इति। एतेन **"इत्येवमपि"** इति व्याख्यातम्। **यत्स्मर्यते** इति व्याचष्टे **"एवंभूतम्"** इति। आक्षिप्तं कर्तारं दर्शयति **"कस्यचित्"** इति, मिथ्याविवेचकत्वाभिमानयुक्तस्येत्यर्थः। एतेन पूर्वार्धं गतव्याख्यम्। तथा च योजना। केनचिद्विवेचकंमन्येन कर्त्रा "सा मे दृगासीत्" इत्येवमपि भेदतः यत् स्मर्यते इति।

---

1. सैवमित्यपि—K. S. S.
2. इत्येवम्। अपि तु—K. S. S.

प्रकृतिप्रत्ययार्थनिरूपणं काल्पनिकं विभज्य आकरणं परत्र प्रतिपादनमात्रम्।
सोऽपि यदि मूलप्रतीतिं[1] वेदयते पूर्वोक्तक्रमेण, तदा अनुभवं पृथग्भूतं न वेद, यत एव तत् राहोः शिरः इतिवत् कल्पितं भेदं मन्यते। अन्यथा स घटः इतिवत् 'सा दृक्' इत्यत्रापि प्राक्तनं दृगन्तरम् अपेक्षणीयं स्यात्। तत् इत्यनेन हि घटस्य वा दृशो वा पूर्वानुभवविषयापत्तिः उच्यते, अन्यथा

---

उत्तरार्धं व्याख्यातुं **"तत्"** शब्दयोजनां करोति "तत्" इति । तत्—पूर्वार्धोक्तं स्मरणम्, **"स्मृतेर्व्याकरणम्"** इति पदं व्याचष्टे **"पदस्य"** इति । **पदस्येव**—"कुंभकार" इति पदस्येव, **प्रकृतिप्रत्ययार्थनिरूपणम्**—डुकृञ्प्रकृतिकाण्[2]प्रत्ययार्थनिरूपणम् "कर्मण्यण्" इति सामान्यसूत्रेण, कदाप्रकृतिकप्रत्ययार्थनिरूपणम् "आतोऽनुपसर्गे" इति विशेषसूत्रेण, **काल्पनिकम्**, न तु सहजम्, परमार्थतोऽखंडस्य पदस्यैव सोऽर्थः । तदुक्तम्:—

"प्रकृत्यादिविभागकल्पनया सामान्यविशेषवता सूत्रेण"

इति। **"वि"** इत्युपसर्गरूपमवयवं व्याचष्टे **"विभज्य"** इति। **"आकरणम्"** इति धातुप्रत्ययसमुदायरूपमवयवं व्याचष्टे **"परत्र"** इति। **प्रतिपादनमात्रम्**, न तु सम्यग्बोधनम् इत्यर्थः । कुतः प्रतिपादनमात्रमित्यत आह **"सोपि"** इति । **मूलप्रतीतिम्**—"सा मे दृगासीत्" इति प्रतीतेः मूलतया स्थिताम्, अन्यथा अस्या अनुत्थानात्, **"वेदयते"** इति स्वार्थणिजन्तः, वेत्तीत्यर्थः। **अनुभवम्**—"सा मे दृगासीत्" इति स्वतो भेदेनोक्तमनुभवम् । पुनः किं वेदयते इत्यत आह **"तत्"** इति। **"राहोः शिरः" इतिवत्**, अत्र राहोः शिरोमात्ररूपत्वात् स्फुटमेव षष्ठीसूचितो भेदः यथा काल्पनिकः तथैतदपीत्यर्थः। **अन्यथा**-काल्पनिकभेदानङ्गीकारे, **प्राक्तनम्**-संस्कारतया स्थितं पूर्वकालीनम्, **दृगन्तरम्**—अन्यमनुभवम्, **"अपेक्षणीयं स्यात्"** इति, "स" इति विमर्शस्यापेक्षिकत्वादिति भावः। कुत इत्यपेक्षायामाह **"तत्"** इति । ननु ततोपि किम् इत्यत आह

---

1. विमृशति—K. S. S.
2. कृञ्प्रकृतिकाण्—C.

**दृक् इत्येव स्यात्। ततश्च दृक् मया दृगन्तरेण अनुभूता इति आपतेत्। तत्रापि तथात्वेऽनवस्था। ननु स्मृतेः मौलिकं किं रूपम्? उच्यते–मया दृष्टम् इति। ननु अत्र दयितावदननलिनादिविश्रान्तं दर्शनम् उक्तम् न तु आत्मारूढम्, कर्मणि निष्ठोत्पत्तेः। स एष स्ववाचमेव न चेतयति। कर्तुः क्रियया हि आप्यं कर्म इति दृशिक्रियायाः कर्तृनिष्ठतैव। तथा च कर्तृस्था-**

---

"**ततश्च**" इति। आपततु ततोपि किमित्यत आह "**तत्रापि**" इति। **तत्रापि**–दृगन्तरेऽपि, **तथात्वे**—दृगन्तरापेक्षित्वे। "**मया**" इति ग्रन्थस्य योजनां कर्तुमाह "**ननु**" इति। परिहारमाह "**उच्यते**" इति। प्रतिज्ञामेव सफलयति "**मया**" इति। उपलक्षणं चैतत् "अन्वभूवम्" इत्यादेः। अस्यैव हि प्रयोगस्य दर्शनस्यात्मविश्रान्तिप्रतिपादनपरस्य आत्मदर्शनविभागकरणं "सा मे दृगासीत्" इति प्रयोग इति भावः। स्पष्टतयाऽस्य व्याख्या न कृता योजनं चात्र स्फुटमेवेत्यस्माभिरपि नायस्तम्।

शिष्यः प्रश्नयति "**नन्वत्र**" इति। **दयितावदननलिनादिविश्रान्तम्**, लक्षणया विषयविश्रान्तम्, कुत इत्याह "**कर्मणि**" इति। **निष्ठोत्पत्तेः**-क्तप्रत्ययोत्पत्तेः, प्रत्ययस्य हि विश्रान्तिस्थानप्रधानपरत्वमेवेति भावः। गुरुरुत्तरयति "**स एष**" इति। **स एषः**, वैय्याकरण इत्यर्थः। **न चेतयते**—न जानाति। कां वाचमित्यपेक्षायां तद्वाक्यमनुकृत्याह "**कर्तुः क्रियया**" इति। अत्र च मलभतं "कर्तुरीप्सिततमं कर्म" इति सूत्रम्, अतिशयेनाप्तुमिष्टमीप्सिततमम्, तदेव प्राप्यमिति। नत्वत्र दृशिक्रियाया अपि आप्यघटादिविषयपरत्वम्, द्रष्टुरेव दर्शनेन अतिशयासादनात्, न हि दयितावदनादिदर्शनेन तद्वदनादेः कोप्यतिशयः, अपि तु द्रष्टुः चैत्रस्यैव। ननु कथं दृशेः कर्तृनिष्ठतेत्यत आह "**तथा च**" इति। "**आहुः**" इति, वैय्याकरणाः, यद्यपि तैर्दृशेः कर्तृस्थभावकत्वमुक्तम्, तदुक्तम्:–

"दृशिः कर्तृस्थभावकः रुहिः कर्तृस्थक्रियः"

इति, तथापि "भवादयो धातवः" इति सूत्रेण क्रियाया एव धात्वर्थतारूपं भावत्वमपेक्ष्य क्रियाया एव धातुवाच्यत्वमुक्तम्, तदनुरोधेनेहापि दृशेः कर्तृस्थक्रियत्वमुक्तम्, परमार्थतस्तु न क्रियैव धात्वर्थः, "गडि वदनैकदेशे" इत्यत्र अक्रियारूपस्य

**मेव दृशिक्रियामाहुः 'दर्शयते भृत्यान् राजा' इत्यादौ। जैमिनीयैरपि ज्ञानरूपा दृशिः भावनात्मिका प्रमातृविश्रान्तैव उक्ता, केवलं प्रकटता**

वदनैकदेशस्यापि धात्वर्थत्वात्, अत एव तार्किकैरपि दर्शनं गुणतयैवोक्तमित्यलं प्रपञ्चेन। यच्च भावेनैव क्रियाग्रहणेऽपि सिद्धे क्रियायाः पृथगभिधानं तद्बाहुल्येन प्राधान्यापेक्षयैवेति नान्यथा भ्रमितिव्यम्। कुत्रोदाहरणे आहुरित्यपेक्षायामाह **"दर्शयते"** इति। राजा, कर्ता, भृत्यान् स्वात्मानं स्वयं दर्शयते ते च तं पश्यन्तीत्यर्थः। अयमत्र भावः। "गतिबुद्धि" इति सूत्रेण गतिज्ञानाद्यर्थानां धातूनां सणिचि प्रयोगे कर्तुरेव कर्मत्वमादिष्टम्, ततस्तेषां "कर्मवत्कर्मणा" इत्यनेनैव सिद्धमात्मनेपदम्, "णेरणौ" इति सूत्रेण तु यः पुनः प्रयत्न आरब्धः स कर्मस्थ-क्रियाणामेव "कर्मवत्" इत्यनेन सूत्रेण आत्मनेपदं सिद्धं न तु कर्तृस्थक्रियाणामपि इति तेषामपि यथा स्यादित्येवमर्थः। तथा च "स्मरति वनगुल्मं कोकिलः" "स्मारयति वनगुल्म एनं स्वयमेव" इत्यत्र न आत्मनेपदम्, "अनाध्याने" इत्यनेन पर्युदासनात्। ततश्च णिजन्तप्रयोगे आत्मनेपददर्शनेनैव अत्र कर्तृस्थक्रियत्वं दृढीभूतम्, अन्यथा राजानं पश्यन्तीत्येतन्मात्रस्यैवाभीष्टसाधकत्वात् णिजन्तो-दाहरणं व्यर्थं स्यात् इति। ननु यद्यत्र कर्तुरेव प्राधान्यं तर्हि तत एव निष्ठोत्पत्तेः "मया" इति तृतीयया न भवितव्यम्, प्रातिपदिकार्थमात्रे प्रथमाया एव युक्तत्वात्, सत्यम्, किन्त्वार्थिकमेवात्र कर्तुः प्राधान्यं तस्यैवातिशयासादनात्, शाब्दिकं तु कर्मण एव। व्याकरणेन शब्दव्युत्पादनमात्रपरेण तत्रैव प्रत्ययो विधीयते, ग्रन्थ-कृता तु परमार्थविचारोऽयं कृतः, तद्विचारे तु वैय्याकरणैः सह संवादो न युक्त एव, अत एव "स एष" इत्युदासीनतयैव तस्य दोषप्रसञ्जनम्, अन्यथा तु तेन सह युष्मत्प्रयोगेणैव संवादं कुर्यादित्यलम्।

ननु तथापि जैमिनीयैः

"तथा हि वेद्यता नाम भावस्यैव निजं वपुः।
चैत्रेण दृष्टं वेद्मीति किं ह्यत्र प्रतिभासते॥"

इति दृशा दर्शनस्य कर्मस्थत्वमुक्तम्, तत्कथं निवार्यमित्यपेक्षायामाह **"जैमिनीयैरपि"** इति। **दृशिः**— दर्शनक्रिया, **भावनात्मिका**— भावनारूपा,

"सा धातोः प्रत्ययाद्वापि भावनाऽवगता सती"

**विषयधर्मो दृष्टताख्या, अन्या संवित् वा[1]ऽस्वतन्त्रा इति अन्यत् एतत्। प्रमातृविश्रान्तत्वमेव कथयितुं मया इत्युक्तम्। तेन अन्वभूवमहम्, मयानुभूतम् इति शब्दवैचित्र्यमात्रमिदम्, न तु अर्थभेदः। अन्ये तु भिन्नक्रमत्वेन योजयन्ति-दृक् आसीत् सा मे इत्येवम्, मया दृष्टम् इति च यत् स्मरणं 'तत् व्याकरणमस्याः' इति अनन्तरोक्तान्वभूवमित्युचितपरा[2]मर्शायाः स्मृतेः इति। अपिः चार्थे॥ ६॥**

---

इति तन्मते भावनाया एवार्थत्वात्। **"प्रमातृविश्रान्ता"** इति, न हि क्रिया क्रियावतो भिन्नेति भावः। **प्रकटता दृष्टताख्या**-दर्शनक्रियाफलभूता दृष्टताख्या प्रकटता, यद्वशेन "दृष्टः" इति, "पश्यामि" इत्यनन्तरं विशेषणविशेष्यभावव्यवहार इति भावः। पक्षान्तरमाह **"अन्या"** इति। **अस्वतन्त्रा**—अर्थाश्रितत्वेन स्वतन्त्रतारहिता। **"इति"** शब्दः प्रमेयपरिसमाप्तौ। **"अन्यदेतत्"** इत्यनेनास्य प्रकृतोपयोगित्वाभावमाह। नन्वत्र प्रमातृविश्रान्तत्वं केन ज्ञायत इत्यत आह **"प्रमातृ"** इति। वैयधिकरण्यद्योतितो भेदस्तु समनन्तरमेव निरस्तः। फलितमाह **"तेन"** इति। **तेन,** उक्तोपायेनेत्यर्थः। अन्यैरन्यथाकृतां योजनां कथयति **"अन्ये तु"** इति। **"भिन्नक्रमत्वेन"** इति, "दृगासीन्मे" "मया दृष्टम्" इत्येतयोः पृथक्स्थितयोरपि समच्चयेन योजनं कृत्वेत्यर्थः। तदेव दर्शयति **"दृग्"** इति। **"अस्याः"** इति पदं व्याचष्टे **"अनन्तरोक्ता"** इति। अनन्तरोक्ता चासौ "अन्वभवम्" इत्युचितपरामर्शा च तस्याः, **"स्मृतेः"** इति, स्मृतिपदेन सहैव **"अस्याः"** इत्यस्य योजनं कार्यमित्यर्थः। ननु समुच्चयवाची चकारोऽत्र नास्ति इति कथं समुच्चयेन योजनं कृतमित्यत आह **"अपिः"** इति। **चार्थे,** चशब्दार्थभूते समुच्चये इत्यर्थः। अस्यां योजनायां च न तादृशी कष्टकल्पना इति न निरस्ता, अपि त्वङ्गीकृतैव "परमतम्" इत्यादि न्यायात्॥ ६॥

---

1. विषयधर्मो, दृष्टता नाम अन्या, संवित् वा स्वतन्त्रा—K. S. S.
2. अनन्तरोक्तान्वभूवम् इति उचितपरामर्शायाः—K. S. S. Bhāskarī makes a compound of these words.

ननु दृष्टमपि निर्विकल्पकेन[1] यावत् न परामृष्टं विमर्शविशेषविश्रान्त्या तावत् न स्मर्यते मार्गदृष्टमिव तृणपर्णादि विशेषेण[2] रूपेण, तदिदमेव विचारणीयम्, समनन्तरभाविविकल्पकाले तद्दर्शनम् इदन्तया अवभातपूर्वं वा न वा इति, तदेतत् आशङ्क्याह:—

**या च पश्याम्यहमिमं घटोऽयमिति वाऽवसा।**
**मन्यते समवेतं साप्यवसातरि दर्शनम्॥ ७॥**

इह दर्शनं यादृशं निजेन वपुषा तादृशेनैव तेन भातव्यं सर्वदा, तच्च स्वकालेऽनन्यप्रकाशम् अहम् इत्येतावता[3] स्वरूपेण उचितप्रकाशम्,

अथ सप्तमश्लोकस्यावतरणिकां करोति **"ननु दृष्टम्"** इति।

अत्र टीका :–

**दृष्टमपि**–अनुभूतमपि, **निर्विकल्पकेन**–निर्विकल्पज्ञानेन, **परामृष्टम्**–अवसितम्, विमर्शविशेषे या विश्रान्तिस्तया, तदनुपदमेव भाविना सविकल्पज्ञानेनेति शेषः, सविकल्पज्ञानस्यैव परामर्शकत्वात्, विशेषेण रूपेण न स्मर्यते इति योजना। **तत्**–ततः कारणात्। इदं किम् इत्यपेक्षायामाह **"समनन्तर"** इति। **समनन्तरभाविविकल्पकाले**–निर्विकल्पज्ञानानन्तरभाविनः सविकल्पज्ञानस्य समये, तदनुसारेणैव स्मृतिपरामर्शेऽपि दर्शनं विचारितं भवेदिति भावः। **"इति"** शब्दः प्रश्नपरिसमाप्तौ। समाप्तमपि वस्तु पुनः परामृशति **"तदेतत्"** इति। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"या च"** इति।

अत्र टीका :–

तत्र प्रथमम् **"अपि"** शब्दसूचितं वस्तु कथयति **"इह"** इति। **इह**–भासमाने जगति, **दर्शनम्**–अनुभवः, **वपुषा**–स्वरूपेण, **तादृशेन**, तादृशेन वपुषेत्यर्थः, **तेन**–दर्शनेन, **"भातव्यम्"** इति, अन्यथाभाने भ्रमरूपतापातादिति भावः। **तच्च**–दर्शनञ्च, **अनन्यप्रकाशम्**–स्वप्रकाशम्, अत एव **अहम् इत्येतावता**

1. निर्विकल्पेन—K. S. S.
2. विशेषरूपेण—K. S. S.
3. एतावता रूपेण—K. S. S.

**तद्विकल्पांशविचारः तावत् न कुत्रचित् अङ्गम्, भवतु वाङ्गम्,[1] किं तु अवसायोऽपि एवंभूतः इति अपिशब्देन सूचयति । तत्र समनन्तरभाविना विकल्पेन वस्तु परामृश्यमानम् अनुभवपरामर्शमुखेन वा परामृश्यते अहमिमं पश्यामि इति वर्तमानतया, इमम् इत्यनेन च प्रत्यक्षव्यापारत्वं प्रत्यक्षायमाणत्वेन दर्शितम् । एवमेव वा परामृश्यते–घटोऽयम् इति । अत्र अयंशब्देन प्रत्यक्षायमाणत्वमुक्तम् । तत्र अन्त्ये विकल्पे दर्शनस्य**

---

**स्वरूपेणोचितप्रकाशम्** उचितभानमित्यर्थः । अत्र किमपि वक्तव्यं नास्तीति भावः। यत्र तु किंचिद् वक्तव्यमस्ति तदपि कथयति "**तत्**" इति । **वकल्पांशविचारः**–तत्समनन्तरभाविपरामर्शलेशविवेकः, **अङ्गम्**–उपकारकम्, "**न**" इति, अर्थास्पर्शित्वादिति भावः । **भवतु वाङ्गम्,** अस्तु वाङ्गमित्यर्थः, **अवसायोऽपि**–दर्शनविकल्पांशोपि, **एवंभूतः**–अनन्यप्रकाशः । नन्वेतावान् प्रपञ्चः सूत्रे न दृश्यते इत्यपेक्षायामाह "**अपिशब्देन**" इति। **सूचयति,** आचार्य इति शेषः, अपिशब्दस्य असंभवद्वस्तुसंभवपरत्वादिति भावः । नन्वेतेनैव दर्शनस्यापि विषयवत् इदन्तास्पदत्वमायातमित्यपेक्षायां[2] विकल्पद्वयं करोति "**तत्र**" इति, विकल्पांशस्याङ्गत्वे सतीत्यर्थः। **समनन्तरभाविना विकल्पेन**, सविकल्पज्ञानेनेत्यर्थः । **वस्तु**–दर्शनविषयीभूतं घटादि, **परामृश्यमानम्**–स्वव्यापारविषयीक्रियमाणम्, **अनुभवपरामर्शमुखेन**–दर्शनपरामर्शद्वारेण । कथम् इत्यपेक्षायामाह "**अहम्**" इति । "**वर्तमानतया**" इति, लटो वर्तमाने प्रयोगादिति भावः। इत्थंभावे तृतीया । एतदन्तर्गतस्य "**इमम्**" इत्यस्याभिधेयमाह "**इमम्**" इति। **प्रत्यक्षव्यापारत्वम्**-दर्शनरूपो यः प्रत्यक्षाख्यो व्यापारस्तस्य भावः, **प्रत्यक्षायमाणत्वेन**–प्रत्यक्षमिवाचरत्त्वेन, **दर्शितम्,** परमार्थतः प्रत्यक्षत्वायोगात् क्यचा निर्देशः । एवमुत्तरत्रापीत्थंभावे तृतीया । द्वितीयमपि विकल्पमाह "**एवमेव वा**" इति । "**अयंशब्देन**" इति, "अयम्" शब्दस्यापि "इदम्" शब्दवत् प्रत्यक्षविषये प्रयोगादिति भावः । यद्यपि "इमम्" इत्यनेन "अयम्" इत्यनेन

---

1. भवतु वा, किं तु—K. S. S.
2. 'आशङ्कायाम्' would probably be a better reading.

**पृथक् परामर्श एव नास्ति इति का तत्र इदन्ताशङ्का । ततश्च पारिशेष्यात् अहन्तया तस्य अत्रास्ति परामर्शः, तदभावे विकल्पस्य निमीलिताक्षेऽपि भावात् स्वयमर्थस्पर्शे[1] सति स्फुटतमविषयपर्यवसितः कथमध्यवसायो भवेत् । आद्ये तु दर्शनं परामृष्टमपि अस्मदर्थेऽन्तर्भूतम्[2] अहंभावास्पदम्**

---

च विषयस्यैव प्रत्यक्षत्वद्योतनम् तथापि तत्सन्निधेस्तद्विषयिणोऽपि तत्स्पर्शापत्तिरिति न किंचिद्विरुद्धम् । तत्र प्रथमे विकल्पे बहुवक्तव्यतां ज्ञात्वा तं तावदवस्थाप्य द्वितीयमेव प्रथमं विवेचयति **"तत्र"** इति । **अन्त्ये विकल्पे**– "घटोयम्" इत्येवंरूपे, **"नास्ति"** इति, तद्वाचकशब्दाभावात् इत्यर्थः । ननु ततः किमित्यत आह **"ततश्च"** इति । **पारिशेष्यात्**–परिशिष्टतया, न हि सर्वथा तस्य परामर्शाभाव एव युक्त इति भावः । ननु सोपि मास्त्वित्यत आह **"तदभावे"** इति । **तदभावे**–अहंपरामर्शाभावे, **विकल्पस्य**–विषयविकल्पस्य, **निमीलिताक्षेऽपि**–वस्त्वनुभूयैव शीघ्रं वस्तुकृतसुखादिना निमीलितनेत्रे पुरुषेऽपि, **भावात्**, निमीलितनेत्रोपि हि विकल्पकरणे समर्थो भवतीत्यतो हेतोरित्यर्थः। **स्वयम्**, अर्थात् तस्य विकल्पस्य, **अर्थस्पर्शे सति**, स्फुटतमः–सर्वधर्मग्रहणेनातिस्फुटो यो विषयः तत्र पर्यवसितः–विश्रान्तः, **अध्यवसायः** अर्थात्तस्य निमीलिताक्षस्य कथं भवेत्, दर्शनस्य नेत्रनिमीलनात् प्रागेव गतत्वात् पुनर्दर्शनासंभवेन यदि तदेव दर्शनं तदात्मनि निरूढं तदा कथं तदनुसार्यर्थविकल्पसाध्यः अध्यवसायः संभवेदिति संक्षेपः। उन्मीलितनेत्रस्य दर्शनसंभवेन पुनः विकल्पकृताध्यवसायसंभवान्निमीलिताक्ष इत्युक्तम् । अपिशब्दः असंभवद्वस्तुसंभवपरः । स्थापितं प्रथमं पक्षमपि विचारयति **"आद्ये"** इति । **आद्ये**– "पश्यामि" इत्येवंरूपे, **परामृष्टम्**, "पश्यामि" इति पदेनेति भावः। **अस्मदर्थेऽन्तर्भूतम्**–"प्रकृतिप्रत्ययौ" इति न्यायेन प्रत्ययार्थभूते अस्मच्छब्दार्थे ब्रुडितम्, अत एव **अहंभावास्पदम्**–अहंभावविषयीभूतम्, अत एव **अवसातरि**–अवसातृशब्द-

---

1. अर्थास्पर्शे स्फुटतमविषयपर्यवसितः—K. S. S.
2. अस्मदर्थान्तर्भूतम्—K. S. S.

**अवसातरि विश्रान्तं स्वप्रकाशमेव परामृष्टम् इति विकल्पोऽपि न बोधान्तरबोध्यतां बोधयति बोधस्य।**

अवसायः अवसा, समवेतम् इति अपृथग्भावमाह। अवसातरि इति, स्वतन्त्रेऽन्तर्मुखे बोधात्मनि अहन्तास्पदे इत्यर्थः। दर्शनम् इति निर्विकल्पकमनुभवनम्। उपलक्षणं चैतत् विकल्पस्मृत्यादेरपि, ज्ञानस्य ज्ञानान्तरेण परामर्शे हि अयमेव न्यायः। विकल्पयाम्यहम्, स्मराम्यहम्, विकल्पितं मया, स्मृतं मया इति अहन्तारूढ्यैव विकल्पादेः अवभासात्। अत एव आत्मनोऽमी विकल्पाद्याः शक्तिविशेषाः तद्विश्रान्तशरीरत्वात् इति दर्शितम् "ज्ञानस्मृत्यपोहनशक्तिमान्" इत्यत्र ॥ ७ ॥

---

वाच्यभूते प्रमातरि, **विश्रान्तम्**–विश्रामं गतम्, अत एव **स्वप्रकाशमेव परामृष्टम्, इति**–अतः कारणात्, **विकल्पोऽपि**–सविकल्पज्ञानमपि, **न बोधस्य**–अनुभवस्य, **बोधान्तरबोध्यताम्**–तदन्यभूतस्वरूपभूतसविकल्पकबोधज्ञेयताम्, स्वेन बोध्यतामिति यावत्, **बोधयति**, तथा च का तत्रेदन्ताग्रहणशङ्केति भावः।

एवं वाक्यार्थमुक्त्वा पदार्थमपि कथयति "**अवसायः**" इति। "**अवसा**" इति अवपूर्वात् स्यतेर्भाविऽङि रूपम्, **अपृथग्भावम्**, अयुतसिद्धत्वमित्यर्थः। "**स्वतन्त्रे**" इति, कर्तरि, कर्तरि तृजुत्पादात्, **बोधात्मनि**–परमार्थतः अनुभवरूपे, तत्कालमवसाकर्तृत्वमात्रेणावसातृतयोक्ते इत्यर्थः। "**अपि**" शब्दः समुच्चये। कुतोऽयमेव न्याय इत्यत आह "**विकल्पयामि**" इति। **अहन्तारूढ्यैव**–"प्रकृतिप्रत्ययौ" इति दृष्ट्या अहन्ताविश्रान्त्यैव। पूर्वं प्रति अस्य वस्तुनः हेतुत्वं कथयति "**अत एव**" इति। कुत्र दर्शितमित्यत आह "**ज्ञान**" इति। "न चेदन्तः-[1]कृताभासः" इत्यादिश्लोकान्तभागस्थेऽस्मिन्पदे इत्यर्थः ॥ ७ ॥

---

1. The usual reading of this portion of the kārikā (I. 3. 7.) is "न चेदन्तःकृतानन्तविश्वरूपो महेश्वरः"। Even Bhāskara has adopted it and quoted it as such in many places. The change here is a little inexplicable.

एवमियतः प्रमेयस्य यत्फलं तदुपसंहर्तुमाहः—

**तन्मया दृश्यते दृष्टोऽयं स इत्यामृशत्यपि ।**
**ग्राह्यग्राहकताभिन्नावर्थौ भातः प्रमातरि ॥ ८ ॥**

'तत्' इति तस्मादर्थे पूर्वोक्तस्य प्रमेयस्य हेतुभावेन उपजीवनम् इह सूचयति । यत एवमुक्तम्—अनुभवस्य अर्थस्यैव स्मरणात् न भेदेन अवभासः स्मृतिशक्तिश्च परमेश्वरस्यैव, तत इदमत्र परिनिष्ठितं तत्त्वम् इति। इह स्मृतिः अनुभवं क्रोडीकरोति इत्युक्तम् । अनुभवश्च द्विधा, —परामर्शभेदात् कदाचित् स्वात्मपरामर्शपूर्वकम् अनुभाव्यम् परामृशति[1] यत्र अस्य अभि-

अथाष्टमस्य श्लोकस्यावतरणिकां करोति "एवम्" इति । स्पष्टम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**तत्**" इति ।

अत्र टीका :—

"**तत्**" इति पदं व्याचष्टे "**तस्मात्**" इति । अस्यैव पदस्य सूचनीयं वस्तु कथयति "**पूर्वोक्तस्य**" इति। **उपजीवनम्**—उत्थानम् । इह हेतुमद्रूपस्यास्य श्लोकस्यार्थे पूर्वोक्तस्यार्थस्य हेतुभावमेव स्फुटं कथयति "**यतः**" इति। "**उक्तम्**" इति पूर्वमिति शेषः। किमुक्तमित्यपेक्षायामाह "**अनुभवस्य**" इति। **अनुभवस्य**-पूर्वानुभवस्य, **अर्थस्यैव**-पूर्वार्थवत्, **स्मरणाद्भेदेन**—स्मृतिविषयतया, ततः-तस्मात्, **परिनिष्ठितम्**—स्थितिं गतम्, **तत्त्वम्**-परमार्थः, "**इति**" शब्दः समाप्तौ। किमित्यपेक्षायामाह "**इह**" इति। **क्रोडीकरोति**—स्वान्तःकरोति, अन्यथा तद्विषये विषयत्वाद्योगादिति भावः । ननु ततः किमित्यत आह "**अनुभवश्च**" इति । **अनुभवश्च**-स्मृत्या क्रोडीकृतोऽनुभवश्च । तत्र प्रथमं भेदं कथयति "**कदाचित्**" इति। स्वात्मनः—अनुभवरूपस्य स्वस्य, यः परामर्शः—"दृश्यते" इत्यादिरूपः, सः पूर्वं यत्र तत्, **अनुभाव्यम्**-अनुभवविषयीभूतं घटादिकम्, **परामृशति**-परामर्शविषयतां नयति, प्रमात्रनुभवयोः पारमार्थिकमेकत्वमपेक्ष्यैवमुक्तम्। कुत्र परामृशतीत्यत आह "**यत्र**" इति। अभिसन्धिः—स्वस्यात्मनि

1. आमृशति—K. S. S.

**संधिप्रधानता 'मया दृश्यते' इति, कदाचित् अनुभवनीयमेव प्रधानतया परामृशति यत्र अनभिसंधेरेव सहसा वस्तूपनिपातः, अर्थक्रियां प्रति आग्रहविशेषो वा 'अयम्' इति, तत्रापि च प्रकाशपरामर्शोऽस्त्येव, अन्यथा प्रकाशायोगात्। एवमुभयथानुभवे प्रत्येकं स्मृतिरपि द्वयपरामर्शमयी उदेति इति चत्वारः स्मरणभेदाः, द्वौ अनुभवभेदौ। अनुसंधानं प्रत्यभिज्ञानमपि**

विश्रान्तिरूपमनुसन्धानम्[1], तस्य प्रधानता–प्राधान्यम्, **अभिसन्धिप्रधानता**। ननु किंरूपोऽसौ परामर्श इत्यत आह **"मया"** इति। अत्रापि पूर्वोक्तः कर्तृस्थक्रियत्वादिन्यायो योजनीयः। द्वितीयं भेदमपि कथयति **"कदाचित्"** इति। **अनुभवनीयमेव**-अनुभवविषयं घटादिकमेव, न त्वस्मच्छब्दवाच्यं वस्त्वपि। **"यत्र"** इत्यननाक्षिप्तं स्थलद्वयं विभज्य कथयति। **सहसा,** इच्छां विनैवेत्यर्थः, अकस्मादिति यावत्। तत्र हि स्फुटं संभ्रमेण वस्तुमात्रपरामर्श एव भवति। पुनः कुत्रेत्यत आह **"अर्थ"** इति। **अर्थक्रियां प्रति**–तेन वस्तुना संपादनीयायामर्थ-क्रियायाम्, **आग्रहविशेषः**-अर्थित्वाधिक्ये तत्रापि अतिकांक्षणीयत्वेन वस्तुन एव प्राधान्यात् तत्परामर्श एव भवति। किंरूपोऽसौ परामर्श इत्यत आह **"अयम्"** इति। ननु किमत्र सर्वथैव प्रकाशपरामर्शो नास्ति इत्यत आह **"तत्रापि"** इति। **तत्रापि**–"अयम्" इति परामर्शेऽपि, **"अस्त्येव"** इति, अतिसूक्ष्मत्वेना-संचेत्यमान इति भावः। कुत इत्यपेक्षायाम् आह **"अन्यथा"** इति। **प्रकाशायोगात्**-विषयप्रकाशासंभवात्, तदुक्तम् :–

"प्रकाशोऽर्थोपरक्तोपि स्फटिकादिजडोपमः"

इति। स्मृतेरपि एवमेव द्वैविध्यं द्विविधानुभवप्रसन्धानेन। चातुर्विध्यं कथयति **"एवम्"** इति। **प्रत्येकम्**–प्रत्यनुभवम्, **द्वयपरामर्शमयी**–"दृष्ट" इति "स" इति चैवंरूपपरामर्शद्वयरूपा। **"चत्वारः"** इति, मया दृश्यते इत्यनुभवे "दृष्टम्" इतिरूप एकः। अत्रैव "सः" इत्येवंरूपो द्वितीयः। "अयम्" इत्यनु-भवे "दृष्टः" इत्येवंरूपस्तृतीयः, अत्रैव "सः" इत्येवंरूपश्चतुर्थः। **द्वौ**–"दृश्यते" "अयम्" इतिस्वरूपौ। सर्वे चैते षड् भदाः संपन्नाः।

1. अनुसन्धानरूपम्—K. S. S.

एतदुभयमेलनात्मकम् अत्रैवान्तर्भूतम् । तच्च एतद्भेदात् अष्टधा, पूर्वापर-विश्रान्तिकृतात् प्रत्येकं द्विधाभेदाच्च षोडशधा । तदेते द्वाविंशतिः संवेदन-भेदाः । तेषु च ग्राह्यं तावत् प्रकाशात् अबहिर्भूतम्, अन्यथा प्रकाशनायोगात्, बहिर्भूतं च तत्, अन्यथार्थत्वासंभवात्, न च तत एव, तदैव, तदेवा-[1]

एतदवष्टम्भेन प्रत्यभिज्ञानां षोडशकमपि साधयति "अनुसंधानम्" इति । **अनुसंधानम्**–स्मृतानुभतयोरेकीकरणरूपम्, **प्रत्यभिज्ञानम्**–प्रत्यभिज्ञा, **एतदुभयमेलनात्मकम्**—प्रोक्तानुभवस्मरणपरामर्शमेलनरूपम्, **अत्रैव**—भेदषट्के एव । **तच्च**–प्रत्यभिज्ञानं च, एतेषाम्-अनुभवयोः स्मृतीनाञ्च, भेदात्, **अष्टधा**–अष्टप्रकारं भवति अनुभवभेदद्वयेन सह स्मृतिभेदचतुष्कस्याऽनुसंधाने स्फुटमष्टधाभावोत्पादात् । पुनः तत्प्रत्यभिज्ञानं षोडशधा भवति इति संबन्धः । कदाचिद्धि प्रत्यभिज्ञाने पूर्वकालावच्छिन्नतैव वस्तुनः प्रधानम्, कदाचिदपरकालावच्छिन्नतैव । एतेषां संवेदनभेदानामेकत्र संकलनां करोति "तदेते" इति । ननु ततः किमित्यत आह "तेषु च" इति । **तेषु**–द्वाविंशतिभेदेषु च, **ग्राह्यम्**–अनुभाव्यस्मर्यमाणप्रत्यभिज्ञेयतया स्थितो विषयः । कुत इत्यपेक्षायामाह "अन्यथा" इति । **अन्यथा**–अबहिर्भूतत्वाभावे । तदुक्तम् :–

"बुद्धश्च बोधभेदेन भवेन्न व्यवहारभाक् ।
व्यतिरिक्तस्य बुद्धत्वे सर्वं बुद्धं न किं भवेत् ॥"

इति । **तत्**–संवेदनद्वाविंशतिकम्, **अर्थत्वासंभवात्**–विषयत्वासंभवात् । ननु तर्हि उभयरूपमेव तद् भवत्वित्यत आह "न च" इति । तर्हि किं कार्यमित्यत

1. तदेव पृथग्भूतं अत्र पृथग्भूतं च–K.S.S. In the preceding lines, Abhinava talks of the relation of the object to the subject and represents the former to be both in and outside the latter. To convey this idea he uses the words "अबहिर्भूतम्" and "बहिर्भूतम्". He seems to repeat the same idea, as the trend of the argument shows, in the lines in question, by the use of the different words: "अपृथग्भूतम्" and "पृथग्भूतम्". We have, therefore, corrected the text as printed.

पृथग्भूतं अत्र पृथग्भूतं च भवति इति नूनमन्यः कल्पितप्रकाशात्मा कश्चित् अत्र अर्थोऽस्ति, यतोऽयम् अर्थराशिः पृथग्भवन् अन्योन्यमपि पृथक्ताम् अधिगच्छेत्, अन्यथा प्रकाशाभिन्नानां परस्परमपि कथङ्कारं पृथग्भावो भवेत् । सोऽयं वेद्यैकदेश एव, विच्छिन्न एव, अनुज्झितवेद्यभाव एव, अहम् इति विच्छेदशून्यप्रकाशोचितेन[1] परामर्शेन परामृश्यमानो मायाप्रमाता इति वक्ष्यते 'देहे बुद्धौ'...... । ( १ । ६ । ४ ) इत्यत्र । स च ग्राहक इति उच्यते । एवं सममेव स्वात्मनि निर्मलमकुरस्थानीये[2]

आह "इति" इति । इति–अतः कारणात्, **नूनम्**–निश्चयेन, कल्पितः–देहादिभावेन कल्पनया संभावितः, यः प्रकाशः–तदवच्छिन्नः प्रकाशांशः, स आत्मा यस्य तादृशः, **अर्थः**, प्रमेयतया स्थितः, शुद्धप्रकाशं प्रति वेद्यत्वात् । **यतः**–यस्मात्, **अर्थराशिः**[3] **अयम्**–अनुभूयमानः । अधिगमनाभावे दोषमाह "**अन्यथा**" इति । **प्रकाशाभिन्नानाम्**–प्रकाशान्तर्गतानां पदार्थानाम् । ननु सोऽर्थः कोऽस्तीत्यत आह "**सोयम्**" इति । **वेद्यैकदेश एव**–वेद्यराशिमध्ये एक-रूपत्वात्तद्भाग एव, न तु वेदकरूपः, वेदकाभासत्वात्, तथा, **विच्छिन्न एव**–घटादिवत् अपोहनशक्त्या परमप्रकाशात् पृथग्भूत एव, "**अहम् इति परामर्शेन**" इति संबन्धः । कीदृशेन "अहम्" इति परामर्शेन ? विच्छेदशून्यो यः प्रकाशः तत्रोचितेन, तस्यैव परमार्थतोऽहंविषयत्वात् । कुत्र वक्ष्यते इत्यत आह "**देहे**" इति । एतस्यैव ग्राहकत्वं कथयति, "**स च**" इति । ग्राहकश्च अनुभवितृस्मर्तृ प्रत्य-भिज्ञातृत्वेन त्रिरूपो ज्ञेयः । उपसंहारं करोति "**एवम्**" इति । **सममेव**,

1. विच्छेदशून्योचितेन—K. S. S.
2. विमलमकुरस्थानीये—K. S. S.
3. The manuscript has "अर्थ" only, but "अर्थराशिः", as found in the K. S. S. edition, fits in better with "अन्योऽन्यम्", coming soon after. Hence we have adopted it.

यत् युगलकं स्वस्मात् प्रकाशरूपात् अव्यतिरिक्तम् अवभासयति परमेश्वरः तदेव एतत् भगवतो ज्ञानकर्तृत्वं स्मरणकर्तृत्वं ज्ञानशक्तिस्मृतिशक्ति-रूपम् उच्यते इति तात्पर्यार्थः ।

अक्षरार्थस्तु—मया दृश्यते इति, अयम् इति च यत् आमृशति प्रमाता प्रकाशरूपो येन अनुभवति इति उच्यते, तत आमर्शनात् एतत् लक्ष्यते, ग्राह्यरूपेण ग्राहकरूपेण योजितौ घटादिदेहादिस्वभावौ अर्थौ वेद्यौ प्रमातरि विशुद्धप्रकाशरूपे भातः प्रकाशेते । एवं दृष्टः इति स इति च यत् परामृशति प्रकाशरूपः प्रमाता, यतोऽसौ स्मरति इति व्यपदेश्यः, ततोऽपि एतदेव लक्ष्यते । अनुभवरूपोपजीवित्वं पूर्वोक्तं द्रढयितुं प्रसङ्गात् अत्र ज्ञानशक्तेरपि

---

न तु क्रमेण, ग्राह्यग्राहकयोर्भिन्नकालत्वेन संबन्धो न स्यादिति भावः । **निर्मलमकुरस्थानीये**–प्रतिबिंबसहिष्णुत्वेन निर्मलदर्पणसदृशे, **युगलकम्**–ग्राह्यग्राहकद्वयम्, त[illegible]व–भासनमेव, तात्पर्यार्थः–**वाक्यार्थः** ।

पदार्थकथनं प्रतिजानीते "**अक्षरार्थस्तु**" इति। **प्रकाशरूपः प्रमाता** इति संबन्धः, **येन**–येनामर्शनेन, **ततः**—तस्मात् लक्षणात्, **लक्ष्यते**–ज्ञायते **योजितौ**–संबद्धतां गतौ। एवमनुभवस्थले योजनां कृत्वा स्मृतिस्थले योजनां करोति "**एवम्**" इति। "**लक्ष्यते**" इत्यस्यानन्तरं "**ग्राह्य**" इत्यादि "**प्रकाशते**" इत्यन्तं वाक्यकदंबकं स्वयमेव योजनीयम्। प्रत्यभिज्ञास्थलयोजनं चानेनैव गतम्, अनुभवस्मृतिमेलनमात्ररूपत्वात्, तथा च सूत्रे प्रत्यभिज्ञायाः पृथगदर्शनमेव। ननु स्मृतिसमर्थनसमये किमिति ज्ञानस्यापि किंचिन्मात्रं निर्णयः कृत इत्यत आह "**अनुभव**" इति । **अनुभवरूपोपजीवित्वम्**—अनुभवसापेक्षत्वम्[1], **प्रसङ्गात्**, न तु क्रमानुरोधात्, **अत्र**–स्मृतिसमर्थनसमये, **उन्मीलनम्**–विकासनम्, विवेक इति यावत्। ननु तर्हि "ज्ञानस्मृत्यपोहनशक्तिमान्" इत्यत्र प्रथमोद्दिष्टत्वेन स्मृतिप्राणप्रदत्वेन च ज्येष्ठत्वादस्या एव प्रथमं समर्थनं किन्न कृतमिति चेत्,

---

1. अनुभवसापेक्षितत्वम्—C.

**उन्मीलनं कृतम्। लक्षणे शत्रादेशः। अपिशब्दश्चार्थे। अर्थशब्दो विच्छिन्नवेद्यवाची। ग्राहको मायीयः कल्पितः प्रमाता अशुद्धप्रकाशस्वभावः इति शिवम्[1]। आदितः श्लो० ॥ ३१ ॥**

**इति श्रीमदाचार्याभिनवगुप्तविरचितायामीश्वरप्रत्यभिज्ञासूत्रविमर्शिन्यां प्रथमे ज्ञानाधिकारे स्मृतिशक्तिनिरूपणं नाम चतुर्थमाह्निकम् ॥ ४ ॥**

---

सत्यम्, किन्तु यतः स्मृतिरेवानुसंधानप्राणत्वेनाभीष्टस्यानुसंधातृरूपस्यात्मतत्त्वस्य साधनी, ज्ञानशक्तिस्तु तद्द्वारेणेत्ययुक्तत्वेऽपि शिष्यसमाश्वासनार्थं प्रथमं स्मृतेरेव समर्थनं कृतम्। तत्प्रसंगेन च तदुपयोगिनी ज्ञानशक्तिरपि उन्मीलितैवेति सर्वं निरवद्यमेव। **"आमृशति"** इत्यत्र स्थितस्य शतृप्रत्ययस्य वाच्यमाह **"लक्षणे"** इति। ग्राह्यग्राहकताभिन्नयोरर्थयोः भानं प्रति प्रकृत्यर्थस्य लक्षणताद्योतनात्, अत एव समनन्तरं द्विवारं "लक्ष्यते" इत्युक्तम्। **"अपि"** शब्दार्थमाह **"चार्थे"** इति। **चार्थे,** समुच्चये इत्यर्थः। **"अर्थ"** शब्दवाच्यमाह **"अर्थ"** इति। विच्छिन्नम्—अपोहनशक्त्या प्रकाशाद् भावराशेश्च भिन्नीकृतम् यद्वेद्यं तद्वाची। **"ग्राहक"** पदार्थमाह **"मायीयः"** इति। कीदृशः प्रमाता? अशुद्धप्रकाशः स्वभावः—स्वापोहनशक्त्या विच्छिन्नीभूय स्वरूपम्, यस्य तादृशः। **"इति"** शब्दः समाप्तौ, **"शिव"** पदं मङ्गलवाचकम् परतत्त्वसूचकञ्च। इति शिवम् ॥ ८ ॥

इति श्रीभास्करकण्ठविरचितायां श्रीप्रत्यभिज्ञाविमर्शिनीटीकायां भास्कर्याख्यायां ज्ञानाधिकारे चतुर्थमाह्निकं समाप्तम् ॥

---

1. The word "शिवम्" is not found in the K. S. S. edition.

# अथ पञ्चममाह्निकम् ।

महागुहान्तर्निर्मग्नभावजातप्रकाशकः ।
ज्ञानशक्तिप्रदीपेन यः सदा तं स्तुमः शिवम् ॥

---

## अथ पञ्चममाह्निकम् ।

स्वरूपगृहमध्यान्तर्भावभाण्डप्रकाशकम् ।
प्रज्वाल्य दीपं ज्ञानाख्यं स्वप्रकाशं शिवं स्तुमः ॥

अथ ज्ञानाधिकारे पञ्चमाह्निकव्याख्याया निर्विघ्नपरिसमाप्तये प्रचयगमनाय च शिष्यप्रवृत्त्यर्थं सकलाह्निकतात्पर्यसूचकं मङ्गलप्रतिपादकं च श्लोकमुपनिबध्नाति "**महा**" इति ।

अत्र टीका :–

वयं तं शिवं स्तुमः । तं कम् ? यः शिवः **सदा**–नित्यम्, न तु कदाचिदेव प्रयोजनादिवशेन । तदुक्तम् :–

सदा सृष्टिविनोदाय सदा स्थितिसुखासिने ।
सदा त्रिभुवनाहारतृप्ताय स्वामिने नमः ॥

इति । ज्ञानशक्तिरेव–उक्तवक्ष्यमाणरूपा ज्ञानाख्या शक्तिरेव, प्रदीपः तेन कृत्वा, महागुहायाम्–अपरिच्छिन्नदुरवगाहनिजस्वरूपरूपायां महत्यां गुहायाम्, अन्तः–मध्ये, निर्मग्नम्[1]–न चेदन्तःकृतेत्यत्रोक्तन्यायेन ब्रुडितं यद् भावजातम्–भावराशिः, तस्य प्रकाशकः–अवगाहनशक्त्या विच्छिन्नीकृत्य बहिर्गतत्वेन भासको भवति। अन्योपि गुहान्तर्गतानि[2] वस्तूनि दीपेन प्रकाशयतीति ध्वनिः। एतेनात्र ज्ञानशक्तिरेव समर्थनीयेति सूच्यते।

---

1. निमग्नम्—C. Though the word itself is not wrong, metre requires निर्मग्न as printed in the K.S.S. edition.
2. गुहान्तर्गतान् वस्तून्—C. वस्तु is नपुंसक. It is not used in the masculine.

एवं तावत् स्मृतिशक्तेः स्वरूपं प्रतिपादितम्, अधुना तदुपजीवनीयज्ञानशक्तिपरमार्थनिर्णयं[1] वितत्य, 'वर्तमानावभासानाम्' इत्यादिकया, 'सक्रमं प्रतिभासते' इत्यन्तया श्लोकैकविंशत्या निरूपयति। तत्राद्येन श्लोकेन वस्तुनि प्रतिज्ञां करोति एवंभूता ज्ञानशक्तिः इति। ततः श्लोकद्वयेन प्रकाश एवार्थानां स्वरूपम् इत्याह। ततो द्वयेन प्रकाशबाह्यानामर्थानां सद्भावं विज्ञानवाद्युपगतवासनादूषणेन[2] दृढीकृतम् आशङ्क्य, तृतीयेन तदनभ्युपगमेऽपि तावत् न किञ्चित् उपरुध्यत इति दर्शयति। अथ श्लोकेन स्वदर्शनेऽर्थतत्त्वम् उपदर्शयन् बाह्यार्थसद्भावे प्रत्यक्षं पराकरोति[3] प्रमाणत्वेन। ततो द्वयेन अनुमेयतामपि बाह्यस्य निरस्यति। अनन्तरं श्लोकेन चिदात्मनि अर्थानाम् अवश्यं सद्भावः परामर्शात्मना इति प्रकटयति। ततोऽपि

---

एवं मङ्गलं संपाद्याह्निकाभिप्रायं समस्तव्यस्तत्वाभ्यां कथयति "**एवम्**" इति।

अत्र टीका :–

'**प्रतिपादितम्**' इति, पूर्वाह्निके इत्यर्थः। उपजीवनीया–अपेक्षणीया या ज्ञानशक्तिः तस्याः यः परमार्थः–सहजं स्वरूपं तस्य निर्णयम्। सामस्त्येनोक्त्वा व्यस्तत्वेनापि कथयति "**तत्र**" इति। **तत्र**, श्लोकैकविंशतिमध्ये इत्यर्थः। **वस्तुनि**–ज्ञानशक्तिनिरूपणरूपे, प्रतिज्ञास्वरूपमेव दर्शयति "**एवम्**" इति। **ततः**–प्रतिज्ञानन्तरम्, विज्ञानवादिभिः–विज्ञानवादिभिः बौद्धैः, उपगता–अङ्गीकृता, या वासना–भावसंस्कारः, तस्याः दूषणेन। **तदनभ्युपगमेऽपि**–पदार्थानभ्युपगमेऽपि, **नोपरुध्यते**–न प्रतिबध्यते, साधनीयोर्थो न व्याहन्यते इति यावत्। **अर्थतत्त्वम्**–पदार्थानां सहजं स्वरूपम्, **प्रमाणत्वेन पराकरोति**, प्रमाणं नास्तीत्येवमित्यर्थः। **अनुमेयताम्**–अनुमानगम्यताम्, **बाह्यस्य**, बहिःस्थस्य भावराशेरित्यर्थः।

---

1. तदुपजीवनीयज्ञानशक्तिपरामर्शनिर्णयं—K. S. S.
2. विज्ञानवादोपगत—K.S.S.
3. निराकरोति—K. S. S.

प्रकाशस्य प्रमातृरूपस्य प्रत्यवमर्श एव जीवितम् इति श्लोकचतुष्टयेन अनुभवागमन्यायस्वरूपनिरूपणाभिः अभिधत्ते। अनन्तरं ज्ञानपरामर्श एव ज्ञेयं शुद्धं प्रमातृरूपतानुज्झितं च प्रथयति इति तस्यैव प्रधानत्वे न्यायं श्लोकत्रयेणाह। प्रकाशैकरूपत्वे च ज्ञानज्ञात्रादि भिन्नम् इति श्लोकेनाह। ततो ज्ञातरि इव विशुद्धे ज्ञानेऽपि अविकल्पकसविकल्पकरूपे विमर्श एव प्राणितम् इति श्लोकद्वयेनाह। ततो ज्ञातुर्ज्ञानस्य च पूर्वपक्षे दूषि ं यत् भिन्नत्वं तत् उपसंहारदिशा श्लोकेन समर्थयते, इति तात्पर्यम् आह्निकस्य। श्लोकार्थस्तु निरूप्यते।

ननु स्मरणविकल्पादीनाम् अनुभव एव जीवितम्, तत्र यदि भेदेन आभासन्तेऽर्थाः, तत् तेष्वपि तथैव अवभास उचितः, नो चेत् अन्यथा, तदनुभव एव तावत् ज्ञानशक्तिरूपो विचारणीय इत्याशयेनाह :—

---

**परामर्शात्मना**—परामर्शस्वरूपेण, न तु स्थूलतया, **प्रत्यवमर्श एव**—परामर्श एव, अनुभवश्चागमश्च न्यायश्च स्वरूपनिरूपणा च ताभिः, **तस्यैव**—ज्ञानपरामर्शस्यैव, **न्यायम्**—युक्तिम्। "**ज्ञान**" इति, '**आदि**' शब्देन ज्ञेयग्रहणम्। श्लोकार्थनिरूपणं प्रतिजानीते "**श्लोकार्थ**" इति।

नन स्मृतिरेव किं निर्णीता, किमिति च तदुपजीवनीया ज्ञानशक्तिर्न निर्णीता इति शिष्यव्याकोपमाशङ्क्य तत्समाश्वासनार्थमवतरणिकां करोति "**ननु**" इति।

अत्र टीका :—

**अनुभव एव**—निर्विकल्पज्ञानमेव, **तत्र**—अनुभवे, **तेष्वपि**—स्मरणविकल्पादिष्वपि, **तथैव**—भेदेनैव, "**नो चेत्**" इति, अनुभवेऽर्थाः यदि भेदेन न भासन्ते इत्यर्थः। "**अन्यथा**" इति, तदा तेष्वपि अभेदेनैवावभास उचित इत्यर्थः। फलितमाह "**तत्**" इति। तत्, तस्मादित्यर्थः। एवमवतरणिकां कृत्वा प्रथमं श्लोकमुपन्यस्य व्याचष्टे। "**वर्तमान**" इति।

---

1. निरूपणाश्च भाति—C.

**वर्तमानावभासानां भावानामवभासनम्।**
**अन्तःस्थितवतामेव घटते बहिरात्मना॥ १॥**

वर्तमानत्वेन स्फुटतया अवभासनम् इदमित्येवमाकारं येषां तेषाम्, यदेतत् "बहिरात्मना" कल्पितमायीयशून्यादिशरीरान्तप्रमातृपृथग्भावेन हेतुना, "भिन्नानाम्"[1] ततो मायाप्रमातुः विच्छिन्नानाम् 'अवभासनम्' तत्

अत्र टीका :–

"**वर्तमान**" इत्यादिसूत्रस्थसमासपदविग्रहं करोति "**वर्तमान**" इति। भावप्रधाननिर्देशमाश्रित्य "**वर्तमानत्वेन**" इति विग्रहः। अस्य लक्ष्यार्थमाह "**स्फुटतया**" इति। अग्रस्थत्वकृतेन सर्वधर्माभासग्रहणरूपेण स्फुटत्वेनेत्यर्थः। अवभासनमेव स्वरूपेणानुकृत्याह "**इदम्**" इति, "**येषां तेषाम्**" इत्यनेन विगृहीतानां समसनम्। "**यदेतत्**" इति करिष्यमाणतच्छब्दाध्याहारापेक्षम्, यत्तच्छब्दाभ्यां योजितं वाक्यं हि सम्यक् स्फुटीभवति। "**बहिरात्मना**" इति पदं व्याचष्टे "**कल्पित**" इति। कल्पिताः–ग्राह्यग्राहकभावान्यथानुपपत्त्या कल्पनया साधिता ये मायीयाः–भेदप्राणत्वेन[2] मायाकार्याः शून्यादयः शरीरान्ताः य प्रमातारः तेभ्यः, न तु परप्रमातुः, यः पृथग्भावः–तैरेव कल्पितः स्वस्मात् भदः तेन। "**हेतुना**" एतेन "**बहिरात्मना**" इति सूत्रस्थपदस्य हेतौ तृतीयेति द्योतितम्, युक्तत्वनाध्याहृतं "भिन्नानाम्" इति व्याचष्टे "**ततः**" इति। "**भावानाम्**" इति स्थाने भिन्नानामिति प्रशस्तः पाठः, विशेष्यतया स्थितस्य भावानामित्यस्य विशेषणवशे-

1. According to Abhinava, the Kārikā would run as follows :—

   वर्तमानावभासानां भिन्नानामवभासनम्।

   We have, however, kept 'भावानाम्' because Bhāskara has adopted it thinking that Abhinava had भावानाम्। But as Abhinava explains 'भिन्नानाम्' and not 'भावानाम्', the former was most probably his text.
2. भेदप्रमाणत्वेन—C.

परमार्थप्रमातरि शुद्धचिन्मये 'अन्तःस्थितवताम्' तेन सह ऐकात्म्यम् अनुज्झितवतामेव 'घटते' प्रमाणेन उपपद्यते, तेन अनुज्झितसंविदभेदस्य भावस्य कल्पितप्रमात्रपेक्षया भेदेन प्रकाशनं भगवतो ज्ञानशक्तिरित्युक्तं भवति ॥ १ ॥

प्रमाणेनोपपद्यते इत्युक्तं तत् प्रमाणं दर्शयति :—

---

नैवाक्षेपसिद्धेः । अथवा भावशब्देनैव भिन्नत्वमाक्षिप्तम् । **तत्**—अवभासनम्, अर्थात् **परमार्थप्रमातरि शुद्धचिन्मये । "अन्तः स्थितवताम्"** इति पदं व्याचष्टे **"तेन"** इति । **तेन सह**—शुद्धचिन्मयेन परमार्थप्रमात्रा सह, **ऐकात्म्यम्**—अभेदम्, **"घटते"** इति पदं व्याचष्टे **"प्रमाण"** इति । **प्रमाणेन**—वक्ष्यमाणेन केवलव्यतिरेक्यनुमानेन । फलितां वस्तुप्रतिज्ञामनुक्त्याह **"तेन"** इति । एतेनार्थीयं प्रतिज्ञा न श्रौतीति दर्शितम् ।

अत्र चायमभिप्रायः । परमार्थतः स्वरूपतया स्थितेषु स्वावयवभूतेषु भावेष्वहमिति ग्रहणयोग्येष्वपि मायावशेन स्वतः भेदेन यदिदमिति भासनं तत्तत्रैवावयवतया स्थितानामेव सतां भवति, न ततः च्युतानाम्, यथा मृन्मयस्य घटस्य मृन्मयत्वेन स्थितस्यैव घटतया ग्रहणम्, न हि मृदो निर्गतो घटः किमपि भवति, मृत्सत्तयैव सतायुक्तत्वात्, इति तदन्तःस्थितत्वं[1] तदभिन्नतामात्रमेव न तु तदन्तराधेयत्वेनावस्थानं मृद्भावेन हि स्थितो घटः मृदन्तस्थ उच्यते, न तु तदाधारत्वेन स्थितः, तद्बहिःस्थितत्वं तु ततो भिन्नत्वमेव, मृदो भिन्नो जलतरङ्गो मृदो बाह्य इत्युच्यते । अतश्च चिदंतःस्थितस्य भावराशेः चिन्मयत्वमेव तदन्तःस्थितत्वम् न तु स्वप्रधानतया तत्रावस्थानम्, ततो बहिःस्थत्वं च मायावशेनेदन्तया ततो भेदेन भासनम्, न तु ततो निर्गत्य कुत्रापि देशेऽवस्थानमिति तद्बहिरवस्थानं मायाकार्यमेव । तदुक्तम् :—

"एतदन्धकारं यद् भावेषु प्रकाशमानतया स्वात्मानतिरिक्तेष्वपि"

इत्यादि ।

---

1. तदन्तःस्थितत्वं च तदभिन्न—C.

**प्रागिवार्थोऽप्रकाशः स्यात्प्रकाशात्मतया विना।**
**न च प्रकाशो भिन्नः स्यादात्मार्थस्य प्रकाशता॥ २॥**

अर्थो नीलादिः, तस्य नीलादिरूपतैव यदि प्रकाशमानता न पुनः सापरा[1] काचित् अर्थशरीरोत्तीर्णा प्रकाशात्मता तर्हि यथा सर्वान् प्रति नीलमेव तत्संभावनया भण्यते, न कंचित् वा प्रति, वस्तुतो वा स्वात्मन्येव तत नीलं परस्य परनिष्ठत्वानुपपत्तेः,[2] स्वात्मनि वा न नीलं न अनीलम् प्रकाशानुग्रहेण विना व्यवस्थानायोगात्। तथा प्रकाशमानतापि अस्य

अथ द्वितीयस्य श्लोकस्यावतरणिकां करोति **"प्रमाणेन"** इति। स्पष्टम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्ट। **"प्राक्"** इति।

अत्र टीका :–

सूत्रस्थमर्थशब्दं व्याचष्टे **'नीलादिः'** इति। आदिशब्देन सर्वस्य नीलव्यतिरिक्तस्य बाह्यस्य सुखादेरान्तरस्य च भावजातस्य ग्रहणम्। वाक्यार्थमाह **"तस्य"** इति। **तस्य**–नीलादेः, **नीलादिरूपतैव**–नीलादिस्वभावतैव, **यदि प्रकाशमानता**–ग्रहणसमये स्थितं 'प्रकाशते' इत्येवंरूपं प्रकाशकर्तृत्वं भवति। **पुनः**–पक्षान्तरे, **सा**–प्रकाशमानता, **अपरा**–नीलादिरूपताया अन्या, अत एव **अर्थशरीरोत्तीर्णा**–अर्थाख्यात् शरीरात्–स्वरूपात् उत्तीर्णा, **प्रकाशात्मता**–प्रकाशरूपता, शुद्धप्रकाशरूपतेति यावत्। **न** भवति, **तर्हि**–तदा, **तत्**–नीलादिवस्तु, **यथा सर्वान् प्रति**–सर्वेषु प्रमातृषु, **संभावनया**–कल्पनया, **नीलमेव** लौकिकैः **भण्यते**, **वा**–पक्षान्तरे, **वस्तुतः**–परमार्थतः, **परस्य**–अन्यस्य, **परनिष्ठत्वानुपपत्तेः**–अन्यलग्नतायोगात्, पण्डितैः **तत् स्वात्मन्येव नीलं** भण्यते। नानीलं भण्यते, कुतः ? **प्रकाशानुग्रहेण**—प्रकाशावष्टंभेन, **विना व्यवस्थानायोगात्**–व्यवस्थाया असंभवात्, प्रकाशगृहीतमेव हि वस्तु नीलादिरूपतया व्यवस्थापयितुं शक्यते, **तथा**–तद्वत्, **प्रकाश-**

1. न पुनरपरा काचित्—K. S. S.
2. परनिष्ठतानुपपत्तेः—K. S. S.

**सर्वान् प्रति न कंचित् वा प्रति अपि तु स्वात्मन्येव, स्वात्मन्यपि वा न स्यात् इति अन्धता जगतः ।**

**अथ इन्द्रियालोकादिक्षणवर्गात् प्रकाशरूपोऽसौ नीलक्षणो विशिष्ट एव जातः, एवमपि स एव प्रसङ्गः, प्रकटतावादेऽपि अयमेव दोषः, सर्वथा**

---

**मानतापि**-नीलादिवद् अर्थरूपत्वेनाङ्गीक्रियमाणा प्रकाशकर्तृतापि, **अस्य**-नीलार्थस्य, **सर्वान् प्रति**-संभावनया सर्वेषु, **स्यात्, न कंचिद्वा**, वस्तुतः कस्मिँश्चिदपि न वा स्यात्, **अपि तु स्वात्मन्येव** ततोऽपि परमार्थविचारे **स्वात्मन्यपि वा न स्यात् इति अन्धता**-अर्थग्रहणासमर्थत्वेनान्धसदृशत्वम्, **जगतः**-लक्षणया जगद्गतेषु प्रमातृषु स्यात्, संभावनयोक्तं सर्वान् प्रति प्रकाशमानत्वं सर्वज्ञत्वहेतुत्वमनपेक्ष्यैवमुक्तम् ।

अयम्भावः-ग्रहणसमये भावस्य मायया भावत्वेन भासितं निजं सहजशुद्धप्रकाशाख्यं स्वरूपमेव प्रमातारं प्रति स्फुटीभवति, यतः तदा प्रमाता तद्वस्तु प्रति दिदृक्षासमये व्यापको भवति । यदुक्तम् :-

दिदृक्षयेव सर्वार्थान्यदा व्याप्यावतिष्ठते ।
तदा किं बहुनोक्तेन स्वयमेवावभोत्स्यते ॥

इति। व्यापकीभवंश्च तद्वस्तु स्वात्मसात्करोति, तन्मयीभावासादनं च वस्तुनः शुद्धप्रकाशरूपत्वासादनमेव, प्रमातुः स्फुटं प्रकाशमात्ररूपत्वात्, एतच्च शक्तिपातं विना महतापि प्रयत्नेन दुर्ज्ञेयमेव, तस्मिंस्तु सति स्वयमेव स्फुरति अत एवोक्तम् "स्वयमेवावभोत्स्यते" इति, अन्यथा तु यदि तच्छुद्धप्रकाशरूपतासादनं प्रकाशमानत्वं न स्यादपित्वर्थरूपतायाः नीलगुणवत् विशेषादायकमेव स्यात् तदा तस्यान्यप्रकाशानुग्रहं विना नीलवद्ग्रहणमेवे न संभवेदिति।

अत्र क्षणिकवादी प्रश्नयति **"अथ"** इति। **असौ**-नीलार्थः, **विशिष्टः**-ग्रहणयोग्यतारूपविशेषयुक्तः, उत्तरं कथयति **"एवमपि"** इति। **स एव**-पूर्वोक्त एव, अर्थशरीरोत्तीर्णप्रकाशरूपतानासादनाविशेषादिति भावः। मनसि शङ्किते मीमांसकमतेऽपि दोषमासञ्जयति **"प्रकटता"** इति। प्रकटतापि हि

**अर्थशरीरविश्रान्तः चेत् प्रकाशो मम अवभासते इति प्रमातृलग्नतया प्रकाशस्थितिः दुरुपपादा। प्रमाता हि तदानीम् इन्द्रियादिमयो[१]ऽर्थरूप-[२] प्रकाशस्य कारणं भवेत् बीजमिवाङ्कुरस्य। न च अङ्कुरो बीजापेक्षोऽङ्कुरात्मा,[३] ततो यदि न प्रकाशात्मा स स्यात् 'प्रागिव' ज्ञानोदयात् पूर्वं यथाऽसाव-[४]**

ज्ञानक्रिययार्थविषयत्वेनोत्पादितार्थशरीरोत्तीर्णा नैव भवतीति भावः। संगृह्य परमार्थं कथयति **"सर्वथा"** इति। **सर्वथा**–सर्वप्रकारेण, **अर्थशरीरविश्रान्तः**, न तु शुद्धप्रकाशरूपः, **प्रकाशः**–लक्षणया प्रकाशमानता, **चेत्**–यदि, **तदा ममावभासते इति**–एवम्, **प्रमातृलग्नतया**–षष्ठ्यन्तास्मच्छब्दवाच्यप्रमातृ-संबन्धितया, **प्रकाशस्य**–घटसबन्धिनः प्रकाशकर्तृत्वस्य, **स्थितिः**–अवस्थानम्, **दुरुपपादा**–दुःखेनोपपादयितुं शक्या स्यात्, अन्यसंबन्धिनः अन्यसंबन्धित्वायोगात्। ननु कारणतया स्थितः प्रमाता कथं न तस्य संबन्धी स्यादित्यत आह **"प्रमाता"** इति। **हि**–यस्मात्, **प्रमाता तदानीम्**–ग्रहणसमये, **इन्द्रियादिमयः**-ग्रहणसापेक्षत्वेन इन्द्रियादिषु दत्तावधानतया तद्रूपोऽपि सन्, **अर्थरूपप्रकाशस्य**–अर्थशरीरविश्रान्ततयाङ्गीकृतस्य प्रकाशस्य, **कारणं भवेत्**–अवश्यं भवत्येव। किमिव कस्य? **बीजमिवाङ्कुरस्य**। ननु तेनैव तस्य तत् संबन्धित्वमायातमित्यत आह **"न च"** इति। **अङ्कुरः**–बीजादुत्पन्नः अङ्कुरः, **अङ्कुरात्मा**–अङ्कुरभावं गतः सन्, **बीजापेक्षः**-सर्वदा बीजापेक्षायुक्तः न भवति स्वकार्यकरणे तदपेक्षारहितत्वात्। तथैवात्मनो लब्धसत्ताकः अर्थशरीरविश्रान्तः प्रकाशः भिन्नत्वेन आत्मानं नापेक्षते इत्यर्थः। प्रक्रियामुपसंहरति **"ततः"** इति। **ततः**–तस्मात्, **सः**–अर्थः, ग्रहणसमये **प्रकाशात्मा**–प्रकाशकर्तृताद्वारेण शुद्धप्रकाशरूपः, **यदि न स्यात्**, तदा **'प्रागिव'** इति पदं व्याचष्टे **"ज्ञानोदयात् पूर्वं यथा"** इति। **ज्ञानोदयात् पूर्वं यथा असौ–**

1. इन्द्रियार्थमय—K. S. S.
2. अर्थरूपस्य प्रकाशस्य—K. S. S.
3. भवेत्—K. S. S.
4. सोऽप्रकाशः—K. S. S.

**प्रकाशः तथा ज्ञानोदयेऽपि स्यात् । ननु ज्ञानम् अर्थप्रकाशरूपमेव, तत् कथं ज्ञानस्य उदयानुदययोः अर्थस्य तुल्यता स्यात् । स्यात् एतत् यदि उपपद्येत, यावता अर्थात् भिन्नं यत् ज्ञानं प्रकाशरूपम्, तत् अर्थस्य संबन्धितया कथं स्यात् । यदि तावत् अर्थः प्रकाशते इत्येवंभूतं ज्ञानस्य स्वरूपं**

---

अर्थः, **अप्रकाशः स्यात्,** नीलत्वाप्रकाशमानत्वयोरविशेषात्, विशेषे तु अस्मदभीष्टस्य सिद्धिरिति भावः। तदुक्तम् :–

ज्ञेयस्य [1] च परं तत्त्वं यः प्रकाशात्मकः शिवः।
न ह्यप्रकाशरूपस्य प्राकाश्यं वस्तुतापि वा।।

इति। इदं प्रमाणं च तर्करूपमेव। तथा हि–अर्थो यदि शुद्धप्रकाशव्यतिरिक्तः स्यात् तर्हि अप्रकाशः स्यात् इति व्याप्यारोपेण व्यापकारोपणमेवात्र दृश्यते। यथा "यद्यत्राग्निर्नाभविष्यत् तर्हि धूमो नाभविष्यत्" इत्यत्र। ननु तर्हि कथमत्रावतरणिकायामाचार्येण प्रमाणव्यवहारः कृतः? प्रमाणमार्गशोधकत्वेनेति ब्रूमः, अनेन हि शोधितो [2] मार्गः। अयमर्थः–शुद्धप्रकाशरूपः प्रकाशत्वादिति केवलव्यतिरेक्यनुमानमत्र प्रवर्त्तते प्राक्कालीनस्यास्यार्थस्यैव व्यतिरेके दृष्टान्तत्वात्, सर्वस्य अर्थराशेः पक्षीकृतत्वेनान्वयासंभवाच्चेत्यलं प्रपञ्चेन।

अत्र तृतीयपादस्यावतरणिकां कर्तुं तार्किकमतं शङ्कते **"ननु"** इति। **अर्थप्रकाशरूपमेव**–अर्थविषयप्रकाशस्वरूपमेव, न तु नीलवत् विशेषणतया अर्थशरीरविश्रान्तम्। ननु ततः किमित्यत आह **"तत्"** इति। **तत्**–ततः कारणात्, **ज्ञानस्योदयानुदययोरर्थस्य**–नीलाद्यर्थस्य, **तुल्यता स्यात्**। तर्करीत्याङ्गीकरोति **"स्यादेतत्"** इति। ननु तर्ह्यस्त्वित्यत आह **"यदि"** इति। ननु कथं नोपपद्यते इत्याशङ्क्य तृतीयपादं व्याचष्टे **"यावता"** इति। **यावता**–यस्मात्, **संबन्धितया**–संबन्धिभावेन, सम्बन्धीति यावत्, इत्थंभावे तृतीया। **कथं स्यात्,** केन प्रकारेण स्यात् इत्यर्थः। तत्र प्रकारमुपन्यस्येष्टापत्तिमाह

---

1. "ज्ञेयस्य हि परं तत्त्वम्" is the text of this verse as found in Tantrāloka Vol. I, p. 89.
2. अनेन शोधितं मार्गं हि—C.

**तत् अर्थज्ञानयोः अभेद एवायातः, अर्थस्वभावस्य ज्ञानत्वेन उक्तत्वात्, अर्थस्वभावत्वे[1] च सति प्रकाशस्य अर्थात्मतायाम् उक्तं दूषणम् । अथ अर्थं प्रकाशयति इति ज्ञानस्य स्वरूपम्, तर्हि प्रकाशमानमर्थं करोति ज्ञानम् इति आपतिते पुनरपि स एव दोषः । कृतप्रतानश्च अयं प्रकृत्यर्थण्यर्थविवेको मयैव भेदविदारणे[2] इति तत एव अन्वेष्यः । तस्मात् भिन्नः पकाशोऽर्थस्य संबन्धी भवति इति संभावनैव नास्ति । तच्च[3] इदम् उपपत्त्या आयातम्—**

"**यदि**" इति। कुत आयात इत्यत आह "**अर्थ**" इति। **अर्थस्वभावस्य**-अर्थस्वरूपस्य, **ज्ञानत्वेन**-ज्ञानभावेन, "**उक्तत्वात्**" इति, अनिच्छयापि इति शेषः। ननु ततः किम् इत्यत आह "**अर्थ**" इति । **प्रकाशस्यार्थस्वभावत्वे सति अर्थात्मतायाम् उक्तं दूषणम्**-समनन्तरमर्थात्मताविषये प्रोक्तोऽन्धतारूपो दोषः स्यात्। अथ पूर्वपक्षवादिना अभीष्टं पक्षमुपन्यस्यति "**अथ**" इति। "**अर्थं प्रकाशयति**" इति, णिसहितेन प्रकारेणेत्यर्थः, अत्रापि पूर्वोक्तमेव दूषणं प्रसञ्जयति "**तर्हि**" इति। **आपतिते**-विग्रहवशेन बलादायाते, "**प्रकाशमानं करोति**" इत्यत्र हि "**प्रकाशमानम्**" इति घटः प्रकाशते इत्यनेन तुल्यार्थम्, तत्र चोक्त एव दोषः, यत्तु करोतीति णिज्वाच्यं तत्रावस्थाभेदेन तदेव ज्ञानं हेतुः, न च तेनास्य प्रकाशकर्तृत्वं विनश्यति, न हि पचनात्[4] पाठको देवदत्तो पचन्निति वक्तुं शक्यः। ननु अस्य विस्तरेण विवेचनं न्याय्यमित्यत आह "**कृत**" इति। **कृतप्रतानः**-कृतविस्तारश्च, **भेदविदारणे**, भेदविदारणपरे ग्रन्थे इत्यर्थः। **तत एव**-भेदविदारणादेव। उक्तमर्थमुपसंहरति "**तस्मात्**" इति । **संभावनैव नास्ति**, का कथा वस्तुताया इति भावः। फलितं कथयंश्चतुर्थपादं व्याचष्टे "**तच्च**" इति। **उपपत्त्या**—प्रमाणेन, **आयातम्**-अनिच्छयापि सिद्धम्। किमित्यपक्षाया-

1. अर्थस्वभावत्वे च प्रकाशस्य—K. S. S.
2. भेदवादविदारणे—K. S. S.
3. अतश्च—K. S. S.
4. न हि पचनापाठको देवदत्तः पचन्निति वक्तुं शक्यः—C.

**अर्थस्य स्वरूपं प्रकाशमानता[1] प्रकाशाभिन्नत्वम् इति। प्रकाशश्च यदि घटेऽन्यः पटेऽन्यः तदा अनुसंधानस्य अयोगः, द्वयोः प्रकाशयोः स्वात्ममात्रपर्यवसानाद् इति वितत्य उपपादितं 'नश्येत् जनस्थितिः' इत्यत्र। तस्मात् एक एव प्रकाशः। एतदेव आवृत्त्या दर्शितं 'न च प्रकाशो भिन्नः स्यात्' इति ॥ २ ॥**

---

माह "**अर्थस्य**" इति। "**प्रकाशता**" इति पदं व्याचष्टे "**प्रकाशमानता**" इति। अत्रापि पर्यायपदमाह "**प्रकाशाभिन्नत्वम्**" इति। अकर्मकाणां कर्ता हि क्रियया सहैकत्वमेव भजति, यथा देवदत्तो भवति इत्यत्र भवनं देवदत्तस्य स्वरूपमेव न तु देवदत्त ओदनं पचति इतिवत् कर्तृकारकविषयक्रियाहेतुतया तिष्ठतीति। "**इति**" शब्दः श्लोकव्याख्यासमाप्तौ।

अथ तृतीयपादस्यावृत्त्यार्थान्तरं वक्तुं पुनरवतरणिकां करोति "**प्रकाशश्च**" इति। **उपपादितम्**-समर्थितम्। कुत्रेत्यपेक्षायामाह "**नश्येत्**" इति। अवतरणिकां कृत्वा फलितकथनरीत्या तृतीयं पादमावृत्त्या व्याचष्टे "**तस्मात्**" इति। **आवृत्त्या**—पात्रवत् क्रमेण योजनरूपया, **दर्शितम्**, तृतीयपादेन इति शेषः। तदेवोपन्यस्यति "**न च**" इति।

अयमत्र संक्षिप्तार्थः। प्रकाशात्मतया विना-प्रकाशमानतारूपशुद्धप्रकाशाख्य-निजस्वरूपासादनद्वारागतशुद्धप्रकाशरूपतां विना, अर्थः प्रागिव–अंग्रहणकाले इव ग्रहणकालेऽपि अप्रकाशः स्यात्, प्रकाशते च अतो ज्ञायते प्रकाशान्तःस्थितस्यैव भावस्य बहिरिदन्तया भासनमस्तीति भावः। ननु प्रकाशविषयतयैवास्य भानं भवतु किं तद्रूपताकल्पनायासेनेत्यत आह "न च" इति। प्रकाशः भिन्नः न च स्यात्, तथा च अस्य घटसंबन्धित्वमेवायुक्तं भिन्नयोः सम्बन्धायोगादिति भावः। अतः प्रकाशोऽर्थस्यात्मा–अलौकिकं स्वरूपं भवति।

ननु तत्किं प्रत्यर्थं भिन्नमथवा एकमित्यपेक्षायां तृतीयपादमावृत्त्या योजनीयम्। प्रकाशः भिन्नः न हि स्यात्, एक एव स्यादित्यर्थः, अन्यथा जनस्थितिनाशप्रसङ्गाद्

---

1. प्रकाशमानत्वम्—K. S. S.

व्यतिरिक्तस्य ज्ञानस्य अर्थप्रकाशरूपताम् अभ्युपगम्यापि बाधकान्तरमाह :—

**भिन्ने प्रकाशे चाभिन्ने सङ्करो विषयस्य तत्।**
**प्रकाशात्मा प्रकाश्योऽर्थो नाप्रकाशश्च सिद्ध्यति॥३॥**

यदि अर्थात् अन्य एव ज्ञानात्मा प्रकाशः अत एव भिन्नोऽर्थतः तर्हि स्वात्मनि तस्य प्रकाशमात्ररूपत्वात् अभेद एव। तथा हि नीलस्य प्रकाशः, पीतस्य प्रकाशः इति यो नीलांशः पीतांशश्च, स न[1] तावत् ज्ञानस्य

इति। तथास्मदीयं पद्यमपि :—

"चिदन्तःस्थानां यद्बहिरिव विभानं समुचितं
ततोऽर्थानां..........चिति चिति विभागा इव यतः।
मृदन्तःस्थो मृत्त्वं त्यजति न कदाचिद् घट इह
तदन्तःस्थत्वं यद् भवति खलु तत्त्वं न तु भिदा॥"

इति।

अथ तृतीयस्य श्लोकस्यावतरणिकां करोति "**व्यतिरिक्त**" इति।

अत्र टीका :—

**व्यतिरिक्तस्य**-विषयितया स्थितत्वाद् भिन्नस्य, **अभ्युपगम्यापि**–निपुणवादितयाऽङ्गीकृत्यापि, **बाधकान्तरम्**–सङ्कररूपमन्यं बाधकम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**भिन्ने**" इति।

अत्र टीका :—

"**भिन्ने**" "**प्रकाशे**" इति पदद्वयं व्याचष्टे "**यदि**" इति। **अन्य एव**–भिन्न एव, **ज्ञानात्मा**–ज्ञानरूपः, **अत एव**–अन्यत्वादेव, **अर्थतः**–नीलादेः सकाशात्। "**भिन्ने**" इति पदं व्याचष्टे "**तर्हि**" इति। **स्वात्मनि**–प्रकाशाख्ये निजस्वरूपे। अभेदमेव समर्थयितुमुपक्रमं करोति "**तथा हि**" इति।

1. स तावत् ज्ञानस्य स्वरूपम्—K.S.S. This cannot be right. A 'न' as printed above, is required. Otherwise "भेदवादत्यागापत्तेः" and "अथ विषयः" which follow would remain unintelligible.

**स्वरूपम् भेदवादत्यागापत्तेः। अथ विषयः, तद्देवेदं विचार्यते—इह प्रकाश-बलान् नीलपीतयोः भेदोऽभ्युपगन्तव्यः, येनैव च प्रकाशेन नीलो नील एव इति उपगम्यते, तेनैव च प्रकाशेन पीतः पीत इति कथं संगच्छताम्, नीलेन जनितः, पीतेन जनितः, तेन वा सह समानसामग्रीक[1] इत्यादि**

**तावत्**, नात्र कस्यापि विप्रतिपत्तिरित्यर्थः। **"भेदवादत्यागापत्तेः"** इति, वैशेषिका हि भेदनिष्ठा एव, ज्ञानार्थयोश्च तैरेकस्वरूपत्वेऽङ्गीकृते स्वाभीष्टस्य भेदवादस्य तेषां त्याग एव स्यात्, तथा च अपसिद्धान्तापत्तिस्तेषां स्यादिति भावः। पक्षान्तरं शङ्कते **"अथ"** इति। नीलांशः पीतांशश्च ज्ञानस्य **विषयः अथ**—चेद् भवतीत्यर्थः। **तद्देवेदम्**—विषयत्वमेव। विचारमेव करोति **"इह"** इति। **अभ्युपगन्तव्यः**—अवश्यमङ्गीकर्तव्यः, अन्यथा तस्यासिद्धेः। **तेनैव प्रकाशेन पीतः पीतो** भवतीति यदभ्युपगम्यते, **इति**—एतत्, **कथं संगच्छताम्**—युक्तं भवेत्, नीलज्ञानस्य पीतं प्रति पीतज्ञानस्य च नीलं प्रति व्यवस्थापकत्वाऽ-योगादिति भावः। अत्र बौद्धैकदेशैः[2] समर्थितो द्विविधो विषयविभागो न युक्त इति कथयति **"नीलेन"** इति। अयं प्रकाशः **नीलेन जनितः**—विषयभावेन स्थित्वोत्पादितः, अत एव नीलप्रकाशो भवति, **पीतेन जनितः** अतः पीतप्रकाशो भवति। **वा**—पक्षान्तरे, **तेन सह समानसामग्रीकः**—नीलेन सहैक-सामग्रीयुक्तः नीलप्रकाशो भवति, एवं पीतेन सहेत्यादि।

इदमत्र तात्पर्यम्। सर्वे सन्तो भावास्तावत् क्षणिकेन विज्ञानेन दत्तसत्ताकाः क्षणिका एवेति युक्तिमत्, विज्ञानस्य च क्षणिकत्वं प्रतिक्षणं प्रतिविषयं नवीनतयो-त्पादात् प्रसिद्धमेव, तत्र प्रथममिन्द्रियेण क्षणिकेन उत्पन्नो ज्ञानक्षणः स्वसन्तान-मारभते तद्विषयोऽर्थक्षणश्च स्वसन्तानम्, तत्र द्वितीय ज्ञानक्षणे प्रथमो ज्ञानक्षणः आरम्भकत्वन उपादानीभवति, तद्विषयस्त्वर्थक्षणः उपादानकारणस्फुटीभावहेतुत्वेन

1. एकसामग्रीकः—K. S. S.
2. The word 'एकदेश' is not used in the sense of sectary. 'एकदेशिन्' is the usual expression for that. "बौद्धैकदेशिभिः" would, therefore, be better.

**यत् उच्यते तत् सिद्धे नीलपीतयोर्भेदे स्यात्, स एव विचार्यः। अथ नीलाकारोऽसौ तत् यदि प्रतिबिम्बबलात् तद्द्वितीयबिम्बानवभासात् अयुक्तम्। अथ अभेदः, तर्हि त्यक्तो भेदवादः, तथा करणतादिवादे[1] शिखरस्थज्ञानं बहुतरनीलादिजन्यम् एकत्र पटु अन्यत्र मन्दम् इति कथं**

---

अमुमेव प्रति निमित्तकारणीभवति इति स्फुटमेव द्वितीययोः ज्ञानार्थक्षणयोः एकसामग्रीकत्वम्, ज्ञानस्य ज्ञानार्थजन्यत्वात्, अर्थस्याप्यर्थज्ञानजन्यत्वात्। यस्तूपादानसहकारिभेदः स स्तोकत्वेन अकिंचित्कर एव। यदुक्तम् :—

"एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः"

इति। तावेव प्रथमद्वितीयौ ज्ञानार्थक्षणौ एकसामग्रीकत्वेन परस्परं न व्यभिचरत इत्ययं ज्ञानक्षणोऽस्यार्थक्षणस्य संबन्धी, एवं तृतीयादिष्वपि ज्ञेयम्, प्रथमयोस्तु जन्यजनकभावेनैव व्यवस्थासिद्धिरित्यलम्।

नन्वेवमेव भवतु इत्यत आह "**इत्यादि**" इति। **स एव**—नीलपीतयोर्भेद एव। तथा च नैतद्युक्तमिति भावः। अथ निराकारसाकारज्ञानबौद्धमतमाह "**अथ**" इति। **असौ**-प्रकाश एव, **नीलाकारो** भवति, तत एव नीलप्रकाशो भवतीत्यर्थः। अत्रापि परिहारमाह "**तत्**" इति। **तत्**—नीलाकारत्वम्, **यदि प्रतिबिंबबलाद्** भवति, तदा **तद् द्वितीयबिंबानवभासात्**-वस्तुरूपबिंबानवक्लृप्तेः, **अयुक्तं** भवति, बिंबाभावे प्रतिबिंबाद्योगात्। एतेन निराकारबौद्धमतनिरासः। साकारवादिमतमपि दूषयति '**अथ**' इति। **अथाभेदः**—ज्ञानाकारस्यैव स्थितत्वेन अर्थज्ञानयोर भेद एव भवति, **तर्हि** भवद्भिरपि **भेदवादः त्यक्तः**, विज्ञानवादिबौद्धवदिति शेषः

अथोपायातिशयेन प्रमेयातिशयेन च ज्ञानातिशयवादिनां तार्किकाणां मतं दूषयितुमाह "**करण**" इति। करणम्—उपायः तस्य भावः, आदिशब्देन प्रमेयत्वादिकार्यग्रहणम्, तस्याः वादः तस्मिन्। ते हि एवं कथयन्तिः—एकरूपाः प्रतीतयः करणवशेनैव भिद्यन्ते, कुत्रचिद्धि किंचिदेव करणं न सर्वं सर्वत्र, तथा प्रमेयेन वा भिद्यन्ते, न हि सर्वत्र एकमेव प्रमेयम्। तत्र परिहारमाह "**शिखरस्थ**" इति। शिखरे—पर्वतशृङ्गे तिष्ठतीति तादृशस्य, युगपत्सर्वदर्शिनः पुरुषस्येत्यर्थः, यत् ज्ञानम्,

---

1. कारणतादिवादे—K. S. S.

**भेदः प्रकाशशरीरस्य अभेदात्। तथाभूते च अन्यतरदर्शनोद्भूतेऽपि[1] संस्कारे बलादेव अशेषस्मरणप्रसङ्ग इति भूयान् सङ्करः। स्यादेतत्, अर्थ एवास्तु, किमनेन दोषापादकेन[2] प्रकाशेन इति। अत्राह—अप्रकाशस्य प्रसिद्धिरेव न काचित्, स्वात्मनि हि नीलं यदि पीतं न किंचित् वा, तत्**

---

कीदृशम्? बहुतरं यन्नीलं तद् आदिर्यस्य तत् बहुतरनीलादि, तेन जन्यम्, आदि-शब्देन अल्पतरपीतादिग्रहणम्, **एकत्र**-बहुतरनीलविषये, **पटु** भवति, **अन्यत्र**-अल्पतरपीतादिविषये, **मन्दं** भवति **इति भेदः कथं** स्यात्। कुतः? **प्रकाशशरीरस्य**-प्रमाणत्वेन स्थितस्य प्रकाशस्वरूपस्य, एकत्वात्, न हि तत्र उपायभूतस्य प्रमाणस्य भेदः, आदिशब्दगृहीतेन प्रमेयातिशयेन ज्ञानातिशयवादे दूरादूरस्थितवस्तुज्ञानं कथमेकत्र पटु अन्यत्र मन्दं भवेदिति स्वयं योजनीयम्। समीपस्थे हि ज्ञानं पटु भवति दूरस्थे तु तस्मिन्नेव मन्दम्, प्रमेयैकत्वादिति हेतुत्वेन स्वयं योजनीयम्। करणतावादे दोषान्तरमाह **"तथा"** इति। **तथाभूते च संस्कारे**-युगपत्सर्व-विषयानुभवानुकूले संस्कारे च, **अन्यतरदर्शनोद्भूते**—तत्रानुभूतबहुवस्तुमध्यादे-कतरस्य दर्शनेनोद्भूते सति, **बलादेवाशेषस्मरणप्रसङ्गः**-तत्रानुभूतसमस्तवस्तु-स्मरणप्रसङ्गः, **इति**-अतः कारणात्, **भूयान्**-अतिबहुः, **सङ्करः** स्यात्, स्मृतौ व्याप्तेरिति भावः, अतः कारणाःकरणतादिवादस्यापि न युक्तत्वमिति भावः। एतेन पूर्वार्धं कृतव्याख्यम्।

अत्र शिष्यः प्रश्नयति **"स्यादेतद्"** इति। एतद् भवत्वित्यर्थः। किमित्यपेक्षा-यामाह **"अर्थ एव"** इति। **दोषापादकेन**-प्रोक्तसङ्करदोषान्धतादिदोषप्रसञ्ज-केन। एतेन **"अर्थ"** पदरहितं तृतीयपादं तावद् अवस्थाप्य चतुर्थपादस्याव-तरणिका कृता। उत्तरं वक्तुं पूर्वपादस्थ **"अर्थ"** पदसहितं चतुर्थपादं व्याचष्टे **"अत्राह"** इति। किमाहेत्यपेक्षायामाह **"अप्रकाशस्य"** इति। कुतो न सिद्धि-रित्यत आह **"स्वात्मनि"** इति। **स्वात्मनि**-प्रकाशास्पृष्टे स्वरूपमात्रे, **नीलं यदि पीतम्, वा**-पक्षान्तरे, **न किंचिद्वा**-असद्वा, कश्चिद् ब्रूयादिति शेषः।

---

1. अन्यतरदर्शनोद्बोधिते—K. S. S.
2. दोषोपपादकेन—K. S. S.

**किं दुष्येत्, अत एव ग्रन्थकृतैव अन्यत्र उक्तम् :—**

**'एवमात्मन्यसत्कल्पाः प्रकाशस्यैव सन्त्यमी ।**

**जडाः प्रकाश एवास्ति स्वात्मनः स्वपरात्मभिः ॥'**

**इति । तत् यदि प्रकाशः तदा भवति अर्थः, प्रकाशश्च असौ कथम् । यदि प्रकाशतैव घटस्य वपुः सैव पटस्य इत्यादि विश्ववपुः प्रकाशः सिद्धः ॥ ३ ॥**

---

**किं दुष्येत्**—को दोष आयाति, न हि तन्नीलमुत्थाय "नीलोहम्" इति विवादं कुर्यात्, जडत्वेन मूकत्वादिति भावः। अत्र श्रीमदुत्पलदेवस्य वाक्यमुदाहरति "**एवम्**" इति। अस्य श्लोकस्य पूर्वं व्याख्या कृतेति न पुनरायस्तम्। तावत्स्थापितं तृतीयपादमिहैव व्याख्यायोग्यं व्याख्यातुं फलितकथनरीत्याऽवतरणिकां करोति "**तत्**" इति। **तत्**—तस्मात् कारणात् **यदि प्रकाशः स्यात् तदा अर्थो भवति,** सिद्ध्यतीत्यर्थः। शिष्यः पृच्छति "**प्रकाशश्च**" इति। **असौ प्रकाशश्च कथं** स्याद्, येन अर्थः सिद्ध्यतीति भावः। उत्तरं वक्तुम् '**अर्थ**' पदरहितं तृतीयं पादं व्याचष्टे "**यदि**" इति। **प्रकाशः तदा भवति**। तदा कदा ? **यदि इत्यादि** भवति, इत्यादि किम् ? या घटस्य प्रकाशता वपुर्भवति सैव प्रकाशता पटवपुर्भवति। आदिशब्देन सैव सर्वस्य वपुर्भवति। "**प्रकाशात्मा प्रकाश्यः**" इति वाक्यस्याप्ययमेवार्थः। यदा **प्रकाशात्मा,** भावप्रधानो निर्देशः, प्रकाशात्मता, अर्थात्सर्ववेद्येषु परमार्थतया स्थिता प्रकाशरूपता,[1] **प्रकाश्यो** भवति न तु प्रत्येकं विषयितया स्थितः प्रकाशः तस्य तदंशत्वेन ग्राहकतया कल्पितत्वात् इति सूत्रेऽनुक्तमपि फलितं स्वाभिप्रेतं वस्तु सिद्धतया कथयति "**विश्ववपुः**" इति। इति शब्दोऽध्याहार्यः, इति **विश्ववपुः**-सर्वमयः, प्रकाशः सिद्धः।

एवमत्र सङ्क्षपः। प्रकाशे-ज्ञाने, भिन्ने—स्वविषयाद् भिन्ने सति, तथा अभिन्ने अर्थ एव प्रकाशः,[2] अभिन्ने च सति, विषयस्य, जातावेकवचनम् तेन विषयाणामित्यर्थः।

---

1. प्रकाशो भवति—C.
2. प्रकाशकः—C.

**एकस्यैव प्रकाशस्य एवंभूतक्रमाक्रमकार्यकारणभावादिविचित्रवैश्वरूप्यप्रदर्शनसामर्थ्यरूपम् ऐश्वर्यम् इत्येतावत्[1] पर्यवसाययितव्यम्। तच्चैवं पर्यवस्यति, यदि प्रकाशस्य विचित्रभावे हेत्वन्तरम् अपाकृतम्। तत्र प्रकाशस्य अविचित्रस्य क्रमेण विचित्रताकारणं प्रतिबिम्बात्मकं तत्प्रतिबिम्बसजातीयं यत् तदेव नीलादिरूपं बाह्यम्, तच्च यद्यप्यनुमेयम्, तथापि**

---

सङ्करः—सङ्कीर्णता[2], एकज्ञानेन सर्वविषयग्रहणात्, अप्रकाशः—प्रकाशरहितो विषयः न सिद्ध्यति, यतः प्रकाशात्मा अर्थः प्रकाशो भवति इति॥ ३॥

अथ चतुर्थपंचमयोः श्लोकयोरवतरणिकां करोति "**एकस्यैव**" इति।

अत्र टीका :—

**एकस्यैव**, न तु प्रतिविषयं भिन्नत्वन स्थितत्वादनकस्य, एवंभूताः—लोके प्रसिद्धत्वाऽप्रसिद्धत्वाभ्यां स्थिताः ये क्रमाक्रमाः—क्रमाक्रमरूपाः कार्यकारणभावादयः, कार्यकारणभावः मोक्षण महेश्वरस्य, घटादिभिः सह कुलालादेश्च, आदिशब्दाद् व्याप्यव्यापकभावादिग्रहणम्, ते एव विचित्रम्-नानाविधम्, वैश्वरूप्यम्—सर्वरूपत्वम्, तस्य यत् प्रदर्शनं तत्र यत्सामर्थ्यं तद्रूपं यस्य तादृशम्। **इत्येतावत्**—प्रोक्तमेतावन्मात्रम्, **पर्यवसाययितव्यम्**—विश्रामयितव्यम्, निश्चेयमिति यावत्। **पर्यवस्यति**—विश्राम्यति। एवं कथमित्यपेक्षायामाह "**यदि**" इति। **हेत्वन्तरम्**—स्वव्यतिरिक्तोऽन्यो हेतुः, **अपाकृतम्**—दूरीकृतम्, अन्यथा भेदापातादिति भावः। तत्र अक्रमस्य युक्ततां ज्ञात्वा "**क्रमेण**" इत्युक्तम्, विचित्रतायाः कारणम् **विचित्रताकारणम्**, **प्रतिबिंबात्मकम्**—प्रतिबिंबदायकम्, तस्य प्रतिबिंबस्य—संक्रान्तस्य भावप्रतिबिंबस्य, सजातीयम्—सदृशम्, बिंबप्रतिबिंबयोः सदृशत्वात्, **बाह्यम्**—बिंबभूतं बाह्यं वस्तु, बिंबं विना प्रतिबिंबाऽयोगादिति भावः। ननु तर्ह्यनुमेयतया स्थितस्यास्य बाह्यस्य प्रत्यक्षत्वं कथं कथयसीत्याह "**तच्च**" इति। **तच्च**—बाह्यञ्च, **यद्यप्यनुमेयम्**—

---

1. इति तावत्—K. S. S.
2. महार्णता—C.

इदं नीलमिति प्रत्यक्षेण अध्यवसायात् अध्यवसायप्राणितत्वाच्च प्रमाणस्थितेः प्रत्यक्षव्यपदेश्यं भविष्यति। बाह्यार्थवादिकथितमिति हेत्वन्तरम् अनुमीयमानबाह्यरूपम्[1] आशङ्क्यमानत्वेन दर्शयति[2]:—

**तत्तदाकास्मिकाभासो बाह्यं चेदनुमापयेत्।**
**न ह्यभिन्नस्य बोधस्य विचित्राभासहेतुता॥ ४॥**
**न वासनाप्रबोधोऽत्र विचित्रो हेतुतामियात्।**
**तस्यापि तत्प्रबोधस्य वैचित्र्ये किं निबन्धनम्॥ ५॥**

इह बोधः तावत् अभिन्नः, प्रकाशमात्रमेव हि अस्य परमार्थः, प्रकाशाधिकं यदि नीलस्य रूपम्, तर्हि तत् अप्रकाशरूपम् इति न प्रकाशेत।

---

प्रतिबिंबाख्यन लिङ्गेन अवगतत्वात् अनुमितिविषयो भवति, **तथापि "इदं नीलम्" इति प्रत्यक्षेण**—प्रत्यक्षप्रमाणन, **अध्यवसायात्, प्रमाणस्थितेः**—प्रत्यक्षादिप्रमाणसत्तायाः, **अध्यवसायप्राणितत्वाच्च**, यत् प्रमाणं हि यत्र विषये यथाऽध्यवसायं जनयति तत्तत्र तथा व्यवस्थाप्यते इत्यर्थः। **प्रत्यक्षव्यदेश्यम्**—प्रत्यक्षेतिनामयोग्यम्, **भविष्यति**, येन तस्य लोके प्रत्यक्षमिति प्रसिद्धिरिति भावः। बाह्यार्थवादिभिः—बौद्धविशषैः कथितम्, **इति हेत्वन्तरम्**—प्रोक्तरूपमन्यं हेतुम्, कीदृशम्? अनुमीयमानं बाह्यरूपम्—बाह्यपदार्थस्वरूपं येन तादृशम्, **आशङ्क्यमानत्वेन**—आशङ्काकर्मत्वेन, **दर्शयति**, तदेवाशङ्कते इति यावत्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"तत्"** इति।

अत्र टीका :—

प्रथमश्लोकस्य प्रथममुत्तरार्धमेव व्याचष्टे **"इह"** इति। **अभिन्नः**—भेदरहितः। कुतोऽभिन्न इत्यत आह **"प्रकाश"** इति। **परमार्थः**—सहजं स्वरूपम्। साकारज्ञानवादिमतं शङ्कते **"प्रकाश"** इति। प्रकाशाख्यात् स्वरूपादधिकं **प्रकाशाधिकम्, अस्य**—बोधस्य। परिहारमाह **"तर्हि"** इति। **तत्**—

---

1. अनुमीयमानं बाह्यरूपम्—K. S. S.
2. प्रदर्शयति—K. S. S.

अथ तथा प्रकाशत्वमेव अस्य रूपम्, पीतप्रकाशः कथं स्यात् । अथापि क्रमिकनीलपीतादिप्रकाशरूपमेव तस्य स्वरूपम्,[1] नीलाद्याभासशून्योऽहमिति प्रकाशः स्वापाद्यवस्थासु न स्यात् । तस्मात् प्रकाशः प्रकाश एव, अणुमात्रमपि न रूपान्तरम् अस्य अस्ति इति अभिन्नो बोधः, तस्य च अभिन्नस्य कदाचित् नीलाभासता कदाचित् पीताभासता इति ये विचित्राभासाः तत्र कारणत्वम् हि यस्मात् न उपपन्नम् हेतौ अभिन्ने कार्यभेदस्य

नीलाख्यं रूपम्, "अप्रकाशरूपम्" इति, न हि जडस्य नीलस्य प्रकाशत्वं युक्तमिति भावः। **न प्रकाशेत**–न हि अश्वेतः प्रासादः श्वेतते इति युक्तमिति भावः। शिष्यः शङ्कते "**अथ**" इति। **तथा प्रकाशत्वम्**–नीलप्रकाशभावः, "**स्वरूपम्**" इति, न स्वरूपे पर्यनुयोगो युक्त इति भावः। अत्र परिहारमाह "**पीत**" इति। स्वरूपपरिवृत्तेरयोगादिति भावः। पुनरपि शङ्कते "**अथ**" इति। **तस्य**–बोधस्य, **स्वरूपम्**। पुनरपि परिहारं कथयति "**नील**" इति। **नीलाद्याभासशून्यः**–अहंमात्राभासत्वेन नीलाभासरहितः, **स्वापाद्यवस्थासु**–सुप्तिमूर्च्छाद्यवस्थासु। ननु तत्र आत्मनोप्याभासो नानुभूयते। सत्यम्, तत्र स्थितोप्यात्माभासः प्रकाशमात्रविषयत्वेन परामर्शानारूढत्वादसत्कल्प एव न तु परमार्थतो ऽसन् अज्ञानसाक्षितया स्थितत्वात्, अन्यथा "न किंचिदवेदिषम्" इत्युत्तरकालीनस्मृत्ययोगादिति भावः। तथा च न नीलाद्याभासोऽस्य स्वरूपमिति भावः। उपसंहारं करोति "**तस्मात्**" इति। **रूपान्तरम्**–नीलादिस्वरूपम् अन्यत्स्वरूपम्, **इति**–अतः कारणात्, **अभिन्नः**–भेदरहितः, **तस्य च**–अभिन्नस्य बोधस्य, **कदाचित्**–नीलग्रहणसमये, एवं पीतादौ, **इति**–एवंरूपाः, **ये**–आभासाः, **तत्र**–तेषु आभासेषु, "**तस्य**" इत्यस्य काकाक्षिवदुभयत्र योजना। कुतो नोपपन्नमित्याकाङ्क्षायामाह "**हेतौ**" इति। **हेतौ**–बोधाख्ये कारणे, फलितं स्वाभिप्रायमाह पूर्वार्धं च व्याचष्टे "**तस्मात्**" इति। "**स स**" इति वीप्सायां

1. तस्य रूपम्—K.S.S.
2. नीलाद्याभासमस्य—C.

**असंभवात्, तस्मात् स स विचित्रनीलपीतादिरूप आकस्मिकोऽज्ञातप्रत्यक्षसिद्धहेतुकः सन् बाह्यं विज्ञानगतप्रतिबिम्बात्मकस्वस्वभावसंपादकम् औचित्यात्[1] निजरूपसदृशं क्रमोपनिपतद्रूपबहुतरभेदात्मकं ज्ञानात् सर्वथा पृथग्भूतम् अनुमापयति इति संभावयते बाह्यार्थवादी ॥ ४ ॥**

**न च अस्य इदं संभावनामात्रम्, अपि तु निश्चयपर्यवसायि एव भवति । तथा हि विज्ञानवादिना यो हेतुः वैचित्र्ये वासनाप्रबोधलक्षण उक्तः स न उपपद्यते । 'स्मृतिजनकः संस्कारो वासना' इति तावत्**

---

द्वित्वम् । एतेन **"तत्तद्"** इत्यस्य व्याख्या । **आकस्मिकः**–परमार्थतः आलंबनकारकासंभवेनाकस्मादुत्पन्नः । कुतोकस्मादुत्पन्न इत्यपेक्षायां हेतुगर्भं विशेषणमाह **"अज्ञात"** इति । **बाह्यम्**–बाह्यवस्तु, **"अनुमापयति"** इति योजनीयम् । बाह्यं कीदृशमित्यपेक्षायां विशेषणान्याह **"विज्ञान"** इत्यादि । विज्ञाने-ग्रहणोन्मुखे अभिन्नतया प्रोक्ते बोधे, गतः–आकारत्वेन भासमानः, अत एव प्रतिबिंबात्मकः–प्रतिबिंबरूपः यः स्वः स्वभावः तस्य संपादकम् । तथा **औचित्यात्**–युक्तत्वेन, निजरूपस्य–आभासाख्यस्य निजस्य स्वरूपस्य, सदृशम्, न हि प्रतिबिंबविसदृशं बिंबं युक्तमिति भावः । तथा क्रमेण उपनिपतन्तः रूपाणां ये बहुतराः–अतिबहवः भेदाः ते आत्मा यस्य तादृशम्, आभासभेदवत् बहुभेदयुक्तमिति यावत् । तथा **ज्ञानात्**–अभिन्नतया उक्ताद् बोधात्, **पृथग्भूतम् अनुमापयति**–अनुमितिं प्रति कर्तृत्वं भजन्तं प्रमातारं प्रेरयति, **इति**–एतत्, **बाह्यार्थवादी "संभावयते"** इति योजनीयम् । एतेन संभावनायामत्र लिङ् इति सूचितम्, "णेरणौ" इत्यात्मनेपदम् । एतेन प्रथमश्लोको गतव्याख्यः ॥ ४ ॥

ननु तर्हि इयं संभावनैवास्ति न वस्तु इत्यत आह **"न च"** इति । संभावनात्वं चात्र स्वदर्शनानुसारेणैवोक्तमिति **"अस्य"** इति पदेन सूचितम् । **निश्चयपर्यवसायि**–निश्चयविश्रान्तम्, निश्चितमिति यावत् । एतत् समर्थयन् द्वितीयश्लोकपूर्वार्धं व्याख्यातुमुपक्रमं करोति **"तथा हि"** इति । **वास-**

---

1. औचित्यवशात्—K.S.S.

प्रसिद्धम्, इह तु अनुभववैचित्र्यहेतुः[1] पर्येषणीयो वर्तते । अस्तु वा नीलाद्याभाससंपादनसामर्थ्यरूपा ज्ञानस्य योग्यतात्मिका शक्तिः वासना, तस्याश्च स्वकार्यसंपादनोन्मुख्यं प्रबोधः, ततो बोधेषु आभासवैचित्र्यम् इति । तत्रापि तु ब्रूमः—इह यद्यपि[2] आभासानां ज्ञानान्तर्वर्तिनाम् अपारमार्थिकत्वं[3] संवृतिसत्त्वम् उच्येतापि, तथापि यदेषां कारणम् तद् वस्तुसदेव अङ्गीकार्यम् अवस्तुनः सर्वसामर्थ्यविरहितालक्षणस्य कार्यसंपादनप्राणितसामर्थ्यात्मकस्वभावानुपपत्तेः । एवंस्थिते या एता वासना आभासकारणत्वेन इष्यन्ते, तासां बोधात् यदि भिन्नं रूपम्, तच्च परमार्थसत्, तदयं शब्दान्तरप्रच्छन्नो बाह्यार्थवादप्रकार एव । अथ

---

**नाप्रबोधलक्षणः**—वासनाप्रबोधरूपः, अनुपपत्तिमेव साधयति "**स्मृति**" इति। **इह**—अस्मिन्विषये, **अनुभववैचित्र्यहेतुः**—अनुभववैचित्र्यस्योत्पादको विषयः, **पर्येषणीयः** विचारणीयः, तथा चान्यप्रस्तावे अन्यकथनमापतितमिति भावः। पक्षान्तरमाह "**अस्तु वा**" इति। **तस्याश्च**—शक्तेः, **ततः**—तस्मात् प्रबोधात्। अत्रापि परिहारमाह "**तत्रापि**" इति। "**ब्रूमः**" इति प्रतिज्ञां सफलयति "**इह**" इति। "**अपारमार्थिकत्वम्**" इति संवृतिसत्त्वपर्यायत्वेनोक्तम्, **वस्तुसत्**—परमार्थसत्, **एव**, न तु संवृतिसत्। कुत इत्यपेक्षायामाह "**अवस्तुनः**" इति। सर्वसामर्थ्यविरहोस्यास्तीति सर्वसामर्थ्यविरही तस्य भावः सर्वसामर्थ्यविरहिता, सा लक्षणम्-असाधारणो धर्मो यस्य तादृशस्य, कार्यसंपादनेन प्राणितः—दत्तसत्ताकः यः सामर्थ्यात्मकः—सामर्थ्यरूपः स्वभावस्तस्य अनुपपत्तेः। ननु एवं भवतु ततः किमित्यत आह "**एवम्**" इति। **तच्च**—रूपं च, **शब्दान्तरप्रच्छन्नः**—वासनाशब्देन अपूर्वेण कथनात् तेन

---

1. अनुभववैचित्र्ये हेतुः—K.S.S.
2. ब्रूमः—यद्यपि—K.S.S.
3. अपारमार्थिकम्—K.S.S.

संवृतिसत्, तर्हि तेन रूपेण कारणतानुपपत्तिः। तथा[1] येन रूपेण आसां पारमार्थिकता तेन कारणता, तत् तर्हि ज्ञानमात्रं तच्च अभिन्नम् इति नीलाद्याभासरूपस्य कार्यभेदस्य असिद्धिः। एवं वासनानाम् अविचित्रत्वे तत्प्रबोधो विचित्र इति का प्रत्याशा। भवन्तु वा वासना भिन्नाः, तथापि बोधमात्रातिरिक्तस्य देशकालभावादेः प्रबोधकाभिमतस्य विचित्रस्य कारणस्य अभावात् प्रबोधोऽविचित्र इति एक एव प्रबोधः इति सममेव नीलादिवैचित्र्यं भासेत। अथ स्वसंतानवर्तीनि ज्ञानान्तराणि[2] विचित्राणि प्रबोधकारणानि इति, तदसत्, सुखदुःखनीलपीतादिपूर्वापरादिदेश-

प्रच्छादितः, तथा च अपसिद्धान्तापत्तिरिति भावः। प्रकारान्तरमाशङ्कापूर्वकत्वेन निराकरोति **"अथ"** इति। **संवृतिसत्**–अपारमार्थिकम्, कारणतायाः अनुपपत्तिः–अयोग्यता, समनन्तरमेवोक्तत्वादिति भावः। पुनः प्रकारान्तरं शङ्कते **"तथा"** इति। **आसाम्**–वासनानाम्। अनुमेयार्थवादी अत्र इष्टापत्तिमाह **"तत्तर्हि"** इति। **तत्**–पारमार्थिकं रूपम्, **ज्ञानमात्रम्**–विषयस्वरूपोत्तीर्णः शुद्धः प्रकाशः, तस्यैव सर्वसारत्वात्, **तच्च**–वासनापारमार्थिकरूपभूतं ज्ञानमात्रं च। ननु वासनानामेकत्वमेव भवतु, तत्प्रबोधस्य तु वैचित्र्यमेवेति तदेव बाह्यवैचित्र्यहेतुर्भवतीत्यत आह **"एवम्"** इति। अविषये प्रवृत्तत्वे प्रतिकूला आशा **प्रत्याशा**।

वासनानां वैचित्र्यमभ्युपगम्यापि तत्प्रबोधस्य अवैचित्र्यमेव द्वितीयश्लोकस्योत्तरार्धेन व्याख्यातुं कथयति **"भवन्तु वा"** इति। **"अभावात्"** इति, अन्यथाऽद्वैतभङ्गप्रसङ्गादिति भावः। **प्रबोधः**–वासनाप्रबोधः, **सममेव**–युगपदेव। अत्र विज्ञानवादी स्फुरितं स्वाभिप्रायमाविष्करोति **"अथ"** इति। स्वसन्ताने-नीलादिज्ञानक्षणसमूहरूपे स्वे-निजे सन्ताने वर्तन्ते इति **स्वसन्तानवर्तीनि, ज्ञानान्तराणि**–प्रकाशाख्यादभिन्नाज्ज्ञानादन्यानि ज्ञानानि। एतदपि प्रत्याचष्टे **"तदसत्"** इति।

1. अथ—K.S.S.
2. बोधान्तराणि—K.S.S.

कालभेदस्य विज्ञानमात्ररूपत्वे विज्ञानस्य च प्रकाशमात्रपरमार्थतायां स्वरूपभेदासंभवे तथा[1] बोधवैलक्षण्यानुपपत्तेः। परप्रमातृरूपेषु बोधान्तरेषु संतानान्तरशब्दवाच्येष्वपि तुल्योऽयम् अवैलक्षण्यप्रकारः। तत्रापि परकीयाभिमतस्य कृशस्थूलादेः कायस्य, श्वासप्रश्वासादेः प्राणस्य, सुखदुःखादेः धीगुणस्य, अनुमात्रभिमतसंविन्मात्ररूपाभेदे परत्वं कस्य भवेत्[2] इति न विद्मः। बोधस्य तन्निष्ठस्य इति चेत्, सोऽपि प्रमाणेन यदि न

असत्त्वमेव साधयति "सुख" इति। सुखदुःखनीलपीतादयश्च, आदिशब्देन समस्तबाह्यवस्तुग्रहणम्, पूर्वापरादिरूपौ यौ देशकालौ तौ च, तेषां भेदस्य। अत्र आदिशब्देन दक्षिणादिभेदग्रहणम्, कालविषये तु चिरक्षिप्रादिग्रहणम्। **विज्ञानमात्ररूपत्वे**–विज्ञानाद्वैतान्यथानुपपत्त्या विज्ञानमात्रस्वरूपत्वे सति, **विज्ञानस्य च प्रकाशमात्रपरमार्थतायाम्**–सारभूतपरप्रकाशमात्रस्वरूपतायां सत्याम्। एतच्च परप्रसिद्ध्यैवोक्तम्, न हि बौद्धमते कुत्रापि नित्यप्रकाशसिद्धिः। **तथा**, अर्थात् विज्ञानस्य स्वरूपभेदाऽसंभवे सति, **बोधवैलक्षण्यानुपपत्तेः**, तथा च बोधान्तराणीति कथनमयुक्तं तेन च वासनाप्रबोधवैचित्र्यमप्ययुक्तमेवेति भावः। ननु परप्रमातृरूपाणि विज्ञानान्येव बोधान्तराणि नैकप्रमातृगतानि तथा च न त्वदुक्तदोषप्रसङ्ग इत्याशङ्क्याह "पर" इति। **अवैलक्षण्यप्रकारः**–अभेदप्रकारः, तत्रापि बोधमात्रस्यैकत्वात् कायाद्युपाधिकृतभेदस्य अकिंचित्करत्वात् इति भावः। कथं तुल्य इत्यपेक्षायामाह "**तत्रापि**" इति। **परकीयाभिमतस्य**–अन्यसंबन्धित्वेनाभिमतस्य, बौद्धमते गुणसमूहस्यैव गुणित्वात् "**कृश**" इत्युक्तम्। "**श्वास**" इति च "**धीगुणस्य**" इति च तार्किकप्रसिद्ध्योक्तम्। अनुमात्रभिमतम्–अनुमानकर्तृत्वेन कल्पितम्, यत् संविन्मात्रं तस्य यद्रूपं तस्मादभेदे-विज्ञानमात्ररूपत्वेन भेदाभावे सति, **परत्वं कस्य भवेदिति न विद्मः**–जानीमः।

1. तथा is missing in the K.S.S. edition.
2. भवेत् is not found in the K.S.S. edition.

**सिद्धः तत् असन् एव, सिद्धोऽपि प्रमेयतया चेत् तत् जड एव, तथापि च कायादिवत् एव ज्ञानमात्रस्वभावः स्वसंविन्मात्ररूपत्वे परं प्रति अस्य असिद्धेः। ननु व्याहारादिक्रिया स्वात्मनि इच्छया व्याहरेयम् इत्येवंरूपया हेतुभावेन व्याप्ता दृष्टा तत् चैत्रकायेऽपि तया तद्धेतुकया भाव्यम्। न च मत्संततिपतिता समीहा अस्ति इति स्वसंवेदनेन निश्चितम्, ततश्च परसमीहा सिद्ध्यति, तदेव संतानान्तरम् इति।**

पुनः शङ्कते **"बोधस्य"** इति। **तन्निष्ठस्य,** परकायाद्यवच्छिन्नस्येत्यर्थः। अत्रोत्तरमाह **"सोऽपि"** इति। **सोऽपि**–तन्निष्ठो बोधोऽपि, **तथापि**–जडत्वेऽपि, **"ज्ञानमात्रस्वभावः"** इति, अन्यथा विज्ञानाऽद्वैतभङ्गप्रसङ्गादिति भावः। नासौ प्रमेयतया सिद्धः अपि तु प्रमातृभावेनेत्यत्राह **"स्वसंविद्"** इति। **अस्य**–स्वसंविन्मात्ररूपस्य तन्निष्ठबोधस्य, **असिद्धेः,** न ह्यन्यसंविदन्यगोचरा इति भावः। तदुक्तम् :—

"आत्मा यदि भवेन्मेयः"

इत्यादि। अनुमानसिद्धत्वं वक्तुं प्रश्नयति **"ननु"** इति। **व्याहारादिक्रिया**–वचनादिरूपा क्रिया, आदिशब्देन स्पन्दादिक्रियाग्रहणम्। **तत्**–तस्मात्कारणात्, **तया**–दृश्यमानया चैत्रकायादिव्याहारक्रियया, **तद्धेतुकया**–इच्छाहेतुकया, **भाव्यम्**–अवश्यं भवनीयम्, मम व्याहारादिक्रियावदिति शेषः। ननु सा इच्छापि प्रमातुरेव भवत्वित्यत आह **"न च"** इति। **"निश्चितम्"** इति, अत्र कोपि सन्देहो नास्तीति भावः। **ततश्च**–तस्माच्च, **परसमीहा**–परेच्छा, **सिद्ध्यति**–सिद्धिं याति, **तदेव**[1]–सिद्धा परसमीहैव, न तु विज्ञानम्, **सन्तानान्तरम्**–समनन्तरोक्तमन्यसंबन्धिसन्तानम्, समीहानाञ्च स्फुटमेव वैचित्र्यं तेनैव च

1. तदेव च—C. च is not found in the K.S.S. edition, nor is it found in Bhāskara's quotation of the Vimarśinī. Hence we have omitted it.

अत्रोच्यते—इह अनुमातुः व्याहाराभासो द्विधा भवति—व्याप्तिग्रहणकालेऽविच्छेदप्राणोऽहं व्याहरामि इत्येवंरूपः। अनुमानावसरे च 'व्याहरति अयम्' इति विच्छेदजीवित इति अन्यस्य व्याप्तिः गृहीता अन्यश्च आभासः कथम् इदानीं हेतुः स्यात् ? व्याहरति इति आभासस्य हेतुः अविदित एव इति कथं ततो हेतोः समीहा अनुमीयेत ? किं च 'व्याहरति अयम्' इति यः प्रमात्रन्तरेऽनुमातृसंमते विच्छिन्नतया अवभासः सोऽनुमेयसंमतायाः परसमीहायाः कथं कार्यः स्यात् ? तस्या हि व्याहरामीत्याभासः कार्यो योऽसौ अविच्छेदजीवितः। न च अविच्छेदमयस्य विच्छेदमयः कार्यम् इति युक्तं तथाभूतकार्यकारणभावग्रहणो-

---

वासनाप्रबोधो विदित इति भावः। अत्रापि दोषं प्रसञ्जयितुमाह "अत्रोच्यते" इति। प्रतिज्ञां सफलयति "इह" इति। **इह**-अस्मिन् लोके, **व्याहाराभासः**-व्याहाररूप आभासः। सर्वस्य भावजातस्य आभासमात्ररूपत्वात्। द्विधाभावमेव विभज्य कथयति "**व्याप्ति**" इति। **अविच्छेदप्राणः**-अहंविश्रान्तत्वेन स्वतो भेदरहितः। कोसावित्यत आह "**अहम्**" इति। **विच्छेदजीवितः**-भेदप्राणः, परनिष्ठतया स्फूर्तेरिति भावः। **अन्यस्य**-अविच्छेदप्राणस्य, **व्याप्तिः**-निजसमीहया सह व्याप्यव्यापकभावः संबन्धः, **अन्यः**-विच्छेदजीवितः, **इदानीम्**-अनुमानकाले, **कथं स्यात्**, न स्यादित्यर्थः। दोषान्तरमाह "**व्याहरति**" इति। **अविदित एव**, न हि परसमीहा कस्यापि प्रत्यक्षेति भावः। **ततो हेतोः**-अविदिताद्धेतोः। पुनरपि दोषान्तरमाह "**किञ्च**" इति। **प्रमात्रन्तरे**-व्याहर्तृरूपात्प्रमातुरन्यस्मिन्। कुतो न स्यादित्यत आह "**तस्या हि**" इति। ननु विच्छेदमयस्याभासस्य परसमीहा कार्यं मा भवतु, तस्याः कारणभूतः विच्छेदमयः आभास एव कार्यं स्यादित्यत आह "**तथाभूत**" इति। तथाभूतस्य-तथारूपस्य। कुतोभाव इत्यत आह "**न हि**" इति। कुतो न सिद्धमित्यत आह "**पर**" इति। परसिद्धिपूर्वकत्वेनापि किम् इत्यत आह "**पर**" इति। परप्रमातृसिद्धौ

पायाभावात्,[1] न हि स्वात्मनि योऽयम् अविच्छिन्नाभासः स परत्र विच्छिन्नं 'व्याहरति अयम्' इत्येवंरूपम् आभासं जनयति इति केनचित् प्रमाणेन सिद्धम्, परसिद्धिपूर्वकत्वात् अस्य अर्थस्य, परप्रमातृसिद्धेश्च एवंभूतार्थाधीनत्वेन[2] इतरेतराश्रयात् । न च अवश्यम् अविच्छिन्नात् विच्छिन्नेन भाव्यम् इति नियमोऽस्ति व्यभिचारात् । न च विच्छिन्नोऽपि आभास उत्पद्यताम् इति तदनुसंधानात् तदुत्पत्तिः नियता तत्सद्भावेऽप्य-[3]

हि "परत्र" इति कथनं युक्तं स्यात्, न च तत्सिद्धिरस्ति, एकस्य बोधमात्रस्यैव स्थितत्वादिति भावः। तदुक्तम् :–

"परव्यवस्थापि परे यावन्नात्मीकृतः परः ।
तावन्न शक्यते वक्तुं यतो बुद्धः परः परः ॥
बुद्धश्च बोधभेदेन भवेन्न व्यवहारभाक् ।
व्यतिरिक्तस्य बुद्धत्वे सर्वं बुद्धं न किं भवेत् ॥ "

इति। इतरेतराश्रयाख्यं दोषमप्यत्र प्रसंजयति **"एवंभूत"** इति। एवंभूतः–असिद्धः योऽर्थः–पराख्यं वस्तु, तत्राधीनत्वेन–आयत्तत्वेन, **इतरेतराश्रयात्**; परसिद्धौ अनुमानसिद्धिः अनुमानसिद्धौ च सन्तानान्तरसिद्ध्या परसिद्धिरिति इतरेतराश्रयाख्यो दोषः। नन्वनयोः कार्यकारणभावो मास्तु नियमस्तु स्यादेवेत्यत आह **"न च"** इति। **"व्यभिचारात्"** इति, कदाचिद्धि केवलोऽविच्छिन्न एवाभासो दृश्यते इति भावः। ननु अनुमात्रनुसंधानमात्रादेव विच्छिन्न आभासो जायते इत्यत आह **"न च"** इति। **तदनुसंधानात्**-अविच्छिन्नाभासाश्रयानुमातृसंबन्धिनः परामर्शात्। **तदुत्पत्तिः**-विच्छिन्नाभासोत्पत्तिः। कुतो न नियता इत्यत आह **"तत्सद्भावे"** इति। **तत्सद्भावेपि**–अविच्छिन्नाभासाश्रयानुमातृसद्भावेऽपि, **अस्य**–विच्छिन्नाभासस्य,

1. ग्रहणोपायाभावनात्—K.S.S.
2. एवंभूतार्थसिद्ध्यधीनत्वेन—K.S.S.
3. तत्सद्भावेऽपि अनुत्पत्तेः—K.S.S.

स्यानुत्पत्तेः तदभावे च उत्पत्तेः, विच्छिन्न आभासः परत्र उत्पद्यताम् इति या समीहा तया सह परत्र उत्पन्नस्य विच्छिन्नाभासस्य कार्यकारणभाव-ग्रहणमेव परासिद्धौ न युक्तम् इति व्याप्तेरेव असिद्धिः।

प्रमात्रन्तराणि च यदि भिन्नानि तदा तन्निष्ठानाम् अवभासानां भेद एव 'ज्ञानादव्यतिरिक्तं च' इति न्यायात्। ततश्च एकाभासनिष्ठत्वाभावात् एकाभासविश्रान्तः संभूय प्रमातॄणां व्यवहारो न स्यात् इति अन्यो-न्यानुपरक्तं भूतग्रस्तप्रकृतिप्रायं जगत् आपद्येत। अनुमीयमानमपि च बोधान्तरम् अनुमातृसंमतात् बोधात् यदि भिन्नम्, तत् अस्ति तावत्

---

**अनुत्पत्तेः**–उत्पादाभावात्, न हि परव्याहारस्य तत्रावश्यंभाव इति भावः। **तदभावे च**-अनुमात्रभावे च, न हि अनुमातृसन्निधावेव परो व्याहरतीति भावः। ननु अनुमानेन एतज् ज्ञायते इत्यत आह "**विच्छिन्न**" इति। **या समीहा**–अनुमातुरिच्छा, "**व्याप्तेरेवाऽसिद्धिः**" इति, का कथा ऽनुमानस्येति भावः।

प्रमात्रन्तराणामभ्युपगमं कृत्वापि विकल्पद्वयं कृत्वा अभेदपक्षे इष्टापत्तिं ज्ञात्वा भेदपक्षं प्रति दोषापादनं करोति "**प्रमात्रन्तराणि च**" इति। "**भिन्नानि**" इति, परस्परत इति भावः। **तन्निष्ठानाम्**–प्रमात्रन्तरगतानाम्, **अवभासानाम्**–अर्थाभासानाम्। कुतो भेद एवेत्यत आह "**ज्ञानात्**" इति। वस्तु **ज्ञानादव्यतिरिक्तं** भवति, ज्ञानेन सह एकरूपमेव भवति, ततश्च ज्ञानरूपाणां प्रमातॄणां परस्परतो भेदे प्रतिप्रमातृ अर्थभेदोपि युक्त एवेति भावः। नन ततोपि किम् इत्यत आह "**ततश्च**" इति। तदेव वस्तु एकं प्रति तद्रूपम् अन्यं प्रति अतद्रूपं न किंचिद्वा स्यात् ततश्च तद्विषयो व्यवहारोपि प्रतिप्रमातृ भिन्न एव स्यादिति संक्षेपः। ननु संभूय व्यवहारो माऽस्तु ततः किमित्यत आह "**अन्योन्य**" इति। **अन्योन्यानुपरक्तम्**-अन्योन्यम् अननुषक्तम्, **आपद्येत**–संपद्येत, ततश्च उन्मत्तभरितमेव जगत् स्यादिति भावः। दोषान्तरमप्यापादयति "**अनुमोयमानम्**" ति। **बोधान्तरम्**-परसंबन्धी बोधः। कः संभव इत्यत आह "**यत्**" इति। **यत् इति** भवति,

संभवः—यत् प्रमेयं बोधात् भिन्नं[1] भवति इति। सहोपलम्भनियमादेः अनैकान्तिकत्वात् नीलपीतादिनापि प्रमेयराशिना किम् अपकृतम्, येन अस्य स्वरूपविश्रान्तिः न सह्यते, तस्मात् प्रमात्रन्तराणामपि असिद्धिरेव, सिद्धौ वा सर्वप्रमात्रन्तर्गता आभासा एकैकत्र परत्र आभासवैचित्र्यहेतुं वासनोद्बोधवैचित्र्यं जनयेयुः नियमे हेत्वन्तराभावात् इति तथापि न नीलादिवैचित्र्यसिद्धिः। एवं वासनानां तदुद्बोधहेतूनां च विचित्राणाम् अनुपपत्तिरेव। ततश्च स्थितमेतत्, अभिन्नो बोधः तस्य आकस्मिकाभासभेदहेतुत्वानुपपत्तेः बाह्योऽर्थोऽनुमेयः संभाव्यते इति यदि बाह्यार्थवादिना

---

इति किमिति? **प्रमेयं बोधाद् भिन्नं भवति**, प्रमेयीभूतबोधान्तरवदिति शेषः। ननु प्रमेयस्य बोधेन सहोपलंभ एव दृश्यते इति कथं तस्य ततो भेदो युक्त इत्यत आह **"सहोपलंभ"** इति। **अनैकान्तिकत्वात्**-व्यभिचारात्, सुषुप्त्यादौ हि प्रमेयं विना केवलो बोध एवानुभूयते, यच्च तत्र अज्ञानस्य प्रमेयत्वं तदपि न किंचिदेवेति भावः। ननु अयं संभवोऽस्तु का हानिरित्यत आह **"नील"** इति। प्रमेयीभूतबोधवन्नीलादिरूपस्य प्रमेयस्यापि प्रमातुर्भिन्नत्वमायाति तच्च नेष्टमिति भावः। फलितमाह **"तस्मात्"** इति। सिद्धिमभ्युपगम्यापि दोषमाह **"सिद्धौ"** इति। **एकैकत्र परत्र**-प्रत्येकं परेषु, **जनयेयुः**-उत्पादयेयुः, ततश्च वासनानाम् अबोधः कदापि न संभवेदिति भावः। कुतो जनयेयुरित्यत आह **"नियमे"** इति। ननु को दोष इत्यत आह **"तथापि"** इति। वैचित्र्यं हि क्रमेण भासनम्, सर्वदा सर्ववासनाप्रबोधे तन्न संभवेदिति भावः। उपसंहारं करोति **"एवम्"** इति। फलितमाह **"ततश्च"** इति। **"इति"** शब्दः श्लोकद्वयव्याख्यासमाप्तौ। श्लोकद्वययोजनां कर्तुम् "इति" शब्दस्य कर्तुः क्रियायाश्चाध्याहारं करोति **"यदि"** इति। **"यदि"** इति पदेन **"चेत्"** शब्दव्याख्या। **"चेत्"** शब्दसूचनीयं वस्तु आह **"श्लोक"** इति। एतेन चेच्छब्दः भिन्नक्रमत्वेन योजनीय इति सूचितम्।

---

1. भिन्नं अस्ति इति—K.S.S.

उच्यते इति श्लोकद्वयार्थः। चेच्छब्दः श्लोकद्वयवाक्यार्थशङ्काद्योतकः।
[1] एवम् आशङ्क्यमानत्वेन परसंभावना दृढा दर्शिता ॥ ५॥

अधुना तु एनां संभावनां शिथिलयितुं तावदाह :—

**स्यादेतदवभासेषु तेष्वेवावसिते सति।**
**व्यवहारे किमन्येन बाह्येनानुपपत्तिना ॥ ६॥**

'स्यादेतत्' इति पूर्वोक्तसंभावनाभ्युपगमे यदा व्याख्यायते तदा किं–

---

तथा चैवमत्र योजना। बाह्यार्थवादिना कर्त्रा "इति" कर्म चेदुच्यते, इति किमिति? "तत्तत्" इत्यादि।

श्लोकद्वयाभिप्रायं संक्षेपेण उपसंहरति **"एवम्"** इति। **परसंभावना**–विज्ञानवादिबौद्धं प्रति बाह्यार्थानुमेयत्ववादिबौद्धसंभावना, **आशङ्क्यमानत्वेन**–दर्शिताशङ्काविषयत्वेन, **दर्शिता,** इत्थंभावे तृतीया ॥ ५॥

अथ षष्ठश्लोकस्यावतरणिकां करोति **"अधुना"** इति।

अत्र टीका :–

**एनाम्**–बाह्यार्थवादिकथिताम्, श्लोकद्वये तद्वाचा संभावितामिति यावत्, **शिथिलयितुम्**–तर्केण शिथिलीकर्तुम्, न तु सम्यग् दूरीकर्तुम्, तत्र प्रमाणस्यैव व्यापारात्। **"तावत्"** इत्यनेन प्रमाणेनाप्येतां दूरीकरिष्याम एवेति द्योतितम्। एवमवतरणिकां कृत्वा श्लोकमपन्यस्य व्याचष्टे। **"स्यादेतत्"** इति।

अत्र टीका :–

**"स्यादेतत्"** इत्यस्य द्विधा व्याख्यां करोति। पूर्वोक्ता-समनन्तरश्लोकद्वयोक्ता, या संभावना–बाह्यार्थसंभावना, तस्या अभ्युपगमे–अङ्गीकारे, **यदा व्याख्यायते**–व्याख्याविषयतां नीयते, **किन्त्विति वाक्यशेषेण** "किन्तु"

---

1. The introduction to verse 6 begins with अधुना, according to Bhāskara, whereas in the K.S.S. edition it begins with एवम्.

तु इति वाक्यशेषेण तच्छैथिल्यविषयं संभावनान्तरं शेषश्लोकेन दर्श्यते इति व्याख्येयम्। यदि तु अध्याहारो न सह्यते तदा स्यादेतदिति इदमपि संभावनान्तरं स्यात्, यदनेन श्लोकेन उच्यते इति एकवाक्यतया योज्यम्। अनयापि कष्टकल्पनया बाह्यान् अर्थान् प्रसाधयता भवता तैः न किंचित् कर्तव्यम्, आभासैरेव तैः भवता अभ्युपगतैः व्यवहारसिद्धेः, न हि नित्यानुमेयेन कश्चित् व्यवहार इति किं बाह्येन, यत्र साधकं च नास्ति प्रमाणम्, बाधकं च प्रकाशात् भेदे अनुमेयतयापि प्रकाशनाभाव इति

---

इति वाक्यशेषं कृत्वेत्यर्थः। **तच्छैथिल्यविषयम्**–पूर्वोक्तसंभावनाशिथिलता-विषयम्, तद्द्योतकमिति यावत्। **संभावनान्तरम्**–बाह्यानुपपत्तिरूपा अन्या संभावना, **शेषश्लोकेन**–"अवभासेषु" इत्यादिना श्लोकशेषेण, **दर्श्यते**–ज्ञान-प्रत्येयतां नीयते, **इति व्याख्येयम्,** अर्थात् शेषतया नीतस्य "किन्तु" इत्यस्य व्याख्या कार्या इत्यर्थः। अस्यैव द्वितीयां व्याख्यां कर्तुमाह **"यदि तु"** इति। **"स्यादेतत्"** इति पदम् **एकवाक्यतया योज्यम्** इति संबन्धः। कथम्? **इति**, इति किमिति? **इदमपि संभावनान्तरं स्यात्**, इदम् किम्? **अनेन श्लोकेन**–"अवभासेषु" इत्यादिना श्लोकशेषेण, **यदुच्यते,** एतच्छब्दा-काङ्क्षा श्लोकेन पूरणीयेत्यर्थः। शेषश्लोकं व्याचष्टे **"अनया"** इति। **अनया**–अनुमानरूपया, **तैः**–बाह्यैः। कुतो न कर्तव्यमित्यत आह **"आभासैः"** इति। **तैः**–अर्थप्रतिबिंबतया कल्पितैः। ननु ते मद्दर्शने न सन्तीत्यत आह **"भवता"** इति। **"व्यवहारसिद्धेः"** इति, "यादृशो यक्षस्तादृशो बलिः" इति नीत्याश्रयणेन आभासरूपस्य व्यवहारस्य आभासरूपैरेवार्थैः सिद्धिर्युक्तेति भावः। ननु तथापि तैरपि कथं व्यवहार इत्यपेक्षायां द्वितीयं हेतुमाह **"न हि"** इति। फलितमाह **"इति"** इति। **इति**- अतः कारणात्, **बाह्येन किं** भवति, व्यर्थत्वान्न किंचिदित्यर्थः। बाह्येन केन? **यत्र**–यस्मिन् बाह्ये, **साधकं च प्रमाणं नास्ति, बाधकं च तावत् इति**–एवम्, **मुख्यं** भवति-प्रधानं भवति, साक्षाद्बाधकत्वात्। इति किमिति? **प्रकाशाद्**

**तावत् मुख्यम् । अभ्युच्चयबाधकास्तु अवयविनो वृत्त्यनुपपत्तिः, समवाया-सिद्धिः, कम्पाकम्पावरणानावरणरक्तारक्तदिग्भागभेदादिविरुद्धधर्मयोगः ।**

---

भेदे सति **अनुमेयतयाऽपि प्रकाशनाभावः** । तावच्छब्दप्रयोगयोग्यतां[1] स्फुटी-कर्तुं गौणान् बाधकानप्याह **"अभ्युच्चय"** इति । अभ्युच्चयेन–अन्वाचयेन, प्रसङ्गेनेति यावत्, बाधकाः । अत एव गौणत्वमेषाम्, पूर्वं साक्षात् बाह्यबाधकम्, एते प्रसङ्गेनैव[2] बाधकाः इति । "तु" शब्दो यथाशब्दार्थे, तान्दर्शयिष्यामीत्यर्थः । बाधकानेव दर्शयति **"अवयविनः"** इति । **अवयविनः**–पटादिरूपस्य, अर्था-दवयवेषु तन्त्वादिषु, **अनुपपत्तिः**–स्थित्ययोगः, अवयविनो बाधिका । तथा हि, अवयवी सर्वेष्ववयवेषु तिष्ठति एकत्र वा, यदि सर्वेषु, तत्रापि किं सामस्त्येन व्यस्तत्वेन वा, सामस्त्येन स्थितौ अवयवेष्वेव अवयविव्यवहारसिद्धौ अवयविकल्पना व्यर्था, व्यस्तत्वेन तु एकत्र अवयविसमाप्तेः अन्येषु कः तिष्ठेत् । यद्येकत्र इति पक्षः तदा अन्येषामनवयवत्वप्रसङ्गः, अवयव्याश्रित एव ह्यवयवो भवति । **"समवायासिद्धिः"** इति, अवयवेषु समवायन अवयवी तिष्ठतीति तु सुप्रसिद्धम् । समवायस्तत्र केन तिष्ठति संयोगस्यासंभवात्, समवायेनेति चेत् सोऽपि केनेत्यनवस्थाऽऽपातः । अथवा सन्निवेशेन तेष्वेव तन्तुषु समवायकल्पनया समवायस्य परमार्थतो ऽसिद्धिरेव । **'कंपाकंप'** इति, पदा-र्थेहि एकत्र पार्श्वे चाल्यमाने कंपः अन्यत्र अकंपः, तच्च तस्यैकत्वे न युज्यते । एवमावरणानावरणादौ ज्ञेयम् । दिग्भागेन कृतः भेदः–पूर्वापरादिरूपः, दिग्भागभेदः

---

1. तावच्छब्दप्रयोगयोग्यत ........कर्तुम्—C. We have filled up the gap as printed above.

2. एते प्रसङ्गेनैवावयविनो बाधकाः—C. The bādhakāḥ are the additional objections against the admission of the external object (बाह्यार्थ) and not against the 'avayavī'. The word अवयविनः, therefore, seems to have crept in by scribal mistake, probably due to the occurrence of the word in the same sentence.

**अणुसंचयबाह्यवादेऽपि संचयस्य अन्यस्य अभावे परमाणव[1] एव, ते च यदि संयुज्यन्ते निरन्तरतया तत् अवश्यं दिग्भागभेदः, देवनाक्षे षट्सु दिक्षु संचीयमानेषु षट्सु अणुषु मध्यमस्य परमाणोः यत्रैव धाम्नि एको लग्नः तत्रैव यदि अपरः तत् एकपरमाणुमात्रता। अथ अन्यत्र एकः अन्यत्र अपरः तत् अवश्यं भागभेदापत्तिः, इति भाग एव सन्[2], तस्यापि एषैव सरणिः इति न किंचित् अवशिष्यते बाह्यं तत्त्वतः।**

**न चैतत् वाच्यम्—मूर्तानाम् एकदेशत्वायोगात्, संयोगे भिन्नदेशत्वा—**

---

ननु अवयवी मास्तु परमाणव एव संचीयमाना बाह्यीभवन्तीत्यत आह "**अणु**" इति। **अन्यस्य**—परमाणुव्यतिरिक्तस्य, **परमाणव एव** बाह्यं भवन्तीति योजना। ननु ततः किमित्यत आह "**ते च**" इति। **ते च**—परमाणवश्च, **निरन्तरतया**, संहततयेत्यर्थः, **तत्**—तदा, **दिग्भागभेदः**— षट्सु दिक्षु भागषट्कभेदापत्तिः, सा च भवतां नेष्टेति भावः। **देवनाक्षे**—क्रीडनरूपे अक्षे। ननु परमाणवो दिग्भागभेदेन[3] न तिष्ठन्ति, किन्तु एकस्य मध्यगस्य स्थाने लगन्ति इत्यत आह "**षट्सु**" इति। चतुष्टयमध्ये अन्तर्भवद्विदिशामग्रहणम्, **तत्**—तदा, **एकपरमाणुमात्रता**, अन्येषां तत्रैव लग्नत्वात्, तथा च सर्वपदार्थानाम् अदृश्यत्वमेवापतेत् इति भावः। प्रकारान्तरं प्रत्याह "**अथ**" इति। ननु भागभेदापत्तिरस्तु का हानिरित्यत आह "**इति**" इति। **इति**—अतः, **भाग एव सन्** स्यात्, **तस्यापि**—भागस्यापि, **एषैव सरणिः**—अयमेव मार्गः, षट्सु दिक्षु विभाग इत्यर्थः।

तार्किककृतमारंभवादं प्रत्याख्यातुमाह "**न च**" इति। **मूर्तानाम्**—परिच्छिन्नपरिमाणत्वेन क्रियावत्वेन वा मूर्ततया अङ्गीकृतानाम् परमाणूनाम्, **एकदेशत्वायोगात्**—एकदेशे ऽवस्थानासंभवात्, **संयोगे** सति **भिन्नदेशत्वाऽव्यावृत्तेः**—

---

1. अणव एव—K.S.S.
2. भाग एव परमार्थसन्—K.S.S.
3. दिग्भागेन—C.

व्यावृत्तेः तन्निष्ठं द्व्यणुकं नाम कार्यद्रव्यम् अणुपरिमाणम्, तेभ्यः त्रिभ्यो महत्कार्यम् इति । अवयविवादो हि अयम्, स च पूर्वमेव अपबाधितः । यच्च अव्याप्यवृत्तित्वं संयोगस्य उच्यते तन्निरंशे कथं संगच्छताम् । स्वाश्रये हि यदि असौ समवैति किम् अन्यत् अस्य अवशिष्यते[1] यत् न व्याप्नुयात् इति । अभ्युच्चयबाधकं च इदम् इति न अत्र अस्माभिः भरः कृतः । विस्तरेण च प्रज्ञालङ्कारे दर्शितम् आचार्यशङ्करनन्दनेन ॥ ६ ॥

ननु बाधकं नाम प्रमाणसिद्धे वस्तुनि न किंचित् कर्तुं समर्थम्, तेनैव दृढेन प्रमाणेन बाधकाभिमतस्य बाधितस्य अप्रमाणत्वसंपादनात् ।

---

भिन्नदेशत्वावश्यंभावात्, **तन्निष्ठम्**–अर्थात्परमाणुद्वयनिष्ठम्, **अणुपरिमाणम्**–अण्वाख्यपरिमाणयुक्तम्, **द्व्यणुकं नाम कार्यद्रव्यं** प्रथमं भवति, ततः **तेभ्यः त्रिभ्यः**–द्व्यणुकेभ्यः, **महत्कार्यम्**–दृश्यं त्र्यणुकाख्यं कार्यं भवति, न तु परमाणूनामेव षट्कं मिलति येनोक्तदोषप्रसङ्गः स्यादिति भावः । "**इति**" शब्दः प्रमेयपरिसमाप्तौ । कुतो न वाच्यमित्यत आह "**अवयवी**" इति । **पूर्वमेव**, समनन्तरमेवेत्यर्थः । परमाणुविषये द्व्यणुकादिभावसंपादकस्य संयोगस्यानुपपत्तिं वक्तुं तद्गतमव्याप्यवृत्तित्वमेव प्रतिक्षिपति "**यच्च**" इति । **अव्याप्यवृत्तित्वम्**–स्वात्यन्ताभावसमानाधिकरणत्वम्, **निरंशे**–अवयवरहितपरमाणौ । कथं न संगच्छते इत्यत आह "**स्वाश्रये**" इति । **स्वाश्रये**–परमाणुद्वयरूपे निजाश्रये, **असौ**–संयोगः, समवायवृत्त्या तिष्ठति, **किमवशिष्यते**, तेनैवाक्रान्तत्वान्न किंचिदप्यवशिष्यते इत्यर्थः, तथा च संयोगस्याप्यत्र स्थितिर्न युक्तेति भावः । नन्वत्र विस्तारयोग्ये कथं न विस्तारः कृतः इत्यत आह "**अभ्युच्चय**" इति । **भरः**–अतिशयः, **प्रज्ञालङ्कारे**–प्रज्ञालङ्काराख्यशास्त्रे ॥ ६ ॥

अथ सप्तमश्लोकस्यावतरणिकां करोति "**ननु**" इति ।

---

1. अवशिष्टम्—K.S.S.

दर्शितं च इह साधकं प्रमाणं कार्यहेतुः 'तत्तदाकस्मिकाभास' इति कारिकया इत्याशङ्क्य आह :—

**चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद्बहिः।**
**योगीव निरुपादानमर्थजातं प्रकाशयेत्॥ ७॥**

इह तावत् स्वप्न-स्मरण-मनोराज्य-संकल्पादिषु नीलाद्याभासवैचित्र्यं बाह्यसमर्पकहेतुव्यतिरेकेणैव निर्भासते इति यद्यपि अस्ति संभवः, तथापि तदाभासवैचित्र्यम् अस्थैर्यात् सर्वप्रमात्रसाधारण्यात् पूर्वानुभवसंस्कारजत्वसंभावनात् अवस्तु इति शङ्क्येत। यत् पुनरिदं योगिनाम् इच्छामात्रेण

---

अत्र टीका :—

**तेनैव**—सिद्धिहेतुनैव। ननु बाधकं बाधितं भवतु, साधकं प्रमाणं च नास्तीत्यत्र किं कुर्मः इत्यत्राह "**दर्शितश्च**" इति। **कार्यहेतुः**—प्रतिबिंबरूपः कार्यरूपः हेतुः। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**चिदात्मैव**" इति।

अत्र टीका :—

ननु स्वप्नादिषु स्फुटमेव उपादानादिबाह्यसामग्रीं विनैवार्थजातसिद्धिः प्रसिद्धैव इति किमप्रसिद्धयोगिदृष्टान्तेनेत्याशङ्क्याह "**इह**" इति। बाह्यसमर्पकाः—बाह्यनीलादिसंपादकाः ये हेतवः—कारणानि तेषां व्यतिरेकेण, अभावेनेत्यर्थः। **तदाभासवैचित्र्यम्**—स्वप्नादौ स्थितं नीलाद्याभासवैचित्र्यम्, सर्वप्रमातृषु यत् असाधारण्यं तस्मात्, न हि एकस्य स्वप्नादिनिष्ठमर्थजातमन्यस्य गोचरम् इति भावः। "**शङ्क्येत**" इत्यनेन अस्थैर्यसर्वप्रमात्रसाधारण्यसंस्कारजत्वयुक्तमपि अर्थजातं स्थैर्यसर्वप्रमातृसाधारण्यासंस्कारजत्वयुक्तजाग्रदर्थजातसमानयोगक्षेममेव स्थैर्यत्वादेरपि आभासमात्ररूपत्वात्, न च आभासस्य परमार्थसत्त्वम्, परन्तु सिद्धमपि तत्स्वप्नादिकं शिष्यं तावदप्रबुद्धं ज्ञात्वा दृष्टान्तत्वेन न गृहीतं किन्तु तत्साम्मुख्यसंपादनाय अतिशयरूपा योगिदृष्टान्ततैव कृता, अतिशयं बुद्ध्वा संमुखीभूतः शिष्यस्तु प्रबुद्धीभूतः सर्वं स्वयमेव विचारयतीति सूचितम्।

पुरसेनादिवैचित्र्यनिर्माणं दृष्टम्, तत्र उपादानं प्रसिद्धमृत्काष्ठ-शुक्र-शोणितादिवैचित्र्यमयं न संभवत्येव, न हि एवं वक्तुं शक्यम्—सर्वगताः परमाणवो योगीच्छया झटिति संघटिताः कार्यम् आरप्स्यन्ते इति। यत एतत् लोकप्रसिद्धकारणभावानतिक्रमसिद्धये निरूप्यते। न च एतत् प्रसिद्धम्—परमाणुभ्य एव स्थूलं घटादि जायते इति, किं तु कपालादिव्यवधानेन, तथापि[1] नियतसहकारिसमवलम्बनम् करचरणादिव्यापारे विशिष्टदेशकालधर्माधिपत्ययोगः शिक्षाभ्यासप्रकर्ष इति, इयति च आश्रीयमाणे योगी कुम्भं निर्मिमाणः कुम्भकारप्रसिद्धसमस्तसामग्रीसमर्जनपुरःसरं घटं घटयन् कुम्भकार एव स्यात्, तस्मात् प्रसिद्धकारणोल्लङ्घने किम् असंचेत्यमानपरमाण्वाद्युपादानकारणान्तरचिन्तया इति। तत्र योगिसंविद एव सा तादृशी शक्तिः—यत् आभासवैचित्र्यरूपम् अर्थजातं प्रकाशयति

---

एवमाशङ्कितं चोद्यमपसार्य पक्षान्तरकथनरीत्या श्लोकं व्याख्यातुमारभते "**यःपुनः**" इति। **योगिनाम्**–अष्टाङ्गयोगयुक्तानाम्, **तत्र**–तस्मिन्निर्माणे, **वैचित्र्यमयम्**–वैचित्र्यहेतुत्वेन वैचित्र्यरूपम्। अत्र शिष्यशङ्कां स्वयमेवोत्थापयति "**नह्येवम्**" इति। **संघटिताः**–आदिसर्गन्यायेन स्वयमेव मिलिताः। कुतो न शङ्क्यमित्यत आह "**यतः**" इति। **एतत्**–इदं वस्तु, लोके प्रसिद्धः लोकप्रसिद्धः, "**कपालादिव्यवधानेन**" इति, प्रथमं कपालादयः संपद्यन्ते ततः तत्संधानाद् घट इति भावः। **तथापि**–कपालादिव्यवधाने सत्यपि, धर्माधिपत्यम्, उपलक्षणं चैतदधर्मस्यापि तार्किकमते हि धर्माधर्मयोरपि सहकारित्वमेवेति, **इयति**–एतावति सामग्रीरूपे अर्थजाते। **तत्र**–तस्मिन्विषये, सा का इत्यपेक्षायाम् आह "**यत्**" इति। ननु योगिनिर्मितमर्थजातं न दृष्टं तं प्रति किं दृष्टान्तीकुर्मः? सत्यम्, इन्द्रजालनिर्मितं वस्तु इति ब्रूमः, तदपि हि कदाचिदर्थक्रियाकारि भवति, तर्हि योगी अपि ऐन्द्र-

---

1. तत्रापि—K.S.S.

इति। तदस्ति संभवः—यत् संवित् एव अभ्युपगतस्वातन्त्र्या अप्रतीघातलक्षणात् इच्छाविशेषवशात् संविदोऽनधिकात्मताया अनपायात् अन्तःस्थितमेव सत् भावजातम् इदमित्येवं प्राणबुद्धिदेहादेः वितीर्णकियन्मात्रसंविद्रूपात् बाह्यत्वेन आभासयति इति, तत् इह विश्वरूपाभासवैचित्र्ये चिदात्मन एव स्वातन्त्र्यं किं न अभ्युपगम्यते स्वसंवेदनसिद्धम्, किमिति हेत्वन्तरपर्येषणाप्रयासेन खिद्यते । एवकारेण इदमाह—सर्वेण तावत् वादिना

---

जालिक एव, किं ब्रूषे[1], ईश्वरनिर्मितस्यापि जगतः यत्र इन्द्रजालनिर्मितत्वं कथयन्ति। तदुक्तम् :—

"इन्द्रजालनिभं विश्वम्"

इति। तत्र का कथा योगिनिर्मितस्य भावस्य, अत एव योगिनामपि तत्रोपेक्षैव दृश्यते, येषान्तु नास्ति तेऽप्यैन्द्रजालिकप्राया एव, सर्वत्रोपेक्षामात्रस्यैव महायोगत्वादित्यलम्। दृष्टान्तमुक्त्वा दार्ष्टान्तिकं लितरीत्या कथयति **"तदस्ति"** इति । तच्छब्दाकाङ्क्षां पूरयति **"यत्"** इति । **अप्रतीघातलक्षणात्**[2]—अप्रतिहतस्वरूपात्, **इच्छाविशेषवशात्**—'तदुत्पद्यताम्' इति इच्छाविशेषसामर्थ्यात्, **संविदः**—स्वरूपभूतात् संवित्तत्त्वात्, **अनधिकात्मतायाः**—एकतायाः, **अनपायात्**—अनाशात्, संविदेकरूपत्वेनेति यावत्, **अन्तःस्थितमेव**—स्वान्तर्गतमेव सत्, मृदन्तःस्थितत्वेन व्यवह्रियमाणो हि घटो मृद्रूप एवेति भावः । **प्राणबुद्धिदेहादेः**—ग्राहकत्वेनाभिमतात् प्राणादेः, कीदृशात् ? अर्थात् परसंविदैव वितीर्णं कियन्मात्रम्—स्वविषयग्रहणमात्रसमर्थं लेशरूपम्, संविद्रूपं यस्य तादृशात्, **बाह्यत्वेन**—पृथक्त्वेन, न तु परसंविदा पृथक्त्वेन, अन्यथा "प्रागिवार्थः" इति उक्तन्यायेन अप्रकाशापातात्। फलितमाह **"तत्"** इति। हेत्वन्तराणाम्—परमाण्वादिरूपाणामन्येषां हेतूनाम्, पर्येषणाभिः—गवेषणाभिः यः प्रयासः तेन । सूत्रस्थस्य एवकारस्याभिधेयं वक्ति **"एवकारेण"** इति । किमित्यपेक्षायामाह

---

1. किं ब्रूषि—C.
2. अप्रतीघातत्वलक्षणात्—C.

**विषयव्यवस्थापनं संविद्रूपम् अनपह्नवनीयम् आदिसिद्धं हि तत् इति उक्तम् । तस्य च स्वातन्त्र्यमेव देवशब्दनिर्दिष्टं चिद्रूपत्वम् इति किम् अपरकारणान्वेषणव्यसनितया । हि यस्मात् एवं प्रकाशयति देव इति संभाव्यते, तस्मात् किं बाह्येन अनुपपत्तिना इति पूर्वेण संबन्धः ॥ ७ ॥**

---

"**सर्वेण**" इति । कुतो न अपन्हवनीयमित्यत आह "**आदि**" इति । "**उक्तम्**" इति, "कर्तरि" इति कारिकायामिति भावः । "**देव**" शब्दस्याभिधेयं वक्तुमाह "**तस्य च**"इति । **तस्य च**–संविद्रूपस्य च, देवो हि क्रीडाशील उच्यते क्रीडा एव च स्वातन्त्र्यम् । अत एव यदि कश्चिद् ब्रूयात् किमर्थं भावनिर्माणे ईश्वरः प्रवृत्तः इति तस्यानेनैव मुखमुद्रा जायते । न हि क्रीडाशीलस्य पर्यनुयोगः युक्तः । अतिपरमार्थ–विचारे त्वेतदपि वक्तुं युक्ततां नावगाहते । न हि स्वनिर्मितवस्तुसादृश्यमाश्रित्य निर्मातरि दोषनिराकृतिर्युक्ता, परन्तु अनिर्वाच्यतैव केवलमत्र युक्ता, ततोपि विचारे सापि न युक्ता अनिर्वाच्यताया अपि तत्रैवावस्थानात्, तत्सर्वथा विस्मयपरेणैव भाव्यम् । तदुक्तम्ः–

"विस्मयो योगभूमिका"

इति । ननु विस्मयोऽप्यत्रावकाशं न लभते अशक्यकरणे एव तद्योगात्, न च ईश्वरस्य किमप्यशक्यम् ईश्वरत्वव्याघातात् । सत्यम्, अत एव अतिनिर्गुणैः शाक्तैः शक्तावेव विश्रान्तिः कृता । न चात्रापि शक्तिसमारोपणेन द्वैतापातः प्रसञ्जनीयः एकत्र तत्त्वे एव रूपद्वयभानात् । आयातु वा द्वैतापातः अस्मदभीष्टे परमाद्वैते तस्याप्यवकाशात्, अन्यथा सामान्याऽद्वैतापत्तेः । सामान्याद्वैतापत्तिरप्यस्तु का हानिः, हानिरपि वाऽस्तु अन्यथा महापूर्णत्वायोगात् । महापूर्णे पि वृद्धिहानी स्वान्तर्गते एव । किं बहुना यत्र यत्र विश्रान्तिः क्रियते तत्तद्रूपम्, ततः उत्तीर्णं तत्त्वमिति कुत्रापि न स्थेयम् सर्वत्र वेत्यलं बहुतरया अतिरहस्यचर्चया प्रतिभारहितेषु वक्तुमयोग्यया तद्युक्तेषु तु श्रीभगवत्तीव्रतरशक्तिपातघ्रातेषु स्वयं स्फुरणशीलयेति । अस्य श्लोकस्य पूर्वं प्रति '**हि**' शब्दद्योत्येन हेतुत्वेन योजनां करोति "**हि**" इति "**संभाव्यते**" इत्यनेन अत्र संभावनायां लिङिति सूचितम् ॥ ७ ॥

ननु एवम् उभयथापि संभावनानुमानम् उन्मिषति, तत्र किं मकुरप्रतिबिम्बितघटादिदृष्टान्तेन ज्ञानप्रतिबिम्बिताभासवैचित्र्ये विज्ञान-दर्पणातिरिक्तं तत एव बाह्याभिमतं हेतुं कल्पयेम ? किं वा योगिदृष्टान्तेन संवित्स्वातन्त्र्यमेव हेतुभावेन ब्रूयाम ? तदिदं सांशयिकं वर्तते इति आशङ्क्य बाह्यार्थानुमानसंभावनां सूत्रद्वयेन अपाकर्तुमाह :—

**अनुमानमनाभातपूर्वे नैवेष्टमिन्द्रियम् ।**
**आभातमेव बीजादेराभासाद्धेतुवस्तुनः ॥ ८ ॥**
**आभासः पुनराभासाद्बाह्यस्यासीत्कथंचन ।**
**अर्थस्य नैव तेनास्य सिद्धिर्नाप्यनुमानतः ॥ ९ ॥**

न केवलम् अनन्तरश्लोकनिर्दिष्टाभिः युक्तिभिः प्रत्यक्षेण बाह्योऽर्थो न भासते[1], इयदेव[2] हि प्रत्यक्षं तत्र नीलं भाति इति स्वप्रकाशसंविद्रूपं

अथाष्टमस्य नवमस्य च श्लोकस्यावतरणिकां करोति **"नन्वेवम्"** इति ।

अत्र टीका :–

**उभयथा**, बाह्यानुमेयवाद्युक्तप्रकारेण समनन्तरश्लोकोक्तप्रकारेण चेत्यर्थः, **संभावनानुमानम्**–तर्करूपमनुमानम्, न तु दृढमनुमानम्, **बाह्याभिमतम्**–बाह्यत्वेनाभिमतम्, **सांशयिकम्**–संशयग्रस्तम् । एवमवतरणिकां कृत्वा श्लोकद्वयमुपन्यस्य व्याचष्टे । **"अनुमानम्"** इति ।

अत्र टीका :–

प्रथमम् **"अपि"** शब्दस्याभिधेयमाह **"न केवलम्"** इति । अनन्तर-श्लोकः– "चिदात्मैव हि" इति, तत्र निर्दिष्टाभिः–उक्ताभिः योगि-दृष्टान्तादिरूपाभिः, **युक्तिभिः**–उपायैः । **"न केवलम्"** इति तावदव-स्थाप्य **"न भासते"** इत्येतन्मात्रस्य हेतुमाह **"इयदेव हि"** इति । तच्च–

1. न आभासते—K.S.S.
2. यत्—K.S.S.

नाधिकं किंचित् इति, यावत् अनुमानेनापि न अस्य बाह्यस्य सिद्धिः इति अपिशब्दस्याभिप्रायः[1]। तत्र अनुमानम् अत्र नैव प्रवर्तितुम् उत्सहते। प्रवृत्तमपि न प्रकृतसिद्धिम् आदध्यात् इति अनेन सूत्रद्वयेन उपदर्श्यते[2]। तत्र अनुमानं विकल्पः, सर्वश्च अयं विकल्पोऽनुभवमूल इति प्रसिद्धम्। तेन यत् सर्वथा अनाभातपूर्वम् अननुभूतचरं तत्र अनुमानम् अनुमितिव्यापारो विकल्पात्मा नैव केनचित् वादिना इष्यते। ननु भवतु प्रत्यक्षतो दृष्टेऽनुमाने संकथा इयम्, सामान्यतो दृष्टे तु किं वक्ष्यसि यथा अर्थोपलब्ध्या इन्द्रियानुमाने ? उच्यते—तत्रापि विकल्पेन यथा सोऽर्थः स्पृश्यते तथा

---

भानञ्च, **"इति"** शब्दो हेतुसमाप्तौ। **"न केवलम्"** इत्यस्य आकाङ्क्षां पूरयति **"यावत्"** इति। **"अपिशब्दस्य"** **"नाप्यनुमानतः"** इत्यत्र स्थित-स्येत्यर्थः। अपिशब्दाभिप्रायमुक्त्वा श्लोकद्वयस्याभिप्रायं सङ्क्षेपेण कथयति **"तत्र"** इति, "अपि" शब्दार्थे एवं सतीत्यर्थः। **प्रकृतसिद्धिम्**—बाह्यसिद्धिम्, **अनेन**—कारिकाद्वयेन, **उपदर्श्यते**; सूच्यत इत्यर्थः। ननु दर्शयतु ततः किमित्यत आह **"तत्र"** इति। **तत्र**, एवंरूपेऽभिप्राये सतीत्यर्थः, **अनुमानं विकल्पो** भवति न निर्विकल्पदर्शनम् अवसायमात्रहेतुत्वात्। **सर्वः**—अनुमानादिरूपः, **अनुभवमूलः**—निर्विकल्पज्ञानमूलः, **इति**—एतत्, **प्रसिद्धं** भवतीति शेषः। **तेन**—अनुमानस्य विकल्पत्वेन। **"अनाभातपूर्वम्"** इति पदं व्याचष्टे **"अननुभूतचरम्"** इति, **तत्र**—अननुभूतचरे। अत्र तार्किकः प्रश्नयति **"ननु"** इति। **इयं सङ्कथा**—अनुभूतचरत्वसङ्कथा, **किं वक्ष्यसि**, तत्र सामान्यतो व्याप्तिग्रहणसंभवान्नैत-द्युक्तमिति भावः। कुत्र तत्सामान्यतो दृष्टमनुमानं भवतीत्याह **"यथा"** इति। **अर्थोपलब्ध्या**—घटादिविषयेण ज्ञानेन, **इन्द्रियानुमाने**—सर्वदाऽतीन्द्रियचक्षुरा-द्यनुमाने। अत्र परिहारमाह **"उच्यते"** इति। **तत्रापि**—इन्द्रियानुमानादिरूपे सामान्यतो दृष्टेऽपि, **सोऽर्थः**—चक्षुरादिरूपः विषयः, **स्पृश्यते**—सामान्यभावेन

---

1. इति अपिशब्दः—K.S S.
2. दर्श्यते—K.S.S.

अनुमेय इति स्थितिः। विकल्पश्च न इन्द्रियादिकम् अर्थं केनचित् संनिवेशविशेषादिना[1] विशेषात्मना स्पृशति, अपि तु किंचिदुपलब्धेः कारणम् इति अमुना स्वभावेन, स च स्वभावः कारणतालक्षणः प्रत्यक्षगृहीत एव। तथा च बोजात् अङ्कुरः तन्तुभ्यः पट इत्यादौ कार्यकारणभावः प्रत्यक्षानुपलम्भबलेन तावत् निश्चेयः। तत्र च प्रत्यक्षं प्रत्याभासं प्रामाण्यं भजते, विमर्शलक्षणस्य प्रमितिव्यापारस्य एकैकशब्दवाच्येऽर्थे प्रवृत्तेः[2] तदनुसारित्वाच्च प्रमाणस्य इति वक्ष्यते।

'एकाभिधानविषये मितिर्वस्तुन्यबाधिता।'

---

अनुभूयते, स्थितिः–व्यवस्था। सामान्येनोक्तमर्थं विशेषेण दर्शयति "विकल्पश्च" इति। **सन्निवेशविशेषादिना**-रचनाविशेषादिना, **विशेषात्मना**–विशेषस्वरूपेण। पुनः केन रूपेण स्पृशतीत्यत आह "**अपि तु**" इति। **किंचिदुपलब्धेः कारणं** भवति **इत्यमुना स्वभावेन,** सामान्यरूपेणेत्यर्थः, स्पृशतीति पूर्वेण संबन्धः। **स च स्वभावः**—स्पर्शविषयीकृतः स्वभावश्च, **कारणतालक्षणः**–कारणतास्वरूपः, धर्मरूप इत्यर्थः। "**बीजादेः**" इति दृष्टान्तवाक्यं व्याख्यातुमाह "**तथा च**" इति। प्रत्यक्षानुपलंभयोर्यद्बलं तेन, तत्र प्रत्यक्षनिश्चेयं वस्तु कथयति "**तत्र**" इति। **तत्र** प्रत्यक्षानुपलंभयोर्मध्ये, **प्रत्याभासम्**–सर्वेष्वाभासेषु, **प्रामाण्यम्**–प्रमाणताम्। कुतो भजत इत्यपेक्षायां हेतुमाह "**विमर्श**" इति। **विमर्शलक्षणस्य**-विकल्पज्ञानरूपस्य, **एकैकशब्दवाच्ये**–एकैकशब्दाभिधेयसमस्तधर्मधर्मिसमुदायरूपे, स्वलक्षणे इति यावत्, **प्रवृत्तेः,** न तु निर्विकल्पदर्शनवत् प्रत्याभासप्रवृत्तेः। **तदनुसारित्वाच्च**-विमर्शानुसारित्त्वाच्च, **प्रमाणस्य** प्रत्यक्षादेरित्यर्थः। ननु कथं विमर्शहेतुकस्य प्रमाणस्य विमर्शानुसारित्वं युक्तमित्यत आह "**इति**" इति। इति–एतत्, कुत्र वक्ष्यत इत्यत आह "**एकाभिधान**"

---

1. सन्निवेशविशेषात्मना—K.S.S.
2. विश्रान्तेः—K.S.S.

**इति। आभासमात्रं च सामान्यम् इति निर्णेष्यते। अनुप-लम्भोऽपि अन्योपलम्भरूप आभासमात्रविश्रान्त एव इति कारणाभासो विशेषशून्यः परिगृहीत एव बीजात् अङ्कुर इति प्रतीतौ। यत् यस्य नियमम् अनुविधत्ते अव्यतिरिक्तम् तत् तस्य कार्यम् इति प्रतिघटं मृत्ति-कादिरूपहेतुतद्वन्मात्रस्य[1] आभासात ॥ ८॥**

---

इति, अस्यां कारिकायामित्यर्थः, तत्र हि स्वोत्पादितविकल्पद्वारेणैव प्रमाणस्य स्वलक्षणविषयत्वं कथयिष्यति। ननु आभासेष्वेव प्रमाणव्यापार उक्तो न तु सामान्ये तत्कथमेवं सिद्ध्यतीत्यत आह "**प्राभास**" इति। **आभासमात्रम्**–केवलः आभासः, न तु सर्वधर्माक्षेपेण ग्रहणम्, **निर्णेष्यते,** अस्यामेव कारिकाया-मित्यर्थः। अनुपलंभकृत्यमाह "**अनुपलंभोऽपि**" इति। **अनुपलंभः**–गोष्वश्वत्वा-नुपलंभः, **अन्योपलंभरूपः**–अश्वादिष्वश्वत्वाद्युपलंभरूपः, प्रमाता हि गोषु गोत्वं प्रत्यक्षेण पश्यन् अश्वादिषु तदनुपलभमानः सर्वगोव्यक्तिगतं गोत्वं निश्चिनोति। **आभासमात्रविश्रान्त एव,** न तु पराभिमतव्यक्तिविश्रान्तः, इति–अत एव हेतोः, **कारणाभासः**–इन्द्रियगतः उपलब्धिकारणताभासः, **विशेषशून्यः**–तन्नि-ष्ठतयाऽग्रहणात् विशेषरहितः, **परिगृहीतः,** प्रत्यक्षानुपालंभाभ्यामिति शेषः। कुत्रेत्यपेक्षायां दृष्टान्तमाह "**बीजात्**" इति, स्फुटमेव हि बीजस्याङ्कुरं प्रति कारणत्वमिति भावः। अत्राप्यप्रत्यक्षत्वमाशंक्य सूत्रे "**आदि**" शब्दगृहीतं मृद्घटयोः कार्यकारणभावं व्याप्तिप्रदर्शनद्वारेण कथयति "**यत्**" इति। **नियमम्**–अवश्यंभावम्, **अनुविधत्ते,** स्वरूपलाभं प्रति अपेक्षते इत्यर्थः। ननु कुत्रेयं व्याप्ति-र्दृश्यत इत्यत आह "**प्रतिघटम्**" इति। **प्रतिघटम्**–सर्वेषु घटेषु, मृत्तिकादि-रूपः–मृद्दण्डादिरूपः यो हेतुस्तेन यतद्वन्मात्रम्, तस्य, भावप्रधानो निर्देशः, तद्वत्तामात्रस्य मृद्दण्डादिरूपकारणयुक्तत्वस्येति यावत्, **आभासात्**–स्फुरणात्। एतेन प्रथमश्लोकः कृतव्याख्यः ॥ ८ ॥

---

1. मृत्तिकादिरूपस्य हेतुतद्वन्मात्रस्य—K.S.S.

आभासात् बाह्यः पुनरनाभासरूपः, स च आभासते इति विप्रतिषिद्धम् । अनाभासे च नास्ति विकल्परूपस्य अनुमानस्य व्यापारः । ग्रामगृहादेस्तु यत् बाह्यं तत् अग्रामादिरूपं न उच्यते प्रत्येकं वाटानूपकुड्यतुलादेः बाह्यत्वप्रसङ्गात्, अपि तु तत्संनिकटम्[1], तस्मात् ग्रामबाह्यम् आभासबाह्यम् इति च शब्दसाम्यमात्रम् एतत् न वस्तुसाम्यम् । एवं ये विकल्पे वस्तु न आभाति इति मन्यन्ते तेषामपि तावत् अनुमानविकल्पो न बाह्ये उपपन्नः ।

---

ननु आभासेनैव[2] किं सर्वं सञ्जयसीत्यपेक्षायां द्वितीयं श्लोकं व्याचष्टे "**आभासात्**" इति । **विप्रतिषिद्धम्**-विरुद्धम् । ननु आभासो मास्तु विकल्प एव सर्वं कार्यं करिष्यति इत्यत आह "**अनाभासे च**" इति । व्याप्तिग्रहणाऽसं-भवादिति भावः । ननु यदि बाह्यत्वमात्रेण विरुद्धतासाधनं तर्हि ग्रामबाह्यस्य वस्तुजातस्यापि विरुद्धत्वमापद्येतेत्यत आह "**ग्राम**" इति । ग्रामापेक्षया वाटा-नूपेत्युक्तम्, गृहापेक्षया तु कुड्यतुलादेर्ग्रहणम्, आदिशब्देन तत्रत्यान्यवस्तुजातस्य ग्रहणम् । पुनः किं तदुच्यते इत्यत आह "**अपि तु**" इति । अपि तु पण्डितैः **तत्**-ग्रामबाह्यं वस्तुजातम्, **सन्निकटम्**-ग्रामसमीपस्थम् उच्यते, ग्रामसमीपे एव स्थितत्वात् ग्रामं प्रत्यविरुद्धत्वाच्चेति भावः । फलितमाह "**तस्मात्**" इति । न च शब्दसाम्ये वस्तुसाम्यवादो न्याय्यः इति भावः । ननु बौद्धैर्विकल्पस्य वस्त्वसंस्पर्श एवोक्तः, त्वया तु तेनैव सर्वं साध्यते इति किमेतदित्यत आह "**एवम्**"

---

1. सन्निकृष्टम्—K.S.S.

2. द्वितीयं श्लोकं व्याचष्टे 'ननु' इति । ननु आभासेनैव किं सर्वं संजयसीत्यत आह "आभासात्" इति । विप्रतिषिद्धम्–विरुद्धम् । ननु आभासो मास्तु विकल्प एव सर्वं कार्यं करिष्यति इत्यपेक्षायां द्वितीयं श्लोकं व्याचष्टे 'अनाभासे च' इति—C. The text, as found in the manuscript, does not make much sense and seems to contain scribal mistakes. We have, therefore, taken the liberty of correcting it as printed.

अस्माभिस्तु उपपादितम्—अध्यवसायस्यापि आभासमानविषयत्वम् 'भ्रान्तित्वे चावसायस्य' इति सूत्रे। तेन अनुमानविकल्पात्मनापि प्रकाशेन यदि अनाविष्टो नीलादिः अर्थः तत् न अनुमित एव स्यात्। अथ आविष्ट एव, तर्हि 'प्रागिवार्थोऽप्रकाशः स्यात्' इति न्यायेन प्रकाशमात्रस्वभाव एव, न बाह्यः। तेन बाह्ये साध्ये यत् किंचित् प्रमाणम् आनीयते, तदबाह्यतामेव प्रत्युत साधयति[1] इति विरुद्धमेव, अत एव आह 'कथंचन' इति, केनापि प्रकारेण प्रत्यक्षात्मना अनुमेयात्मना वा आभासनम् आभासो बाह्यस्य अनाभासस्य न कदाचित् अभूत् इति, तस्मात् सिद्धम् 'चिदात्मैव हि देव' इति ॥ ९ ॥

---

इति, एवं सतीत्यर्थः। ननु तव दर्शने किमस्तीत्यत आह **"अस्माभिः"** इति। **अध्यवसायस्य**–विकल्पकार्यस्याध्यवसानस्य, **आभासमानविषयत्वम्**, अर्थविषयत्वमित्यर्थः। कुत्रेत्यपेक्षायामाह **"भ्रान्तित्वे"** इति। स्वाभिप्रायमुपसंहरति **"तेन"** इति। **अनुमानविकल्पात्मना**–अनुमानरूपविकल्परूपतां गतेन। फलितमाह **"तेन"** इति, **साधयति** "प्रागिवार्थोऽप्रकाशः" इति न्यायेनेत्यर्थः। **तत् इति विरुद्धमेव** इति योजना, अतः तत्प्रमाणं विरुद्धमेव भवतीत्यर्थः। तथा च शान्तिकर्मारंभे वेतालोत्थापनमेव बाह्यसाधनमिति भावः। ननु सूत्रे केन पदेन एतदुक्तमित्यत आह **"अत"** इति। किमाहेत्यत आह **"कथञ्चन"** इति। एतदपि व्याचष्टे **"केनापि"** इति। एतदवष्टंभेन पूर्वश्लोकार्थस्य सिद्धतां कथयति **"तस्मात्"** इति।

एवमत्र श्लोकद्वये योजना। पण्डितः अनुमानम् अनाभातपूर्वं नैवेष्टम्। इन्द्रियम् आभातमेव भवति, सामान्येनेति शेषः। कुतः ? बीजादेः हेतुवस्तुनः आभासात्। पुनः–पक्षान्तरे, आभासाद् बाह्यस्य आभासः कथंचन नासीत्, तेनास्यार्थस्य बाह्यार्थस्य अनुमानतोऽपि सिद्धिर्नास्ति इति ॥ ९ ॥

---

1. प्रसाधयति—K.S.S.

ननु अन्तःस्थितं बहिः प्रकाशयेदित्युक्तं तत् अन्तःस्थितत्वम् उपपादनीयम् इति आशङ्क्य आह :—

**स्वामिनश्चात्मसंस्थस्य भावजातस्य भासनम्।**
**अस्त्येव न विना तस्मादिच्छामर्शः प्रवर्तते ॥ १० ॥**

बहीरूपतया[1] आभासनेऽपि अहन्तारूपता[2] न त्रुट्यति,

'प्रमात्रैकात्म्यमान्तर्यम्'

इति हि वक्ष्यते, तच्च सदैव, प्रकाशस्य प्रमातृत्वात्, तदात्मतया

---

अथ दशमश्लोकस्यावतरणिकां करोति **"ननु"** इति।

अत्र टीका :–

**उपपादनीयम्**–युक्त्या समर्थनीयम्, **"स्यादेतत्"** इत्यत्र तर्कमात्रेणैव साधनादिति भावः। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"स्वामिनः"** इति।

अत्र टीका :–

श्लोकं व्याख्यातुं प्रक्रियां तनोति **"वहीरूप"** इति। **वहीरूपतया आभासनेऽपि**–बाह्यत्वेनाभासेऽपि, इदन्तया ग्रहणेऽपीति यावत्, **अहन्तारूपता**–आन्तररूपता। कुतो न त्रुटचतीत्यत आह **"प्रमात्रा"** इति। प्रमात्रा सह–प्रकाशेन सह ऐकात्म्यम्[3] **प्रमात्रैकात्म्यम्**, **तच्च**–भावानां प्रमात्रा सह ऐकात्म्यं[4] च। कुत इति हेत्वपेक्षायामाह **"प्रकाशस्य"** इति। ननु प्रकाशस्य प्रमातृत्वेऽपि प्रकृते किमायातम् इत्यत आह **"तदात्मतया"** इति। **तदात्मतया**–

---

1. वहीरूपतयापि आभासने—K.S.S.
2. अन्तारूपता—K.S.S.
3. प्रमात्रा सह-प्रकाशेन सह। ऐक्यम् प्रमात्रैक्यम्—C.
4. ऐक्यम्—C.

च विना[1]ऽप्रकाशमानस्य अवस्तुत्वात्, किं तु तत्र अहम् इति उचिते परामर्शे योऽयम् इदन्तापरामर्शः सैव बाह्यता, तच्च इह अन्तःस्थितत्वम् अहमित्येतावता चित्समुचितेनैव वपुषा परामर्शनमेव[2], तच्च इह नीलादीनामस्त्येव, न तु नास्ति इति, यदि हि न स्यात् कुम्भकृतो 'घटं करवाणि' इति य उत्तरक्रियामपेक्ष्य[3] इच्छाशब्दवाच्यः परामर्शः, एषणीयेन[4] स परामृश्येन अनियन्त्रितः चेत् ततः पटेच्छापि सा न कस्मात् इति संकीर्येरन्

---

प्रकाशरूपप्रमातृरूपतया, **अप्रकाशमानस्य**–"प्रागिवार्थः" इति न्यायेन प्रकाशकर्तृत्वमभजतो भावजातस्य, **अवस्तुत्वात्**, अप्रकाशमानं हि वस्तु वस्तु न भवति। ननु तर्हि अबाह्यमेव सर्वदा तत् इत्यपेक्षायाम् पक्षान्तररीत्या बाह्यत्वमपि साधयति **"किन्तु"** इति। **तत्र**–तस्मिन भावजाते, **सैव**–इदन्तापरामर्श एव, न तु ततो निर्गत्य बहिरवस्थानम्। **"तच्च"** इति, चिति समुचितः–योगिचित्समचितः, तेन, **परामर्शनमेव**, न तु कुत्राप्यन्तर्देशेऽवस्थानम्, **तच्च**–अहमिति परामर्शनं च **"अस्त्येव"** इति। "**एव**" शब्दस्य व्यावर्त्यमाह "**न तु**" इति। अत्र तर्कमनुकूलं प्रमाणानुग्राहकं कथयति "**यदि हि**" इति। तत् **यदि न स्यात् इति**–एवम्, **व्यवहाराः सङ्कीर्येरन्**–सङ्करं गच्छेयुः। इति कथम्? **कुंभकृतः**–कुंभनिर्माणे उद्युक्तस्य कुलालस्य, **उत्तरक्रियामपेक्ष्य इच्छाशब्दवाच्यः** तां प्रति इच्छारूपः इति यावत्। **"घटं करवाणि" इति परामर्शः** भवति, **सः, एषणीयेन**–एषणाविषयभूतेन, अत एव **परामृश्येन**–इच्छारूपस्य परामर्शस्यापि विषयभूतेन घटेन, **अनियन्त्रितः**–विषयभावेन परिच्छिन्नतां न नीतश्चेत्स्यात् **ततः, सा**–परामर्शरूपा इच्छा, **पटेच्छापि** कथं न स्यात्, विशेषा-

---

1. प्रकाशमानस्य—K.S.S.
2. एव is not found in the K.S.S. edition.
3. उत्तरक्रियापेक्षया—K.S.S.
4. एषणीयात्मना—K.S.S.

व्यवहाराः। अथ तत्रापि च एषणीयः तदानीमेव निर्मितः सन् तथा जातः, तर्हि तन्निर्माणं चिदात्मनि विनेच्छया नोपपन्नम् इति 'तिष्ठासोरेवमिच्छैव हेतुता' इत्यत्र वर्णयिष्यते। तच्च[1] इच्छान्तरमपि विषयनियन्त्रितं न वा इति विकल्पेऽनवस्था। विषयनियन्त्रितं चेत् स्यात् आत्मतैव जाता, न चेत् घटे पटेच्छा स्यात्। अथ तत्रापि तदानीमेव इति कृत्वा अनवस्था। तस्मात् सर्वोऽयं भावराशिः चिदात्मनि अहम् इत्येव वपुषा सततावभासुरवपुः ऐश्वर्यरूपाच्च स्वातन्त्र्यलक्षणात् स्वामिभावात् विचित्रेण वपुषा क्रमाक्रमादिना संवित् एनं बहिःकरोति प्रमातृप्रथनपूर्वकम्,[2]

भावात् इति शेषः। **अथ**--यदि, **तत्रापि**--तस्यां घटेच्छायामपि, **एषणीयः तदानीम्**-इच्छासमये, **निर्मितः**--संपादितः, **सन्, तथा जातः**--एषणीयः सम्पन्नः, **तर्हि** तस्य-घटस्य निर्माणम्, **चिदात्मनि**--चित्स्वरूपे, **इच्छया विना उपपन्नं न** भवति, **इति**-एतत्, **"तिष्ठासोरेवमिच्छैव हेतुता"** **इत्यत्र**-अस्यां कारिकायाम्, **वर्णयिष्यते**-कथयिष्यते, **तच्चेच्छान्तरम्**-निर्मीयमाणविषया अन्या इच्छा, **अपि, विषयनियन्त्रितं न वा इति विकल्पे** सति, **अनवस्था**-तत्राप्यन्य एषणीयः तत्राप्यन्या इच्छा इत्येवंरूपः अनवस्थाख्यो दोषो भवेत्। आत्माश्रयादेरत्यन्तसंयुक्ततां ज्ञात्वा अनवस्थामात्रग्रहणम्। तर्केण शैथिल्यमुपपाद्यानुमानमत्र प्रवर्तयति फलितरीत्या **"तस्मात्"** इति। **अयम्**-पुरो भासमानः, सततम् अवभासुरं वपुर्यस्य तादृशम्, **संवित्**-प्रकाशरूपं परप्रमातृतत्त्वम्, **एनम्**-अहन्तया स्थितं भावराशिम्, **बहिःकरोति**--इदन्तया भासयति, ऐक्येन स्थितं सत् अपोहनशक्त्या भेदेन भासयति इति यावत्। कथम्? प्रमातॄणाम्-ग्राहकरूपाणां स्वांशभूतानां मितप्रमातॄणां यत्प्रथनम्-अपोहनशक्त्या स्वतो भेदेन भासनम् तत् पूर्वं यत्र तत्, प्रथमं ग्राहकान् भासयति

1. ततश्च इच्छान्तरमपि—K.S.S.
2. प्रमातृभेदप्रथन—K.S.S.

तत्रापि कचित् आभासे प्रमातॄन् एकीकरोति नितम्बिनीनृत्त इव प्रेक्षकान्। तावति हि तेषाम् आभासे ऐक्यम्। शरीरप्राणबुद्धिसुखाद्याभासांशेषु तु भेदस्य अविगलनात् न सर्वथा ऐक्यम्। अत एव प्रतिक्षणं प्रमातृसंयोजन-[1] वियोजनवैचित्र्येण परमेश्वरो विश्वं सृष्टिसंहारादिना प्रपञ्चयति। तदुक्तमाचार्येण:—

'सदा सृष्टिविनोदाय सदा स्थितिसुखासिने।
सदा त्रिभुवनाहारतृप्ताय भवते नमः ॥'

तदनन्तरं ग्राह्यवर्गमिति भावः। **तत्रापि**—बहिष्करणेऽपि। कथं तत्र तेषामेकीकरणमित्यत आह "**तावति**" इति। **तावति आभासे**—नृत्ताभासे, किं सर्वथैव तेषान्तत्रैक्यमित्यत आह "**शरीर**" इति। **प्रतिक्षणम्**—क्षणे क्षणे इत्यर्थः, संयोजनम्-नृत्तादौ, वियोजनम्—शरीरादौ, आदिशब्देन मध्यगतायाः स्थितेर्ग्रहणं पिधानानुग्रहयोश्च। अत्राचार्यसम्मतिं दर्शयति "**तदुक्तम्**".इति। किमुक्तमित्यत आह "**सदा**" इति। स्थितिकृतं सुखं स्थितिसुखम् तत्र आस्ते इति तादृशाय। आहारः—निगरणम्, संहार इति यावत्। ननु कथं विरुद्धानां क्रमभाविनाञ्च सृष्ट्यादीनां युगपत् नित्यं भवति विनोदादिकारित्वम्? शृणु, तत्र अनादित्वेऽपि कालग्रस्तशिष्यबुद्ध्यपेक्षया प्रथमभूतायां सृष्टौ तावत् पूर्वतरं संहारकाले स्थितायाः संजिहीर्षायाः संहारः, तत्रैवोत्पन्नायाः सर्जनेच्छायाः स्थितिः, तद्विषयभूतानां भावानामुद्भविष्यमाणस्थितीच्छायाश्च सृष्टिः। स्थितौ तु सृष्टौ स्थितायाः सर्जनेच्छायाः संहारः। तत्रैवोत्पन्नायाः स्थितीच्छायाः तद्विषयभूतानां भावानाञ्च स्थितिः, संजिहीर्षायाः सृष्टिः, संहारे तु स्थितौ स्थितायाः स्थितीच्छायाः तद्विषयाणां भावानाञ्च संहारः, तत्रैवोत्पन्नायाः संजिहीर्षायाः स्थितिः, भाव्यमान-सर्जनेच्छायाः सृष्टिः, इति स्फुटमेवास्य सृष्ट्यादित्रयस्य सृष्ट्यादित्रयमयत्वम्, सदात्वं च चिन्मात्रस्य तत्र सर्वदा तत्रोद्यन्तृत्वेन ज्ञेयम्। तदुक्तम्:—

"नासन्निवेशं हेमास्ति नासर्गं ब्रम्ह विद्यते"

1. प्रमातृसंयोजनावियोजनावैचित्र्येण—K.S.S.

इत्यादि । श्रीभट्टनारायणेनापि

'मुहुर्मुहुरविश्रान्तस्त्रैलोक्यं कल्पनाशतैः ।
कल्पयन्नपि कोऽप्येको निर्विकल्पो जयत्यजः ॥'

इति । तस्मात् स्थितम् अन्तःस्थितं भावजातं तेन विना तद्विषयस्य

---

इति । अन्योपि चक्रवर्ती भोगान् सृजति गृहे स्थापयति आहरति चेति ध्वनिः । अथवा परप्रमातुः सदा सृष्टिविनोदादित्वं स्वसृष्टस्वांशभूतमितप्रमातृकृतमेव ज्ञेयम्, ते हि सदा क्वचिद्भागे सृष्टिभाजः क्वचित् स्थितिभाजः क्वचित् संहारभाजः तरङ्गा इव जलनिधावित्यलं प्रपंचेन । श्रीभट्टनारायणवाक्यमप्यत्र संवादयितुमाह **"भट्ट"** इति । **"उक्तम्"** इति पूर्वेण संबन्धः । किमुक्तमित्यत आह **"मुहुः"** इति । **"मुहुर्मुहुः"** इति मध्यमावेशापेक्षया उक्तम्, सर्वे हि प्रमातारः स्वभावबलेन प्रतिक्षणं सिद्धं प्राणविज्ञाननिष्ठं मध्यमावेशमनुभवन्ति, यद्यपि शून्यं सर्वदा तन्मयमेव किन्तु स्तोकं जाड्येन व्याप्तं देहमपि अतिजाड्येन स्पृष्टं तादृशमेवेति तयोरिहाग्रहणम्, ते च प्राणद्वारेण बुद्धिद्वारेण च तत्र प्रविष्टा भावराशिमपि स्वात्मना सह तत्र प्रवेशयन्ति, स्वभावबलेन तत उत्थिताश्च नवीनमेवोत्पादयन्ति, या च तेषु नवेषु भावेषु प्रत्यभिज्ञा सा सादृश्यनिमित्तकैव तैः कल्पितमान्तरविवक्षायां जाग्रदादिरूपं लोकत्रयं बाह्यविवक्षायां भूरादिरूपं लोकत्रयमपि तत्समष्टिभूतपरप्रमातृभूतसदातनचिन्मात्रकृतमेव ज्ञेयम् । यश्च कल्पनाशतैः मुहुर्मुहुः विश्रामरहितः त्रैलोक्यं कल्पयति स कथं निर्विकल्पो भवतीत्याश्चर्यम् । परिहारस्तु **"कल्पनाशतैः"** इति । त्रैलोक्यकल्पनाः मितप्रमातृगताः, स तु सर्वदा निर्विकल्प एव यथा सार्वभौम आज्ञाद्वारेण स्वभृत्यैः सर्वदेशसंबन्धिनीः क्रियाः कुर्वन्नपि निश्चिन्त एव स्वमंडले तिष्ठति इति । अथवा अतिसूक्ष्मः परामर्शोऽपि प्रकाशस्य स्वरूपोद्वलनमेवेति न तेनापि हानिरिति । स्वाभिप्रायमुपसंहरन्[1] **"न विना"** इति श्लोकशेषं व्याचष्टे **"तस्मात्"** इति । **तस्मात्**, इतीति शेषः, **इति स्थितम्**— सिद्धम् भवति । इति किमिति ? भावजातमिदमन्तःस्थितं

---

1. स्वाभिप्रायमुपसंहरति—C.

परामर्शायोगात्[1] इति ॥ १० ॥

ननु परामर्शो नाम विकल्पः, स च अविकल्पशुद्धसंविद्वपुषि भगवति कथं स्यात् इत्याशङ्क्याह:—

**स्वभावमवभासस्य विमर्शं विदुरन्यथा।**
**प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः ॥ ११ ॥**

इह अवभासस्य प्रकाशस्य, अनवभासस्य च अप्रकाशस्य घटादेः परस्परपरिहारेण द्वयोः स्वात्मनि चेत् व्यवस्थानम्, तत् घटपटयोः इव इदमजडम् इदं जडम् इति दुरुपपादं वैलक्षण्यम्। अथ अवभासो यतोऽर्थस्य संबन्धी, ततो न जडः, तर्हि संबन्धमात्रेण मृत् अपि घटस्य इति अजडा स्यात्। अथ न स्वसंबन्धमात्रम् अपि तु अवभासोऽर्थस्य

---

भवति, कुतः? **तेन विना**-अन्तरवस्थानं विना, **परामर्शायोगात्** "करवाणि" इतीच्छायाः अयोगात्, न हि निर्विषया इच्छा युक्तेति भावः। एतेन तर्कशोधिते मार्गे अनुमानप्रमाणं संचारितम्।

अयमत्र संक्षेपः। स्वामिनः—विमर्शाख्यैश्वर्ययुक्तात् प्रभवापादनरूपाच्चित्तत्त्वात्, आत्मसंस्थस्य—तादात्म्येन स्वान्तर्गतस्यैव सतः, भावजातस्य-भावराशेः, भासनमस्ति, तस्माद्विना-तस्यात्मनि समवस्थानं विना, इच्छामर्शः—"करवाणि" इति इच्छारूपो विमर्शो न प्रवर्तते निर्विषयत्वात्॥ १०॥

अथैकादशश्लोकस्यावतरणिकां करोति **"ननु"** इति। स्पष्टम्।

अत्र टीका:—

इह-अत्र लोके। **"अवभासस्य"** इति पदं व्याचष्टे **"प्रकाशस्य"** इति। **परस्परपरिहारेण**—परस्परतो व्यावृत्त्या, **व्यवस्थानम्**-विशिष्टमवस्थानम्, **दुरुपपादम्**-दुःखेनोपपादयितुं शक्यम्। यथास्वं स्वरूपसिद्धौ विशेषा-

---

1. परामर्शस्य अयोगात्—K.S.S.

प्रकाशः, तर्हि अर्थात्मना स प्रकाश इति समापतितम्। न च अन्यात्मना अन्यस्य प्रकाश उपपन्नः। अथ अन्यस्वभावोऽपि घटोऽवभासस्य कारणम्, तर्हि अवभासोऽपि घटस्य कारणम् इति घटोऽपि अजडः स्यात्। अथ अन्येन[1] सतापि घटेन यतोऽवभासस्य प्रतिबिम्बरूपा च्छाया दत्ता, ताम् असौ अवभासो बिभ्रत् घटस्य इति उच्यते, ततश्च अजडः, तर्हि स्फटिकसलिलमकुरादिः अपि एवंभूत एव इति अजड एव स्यात्। अथ तथाभूतमपि आत्मानं तं च घटादिकं स्फटिकादिः न परामष्टुं समर्थ इति जडः, तथापरामर्शनमेव अजाड्यजीवितम् अन्तर्बहिष्करणस्वातन्त्र्यरूपं[2] स्वाभाविकम् अवभासस्य स्वात्मविश्रान्तिलक्षणम् अनन्यमुखप्रेक्षित्वं

---

भावादिति भावः। पक्षान्तरमाह "**अथ**" इति। **प्रकाशः**–प्राकट्यम्, **सः**-अवभासः, **समापतितम्**—बलादायातम्। ननु तदेव भवत्वित्यत आह "**न च**" इति। अत्रापि प्रश्नं करोति "**अथ**" इति। **कारणम्**–विषयत्वेन आलंबनकारकम्। उत्तरमाह "**तर्हि**" इति। **घटस्य कारणम्**, ज्ञापकत्वेन सिद्धिप्रदमित्यर्थः। पुनः शङ्कते "**अथ**" इति। **अन्येन सतापि**–जडत्वेन व्यतिरेकेण सताऽपि, **ताम्**-छायाम्, "**घटस्य**"इति, घटसंबद्ध[3] इत्यर्थः। **ततश्च**–तत्संबन्धित्वाच्च, **एवंभूतः**–प्रतिबिंबरूपां छायां बिभ्रत्। प्रश्नं करोति "**अथ**" इति। **तथाभूतमपि**-तथाभूतं घटप्रतिबिंबं गृह्णन्तम्, **तं च**–प्रतिबिंबदायकञ्च, **न समर्थः**, असमर्थ इत्यर्थः। उत्तरमाह "**तथा**" इति। **तथापरामर्शनम्**, घटोपरक्तस्वात्मविषयं घटविषयं च परामर्शनम्, **अजाड्यजीवितम्**—चेतनतायाः सत्ताप्रदम्, अन्तः–लक्षणया अन्तःस्थितस्य भावराशेः, बहिष्करणम्–इदन्तया स्फारणम्, तत्र, यत् स्वातन्त्र्यम् तत् रूपं यस्य तादृशम्; **स्वाभाविकम्**, न तु केनाप्यागन्तुकम्, स्वात्मनि या

---

1. अन्येनापि सता—K.S.S.
2. अन्तर्बहिष्करणस्वातन्त्र्यस्वरूपम्—K.S.S.
3. घटसंबन्ध—C.

नाम। 'अहमेवं प्रकाशात्मा प्रकाशे' इति हि विमर्शोदये स्वसंविदेव प्रमातृप्रमेयप्रमाणादि कृतार्थम्[1] अभिमन्यते न तु अतिरिक्तं काङ्क्षति, स्फटिकादि हि गृहीतप्रतिबिम्बमपि तथाभावेन सिद्धौ प्रमात्रन्तरम् अपेक्षते इति निर्विमर्शत्वात् जडम्। सर्वत्र[2] वस्तुतो विमर्शात्मकप्रमातृस्वभावतादात्म्याहंपरामर्शविश्रान्तेः अजडत्वमेव[3] पूर्वापरकोट्योः। यदुक्तम्:—

विश्रान्तिः सा लक्षणम्—स्वरूपं यस्य तादृशम्, अत एव **अनन्यमुखप्रेक्षित्वं नाम**—स्वग्रहणे परापेक्षारहितत्वाख्यम्, "**अवभासस्य**" इति विशेषेण मध्ये विशेष्याश्रयस्य कथनम्। कथमनन्यमुखप्रेक्षि इत्यत्र हेतुमाह "**अहम्**" इति। **अहमेवं प्रकाशात्मा,**[4] अहमेवं प्रकाशात्मना स्वप्रकाशस्वभावेन च, **प्रकाशे**—प्रकाशकर्ताऽस्मि इति **विमर्शोदये,** हि—यस्मात्, प्रमात्रा **स्वसंविदेव**—स्वरूपभूता संविदेव, न तु ततो व्यतिरिक्तं किंचिद् वस्तु, **प्रमातृप्रमेयप्रमाणादि,** आदिशब्देन प्रमाग्रहणम्, **कृतार्थम्**—चरितार्थम्, **अभिमन्यते** सः प्रमाता, **अतिरिक्तम्**—स्वरूपभूतसंविदः व्यतिरिक्तं प्रमात्रादि चरितार्थम्, न **काङ्क्षति**। ननु स्फटिकादिरप्येवं भवतु इत्यत आह "**स्फटिकादि**" इति। स्वभावे भिन्नत्वेन विमर्शाऽसमथत्वात्। ननु यदि स्फटिकादि जडमेव तर्हि द्वैतापत्तिरित्यत आह "**सर्व**" इति। **वस्तुतः**—परमार्थतः **सर्वत्र** विमर्शात्मकः—उक्तन्यायेन विमर्शस्वभावः यः प्रमातृस्वभावः-प्रकाशाख्यः परप्रमातुः स्वभावः तेन सह यत्तादात्म्यम्—प्रकाशमानत्वान्यथाऽनुपपत्त्या एकत्वम्, तेन या अहंपरामर्शे विश्रान्तिः तस्या हेतोः, **पूर्वापरकोट्योः**—ग्रहणेच्छासमये ग्रहणानन्तरं च, **अजडत्वमेव**—प्रकाशस्वरूपत्वमेव, भवति। यद्यपि मध्येऽपि तथैव भवति तथापि शिष्यबुद्धेस्तावदप्रौढत्वमपेक्ष्य एवमुक्तम्। अत्र वृद्धसम्मतिमाह "**यदुक्तम्**" इति। किमुक्तमित्यत आह "**इदम्**" इति।

1. चरितार्थम्—K.S.S.
2. सर्वं तु—K.S.S.
3. अजडमेव—K.S.S.
4. अहंप्रकाशाख्यः—C.

'इदमित्यस्य विच्छिन्नविमर्शस्य कृतार्थता।
या स्वस्वरूपे विश्रान्तिर्विमर्शः सोऽहमित्ययम्॥'

इति। मध्यावस्थैव तु इदन्ता विमृश्यमानपूर्वापरकोटिः विमूढानां मायापदं संसारः इति विमर्श एव प्रधानं भगवत इति स्थितम्॥ ११॥

न केवलं संवित्तत्त्वस्य अस्माभिः एव विमर्शप्राधान्यम् उक्तम् यावत् आगमान्तरैरपि इति दर्शयति:—

---

इदं पूर्वमेव कृतव्याख्यम् इति न पुनरायस्यते तथा च नाद्वैतहानिरिति भावः। ननु मध्यावस्था कीदृशी भवतीत्यत आह "**मध्या**" इति। इदन्ता—इदन्तारूपा, तज्ज्ञानात्त सर्वदा सर्वमेकरूपं पश्यतां विमूढवद् व्यवहारकारित्वेऽपि संसाराभावाद् "**विमूढानाम्**" इत्युक्तम्। तदुक्तम्:—

"प्रबुद्धः सर्वदा तिष्ठेज् ज्ञानेनालोच्य गोचरम्।
एकत्रारोपयेत्सर्वं ततोऽन्येन न पीडयते॥"

इति। सिद्धं वस्तु संक्षेपेण कथयति "**विमर्श**" इति। **विमर्श एव**—घटोपरक्तप्रकाशाख्यनिजस्वरूपविषयः उपरागकारिघटविषयश्च परामर्श एव, **प्रधानम्**—स्वरूपस्य प्रकाशतोपपादकत्वेन मुख्यम्, स्वरूपादपि मुख्यमिति यावत्, **इति स्थितम्**—सिद्धम् भवति। तथा च परामर्शस्य शुद्धप्रकाशगतत्वेऽपि न हानिरिति भावः। यद्यपि परमार्थतः ग्राहकत्वावच्छिन्नप्रकाशद्वारेणैवैतत्साधितम्, अन्यथाऽर्थोपरागकथनाऽयोगात्, शुद्धप्रकाशस्वरूपे उपरागकथायाः एव अयोगात्, तथापि तद्द्वारेण तस्याप्येतत् सिद्धमेव, परन्तु अतिसूक्ष्मतया तत्साक्षान्न कथितम्, अतश्च स्वात्ममात्रपरामर्शे शुद्धप्रकाशस्यापीयमेव वर्तनीत्यलं सूक्ष्मेक्षिकाभिः॥ ११॥

अथ द्वादशसंख्याकस्य श्लोकस्यावतरणिकां करोति "**न केवलम्**" इति। स्पष्टम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**आत्मात**" इति।

**आत्मात एव चैतन्यं चित्क्रियाचितिकर्तृता—**
**तात्पर्येणोदितस्तेन जडात्स हि विलक्षणः ॥ १२ ॥**

यतो विमर्श एव प्रधानम् आत्मनो रूपम् अमुमेव हेतुं प्रयोजनरूपम् उद्दिश्य आत्मा धर्मिस्वभावो द्रव्यभूतोऽपि, चैतन्यम् इति धर्मवाचिना[1] शब्देन सामानाधिकरण्यम् आश्रित्य उदितः कथितः, भगवता शिवसूत्रेषु

'चैतन्यमात्मा' १–१

इति पठितम् । चैतन्यम् इति हि धर्मवाचकोपलक्षणम्,

'चितिशक्तिरपरिणामिनी'

'··· तद्दृशः कैवल्यम् ।' (यो० सू० २–२५)

'द्रष्टा दृशिमात्रः ······' (यो० सू० २–२०)

इत्यादौ अपि हि धर्मशब्देन सामानाधिकरण्यम् आत्मनो दर्शितं गुरुणा

अत्र टीका :–

**"अत एव"** इति पदं व्याचष्टे **'यतः'** इति। **विमर्श एव**–परामर्श एव, **आत्मनः**–प्रकाशरूपस्य अवभासाख्यस्य प्रमातृतत्त्वस्य, **रूपम्**–स्वभावः, तत इति शषः । **अमुम्**–विमर्शस्य आत्मनः प्रधानरूपतारूपम्, **प्रयोजनरूपम्**–प्रयोजकतया प्रयोजनस्वरूपम्। **"आत्म"** शब्दं व्याचष्टे **'धर्मि'** इति । **धर्मिस्वभावः**– चैतन्याख्यस्य धर्मस्य आश्रयत्वेन धर्मिस्वरूपः, । **"चैतन्य"** शब्दं व्याचष्टे **"धर्म"** इति । प्रथमाविभक्तेर्वाच्यमाह **"सामानाधिकरण्यम्"** इति। **"उदित"** पदं व्याचष्टे **"कथितः"** इति । कुत्र केनोदित इत्यपेक्षायामाह **"भगवता"** इति। ननु किमत्रैव धर्मवाचिशब्देनात्मनः कथनमस्ति उतान्यत्रापीत्यत आह **"चैतन्यम्"** इति । कुत उपलक्षणम् इत्यत आह **"चितिशक्तिः"** इति । **चितिशक्तिरपरिणामिनी** आत्मा भवति, **तद्दृशोः**–आत्मरूपायाः दृशेः, **कैवल्यम्**–औदासीन्यं भवति। **द्रष्टा दृशिमात्रो** भवति इति सूत्रत्रयस्यार्थः । **धर्मशब्देन**–" चितिशक्तिरपरिणामिनी"

1. धर्मिवाचिना—K.S.S.

**अनन्तेन। द्रव्यं हि तत् उच्यते यद्विश्रान्तः पदार्थवर्गः सर्वो भाति च अर्थ्यते च अर्थक्रियायै, तद् यदि न कुप्यते तत् सकलोऽयं तत्त्वभूतभावभुवनसंभारः संविदि विश्रान्तः तथा भवति इति स एव गुणकर्मादिधर्माश्रयभूतपदार्थान्तरस्वभावः तामेव मुख्यद्रव्यस्वरूपाम्[1] आश्रयते इति सैव द्रव्यम्। तत् अनन्तधर्मराशिविश्रमभित्तिभूतायाः तस्याः स**

इत्यादिना, **अनन्तेन**–शेषेण, पतञ्जलिसूत्रेष्वस्य सूत्रत्रयस्य स्थितत्वात्। ननु तर्हि आत्मनः अप्रधानत्वमायातम् पराश्रितो हि धर्मः स्फुटमप्रधानमेवेत्यत आह "**द्रव्यं हि**" इति। **द्रव्यम्**–गुणाश्रयः, प्रधानं वस्तु इति यावत्। तत्किमित्यपेक्षायामाह "**यत्**" इति। न तु तार्किकाभिमतद्रव्येष्विव गुणकर्मादिरूपः पदार्थवर्ग एवेत्यर्थः[2]। **भाति**–घट इव मृदि स्फुरति। पुनः कीदृशो भवतीत्यपेक्षायाम् आह "**अर्थ्यते च**" इति। जनैः **अर्थक्रियायै**–निजनिजार्थक्रियार्थम्, प्रार्थ्यते च, न हि मृदोऽनिष्कृष्टो घटः उदकाहरणार्थं केनापि प्रार्थ्यते। अत्र शिष्याङ्गीकारं ज्ञात्वा "सूचीप्रवेशे मुसलप्रवेशः" इति न्यायमाश्रित्य धर्मितया मतेष्वपि तत्त्वादिषु आत्मधर्मत्वमेव कथयति "**तत्**" इति। भूतानि–महाभूतानि, भावाः–भौतिकानि। धर्माः–आश्रिताश्च, आश्रयाः–धर्मिणः तद्भूतानि पदार्थान्तराणि च तानि, स्वभावः–स्वरूपं यस्य तादृशः। समस्तधर्मधर्मिरूप इत्यर्थः। **तामेव**–अर्थरूपां संविदमेव, **मुख्यद्रव्यस्वरूपाम्**–सर्वाश्रयत्वेन प्रधानद्रव्यरूपाम्, न तु तार्किकाभिमतद्रव्याभासरूपाम्, **सैव**–संविदेव, **द्रव्यम्**, अन्यत्त सर्वं गुणरूपमेवेत्यर्थः। अत एव श्रीभगवता चोक्तम्:–

"सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज"

इति। अत्र धर्मशब्देन सकलभावजातमेवोक्तम्, न तु चातुर्मास्यादिको धर्मः। अस्मच्छ-

1. मुख्यद्रव्यरूपाम्—K.S.S.
2. Bhāskara is here contrasting the Śaiva and the Tārkika conceptions of द्रव्य. The idea is sufficiently familiar, but how the तार्किक view can be got from न तु······ इत्यर्थः is not clear.

**एव धर्मः चैतन्यम् इति कर्तृकृदन्तात् उत्पन्नेन भावप्रत्ययेन संबन्धाभिधायिनापि प्राधान्येन दर्शितः। तथा हि संबन्धविश्रान्तस्य प्रतीतेः, द्रव्यरूपस्य च संबन्धिनः प्रकृत्या उक्तत्वात् चितिक्रियारूपं धर्मं संबद्धम् अवगमयता ष्यञा निष्कृष्टांशः[1] प्रत्यायितो भवति। चितिक्रिया च चितौ कर्तृता, स्वातंत्र्यं संयोजनवियोजनानुसंधानादिरूपम् आत्ममात्रतायामेव**

---

ब्देन चैतन्यम्, न तु देहावच्छिन्नविज्ञानम्। ततश्चैवमत्रार्थः, सर्वं भावजातं परित्यज्य-वस्तुबुद्ध्यविषयतां नीत्वा, एकं मां—तत्र सारतया स्थितम्, प्रकाशमात्रस्वरूपं सन्मात्ररूपञ्च किमपि तत्त्वम्, शरणं व्रज—स्वस्यापि सत्ताप्रदत्वेन जानीहि इति, सर्वपापानि च तत्र बन्धकं भावजातमेव ज्ञेयम्। बन्धनस्यैव पापत्वात्, न तु अदृष्टस्य कस्यापीत्यलं प्रपंचेन। उपसंहारं करोति **"तत्"** इति। **तस्याः**-संविदः, **स एव**-संविद्रूप एव, **कर्तृकृदन्तात्**-"कर्तरि कृत्" इति सूत्रेण चेतयतीति कर्तरि विहितः यः कृत्प्रत्ययः "यु" प्रत्ययः सः अन्ते यस्य, तादृशात् प्रातिपदिकात्, भावे विहितेन ष्यञा, संबन्धम्—धर्मधर्मिभावम्, **प्राधान्येन**—आत्मस्वरूपत्वेन, **दर्शितः**। भावो हि स्वरूपमेव। एतदेव समर्थयितुमुपक्रमते **"तथा हि"** इति। संबन्धिनोर्विश्रान्तस्य **संबन्धिविश्रान्तस्य, द्रव्यरूपस्य**-चेतनाख्यधर्मिरूपस्य, **प्रकृत्या**-चित्याख्यधातुप्रकृत्या। **"चितिक्रियारूपम्"** इति, क्रियाया एव बाहुल्येन धात्वर्थत्वादिति भावः। **धर्मम्**-चितिक्रियाख्यम्, **संबद्धम्**-चेतनेन संबन्धयुक्तम्, **अवगमयता**-भावे विहितत्वेन सूचयता, **ष्यञा**-ष्यञ् प्रत्ययेन, **निष्कृष्टांशः**-चितिक्रियारूपः चेतनात् पृथक्कृतो भागः, **प्रत्यायितो भवति**—बोधितः स्यात्। तदुक्तम्ः—

"यस्य हि गणस्य द्रव्ये भावाच्छब्दनिवेशः तदभिधाने तात्वौ भवतः"

इति। तात्वयोश्चात्र सर्वभावप्रत्ययोपलक्षणत्वम्। ननु भवतु ततः किमित्यतः **"चित्"** इति पदं व्याख्यातुमाह "**चिति**" इति। चितिक्रिया च "अहम्" इति भवति इति योजना। किंस्वरूपासौ चितिक्रियेत्यपेक्षायामाह **"चितौ कर्तृता"**

---

1. निष्कृष्ट एवांशः—K.S.S.

**जडवत् अविश्रान्तत्वम् अपरिच्छिन्नप्रकाशसारत्वम् अनन्यमुखप्रेक्षित्वम् इति । तदेव अनात्मरूपात् जडात् संयोजनवियोजनादिस्वातंत्र्यविकलात् वैलक्षण्यादायि**[1] **इति । तदेवं परत्वेन प्रधानतया अभिसंधाय आत्मा चेतन इति वक्तव्ये धर्मान्तराधरीकरणाय विमर्शधर्मोद्धुरीकरणाय च 'आत्मा**

इत्यादि "**अनन्यमुखप्रेक्षित्वम्**" इत्यन्तम् । **चितिक्रिया च**–चेतनाख्यात् द्रव्यात् ष्यञा निष्कृष्टा चित्याख्या क्रिया च, **चितौ**–चेतयतीति कर्तृप्रत्ययान्त-चितिशब्दवाच्ये चेतने, स्थिता, **कर्तृता**, क्रियाया एव हि कर्ता कर्ता भवति, अन्यथा सामथ्यपि गौणकर्तृत्वात्, **जडवत् आत्ममात्रतायामविश्रान्तत्वम्**–जडन्यायेन स्वरूपमात्रे स्थित्यभावः, स्वं प्रति परान् प्रति च ग्राहकत्वमिति यावत् । एतेन "**चित्क्रियाचितिकर्तृतातात्पर्येण**" इति समासपदव्याख्या । तथा हि चित्क्रिया एव चितिकर्तृता-चितौ कर्तृता, तस्याः यत्तात्पर्यं तेन, चित्क्रियैव चितिकर्तृता यथा ज्ञायते इत्यभिप्रायेणेत्यर्थः । "**तेन**" इत्यादि श्लोकशेषं व्याचष्टे "**तदेव**" इति । **तदेव**—अहं-रूपचितिकर्तृत्वमेव, **वैलक्षण्यादायि**-आत्मभेदकारि, तेष्वहंपरामर्शासंभवादिति भावः । एतदवष्टंभेन शिवसूत्रस्य स्फुटं व्याख्यां करोति अस्य श्लोकस्य च संक्षिप्तार्थं कथयति "**तदेवम्**" इति । **परत्वेन**–एतन्निष्ठत्वेन, **अभिसन्धाय**–चेतसि कृत्वा, **धर्मान्तराधरीकरणाय**–नित्यत्वाद्यन्यधर्मगौणीभावापादनाय, **विमर्शधर्मोद्धुरीकरणाय च**–अहंविमर्शमुख्यीकरणाय च। अत्र चाहंविमर्शस्य प्रकाशजीवितभूतस्य अद्वैतस्थिरताकरणाय आत्मधर्मत्वमवधूय आत्मस्वरूपत्वमेवो-क्तम्, न च तावता आत्मनो वस्तुतः ततो भेदः शङ्क्यः, अत्र हि शिष्यबोधनमा-त्रप्रयोजना एव सर्वाः प्रक्रियाः, बोधनञ्च अद्वैतविषयमेव तेन यावन्मात्रेणाद्वैत-सिद्धिः तावन्मात्रमेव ग्राह्यम्, न तु बलादायातं द्वैतमपि, अपि तु ततो वमुख्यमेवा-श्रयणीयम्, शब्दस्य च द्वैतापादकत्वमपरिहार्यमेव । तदुक्तम् :–

"यदभिन्नं स्वसंवित्तौ तत्परस्य यदोच्यते ।
तदा भिन्नमिवाभाति शाब्दीं भूमिमुपाश्रितम् ॥"

1. तदेव—K.S.S.

**चैतन्यम्' इत्युक्तम्। चित्क्रियाचितिकर्तृतातात्पर्येण इति समासः। "अर्धयुक् पादविश्रान्तिः" इति हि काव्ये समयः, न शास्त्रे। यदि वा चित्क्रिया आत्मा उदितः चितिकर्तृता च इति पृथगेव। एवं तु न क्वचित् पठितम्॥ १२॥**

---

इति। अतोपि परमार्थविचारे तु मनसोप्यत्र द्वैतापादकत्वमेव, अत एव यावदहमिति स्फुरति तावत् परिच्छिन्नप्रमातृत्वस्पर्श एव आयाति, अतश्चात्र स्वयं सदास्फुरणशीले अहंपरामर्शे समाधानमेव कार्यम्। तदुक्तम्:—

"हन्त रहस्यं भणामो मूढा मा भ्रमत गर्भगोलेषु।
अत्यासन्नं हृदयं परिधारयत तस्य चोद्योगम्॥"

इति। तदपि वा न तत्रारोहति समाधेयत्वेन परिच्छिन्नतापातात्। तदुक्तम्:—

"त्यजावधानानि ननु क्व नाम धत्सेऽवधानं विविशन्स्वयं तत्।
पूर्णेऽवधानं न हि नाम युक्तं नापूर्णमभ्येति च सत्यभावम्॥"

इति। असमाधानं च दोष एव इति अनुग्रहरूपस्य तीव्रतरशक्तिपातस्यैवात्र साम्राज्यम्। तदुक्तम्:—

"अनल्पकल्पनातल्पत्रोटनाटंकधर्मणः।
नानुग्रहादृते किंचिच्छेषवृत्तौ प्रयोजनम्॥"

इति। अलमनाख्ये वस्तुन्युन्मत्तप्रलापैः। सूचनया कथितं समासं स्फुटत्वेन कथयति **"चित्क्रिया"** इति। ननु कथमयं समासः संभवति न हि पूर्वार्धस्योत्तरार्धेन संबन्धः क्वापि दृश्यते इत्यत आह **"अर्ध"** इति। **अर्धयुक्**—अर्धे योगः, न तु परार्धेन सह पूर्वार्धस्य योगः। **पादविश्रान्तिः**—पादे विश्रान्तिः—विरामः, **शास्त्रे**—शिवप्रणीतादौ। पक्षान्तरमाह **"यदि वा"** इति। तर्हि एवमेवास्तु किमित्यप्रसिद्धाश्रयणं करिष्यामः इत्यत आह **"एवम्"** इति। शिष्यप्रशिष्यपरंपरया एतन्नैव श्रुतमित्यर्थः।

अत्रायं संक्षेपः। अत एव—अवभासस्य विमर्शस्वभावत्वादेव, चित्क्रियाचितिकर्तृतातात्पर्येण हेतुना आत्मा चैतन्यमुदितः—"चैतन्यमात्मा" इति सूत्रे शिवन कथितः। हि—यस्मात्कारणात्, सः—आत्मा, तेन—चैतन्येन, जडाद्विलक्षणो भवति भवति च

**ननु यथा प्रकाशोऽप्रकाशश्च इति उभयमपि स्वात्मनि, ततश्च प्रकाश इति उक्ते जडात् न वैलक्षण्यम् उदितं स्यात्, तद्वत् विमर्शोऽपि अविमर्शोऽपि च स्वात्मनि, इति तेनापि कथं वैलक्षण्यं जडाजडयोः इत्याशङ्क्याह :—**

**चितिः प्रत्यवमर्शात्मा परा वाक्स्वरसोदिता ।**
**स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः ॥ १३ ॥**

**चेतयति इत्यत्र या चितिः चितिक्रिया तस्याः प्रत्यवमर्शः स्वात्म-चमत्कारलक्षण आत्मा स्वभावः। तथा हि—घटेन स्वात्मनि न चमत्क्रि-**

---

बाहुल्येन प्रधानस्य धर्मस्य स्वरूपतया निर्देशः मनोधर्मस्य संकल्पस्येव मनस्तया इत्यलम् ॥ १२ ॥

अथ त्रयोदशस्य श्लोकस्यावतरणिकां करोति **"ननु"** इति ।

अत्र टीका :—

**उभयम्**—युगलकम्, **स्वात्मनि** स्थितं भवति नत्वन्योन्यं प्रति वैलक्षण्या-पादकं भवति निर्विकल्पत्वात्, भेदापादनस्य च विकल्पकार्यत्वात्, **"तद्वद्विमर्शोऽपि अविमर्शोऽपि च"** इति उभयं च, **स्वात्मनि** स्यात्, **इति**—अतः कारणात्, **कथं तेनापि**—विमर्शयुगलकेनापि, **जडाजडयोर्वैलक्ष्यण्यम् इत्याशङ्क्य**—एवंरूपां शङ्कां कृत्वा, **आह**—कथयति **"चितिः"** इत्यादि।

अत्र टीका :—

**"चितिः"** इति शब्दस्य व्याख्यां करोति **"चेतयति"** इति। **चेतयतीत्यत्र या चितिः**, अस्मिन् विग्रहे स्थिता या धातुप्रकृतिवाच्या चित्याख्या क्रिया न तु कर्तृविहितकृत्प्रत्ययान्तवाच्या चितिः, अत एवोक्तं **"चितिक्रिया"** इति । **"प्रत्यवमर्श"** पदं व्याचष्टे **"स्वात्म"** इति । **स्वात्मचमत्कारलक्षणः**— "अहम्" इतिस्वविषयास्वादरूपः। **"आत्मा"** इति पदं व्याचष्टे **"स्वभाव"** इति। एतेन प्रत्यवमर्श आत्मा यस्याः सा इति विग्रहोऽस्य पदस्य सूचितः। कथमस्याः स स्वभाव इत्यत आह **"तथा हि"** इति। **न चमत्क्रियते**—"अहम्"

यते, स्वात्मा न परामृश्यते, न स्वात्मनि तेन प्रकाश्यते, न अपरिच्छिन्नतया भास्यते, ततो न चेत्यत इति उच्यते। चैत्रेण तु स्वात्मनि अहमिति संरम्भोद्योगोल्लासविभूतियोगात् चमत्क्रियते, स्वात्मा परामृश्यते, स्वात्मन्येव प्रकाश्यते, इदमिति यः परिच्छेद एतावद्रूपतया तद्विलक्षणीभावेन नीलपीतसुखदुःखतच्छून्यताद्यसंख्यावभासयोगेन अवभास्यते[1], ततः चैत्रेण चेत्यते इति उच्यते। एवं च विमर्शः स्वात्मनि अवि-

---

इति स्वविषय आनन्दो नानुभूयते। अस्य व्याख्यां स्वयं करोति "**स्वात्मा**" इति। **परामृश्यते**–परामर्शविषयतां नीयते, अत एव **न प्रकाश्यते**, अत्र स्वयमेव व्याख्यां करोति "**न**" इति। **अपरिच्छिन्नतया न भास्यते**–"अहम्" इति अपरिच्छिन्नाभासविषयेण न भूयते, प्रत्युत "इदम्" इति परिच्छिन्नाभासविषयेण भूयते, ततः कारणात् **इति उच्यते**–कथ्यते, इति किमिति? **तेन**-घटेन, **न चेत्यते**–चेतनक्रियाकर्तृत्वं न आसाद्यते इति। ननु अचेतनवर्गस्येयं वार्ता भवतु चेतनवर्गस्य तु कीदृशी वार्ता इत्यत आह "**चैत्रेण**" इति। **स्वात्मनि**–स्वविषये, "अहम्" इति यः संरम्भोद्योगः–उद्यन्तृतां प्रत्युद्योगः, तस्य यः उल्लासः स एव विभूतिः–ऐश्वर्यम्, तस्याः योगात्, **स्वात्मन्येव**, न तु परप्रमातर्यपि, **प्रकाश्यते**–प्रकाशविषयेण भूयते, स्वप्रकाशत्वादिति भावः। **तद्विलक्षणीभावेन**, "अहम्" इति यावत्। यस्तु "अयं चैत्रः", इति परिच्छिन्नतया परामर्शः सः तद्देहादिनिष्ठ एवेति भावः। तच्छून्यता–नीलादिशून्यता, एतेन सौषुप्तावभासस्य ग्रहणम्, **अवभास्यते**–नीलादिग्राहकत्वेनापि स्वात्माऽनुभूयते "अहं नीलादिज्ञानवान्" इति। **ततः**– तस्मात्कारणात्। उपसंहारं करोति "**एवञ्च**" इति। **एतत्**, अवतरणिकायां शङ्कितमित्यर्थः। चितिर्हि चेतनक्रिया सा एव प्रत्यवमर्शस्वरूपम् इति तस्य प्रत्यवमर्शस्य स्वाश्रयादजडात् जडस्य भेदद्योतने सामर्थ्यम् इति भावः। कथमेतदित्यपेक्षायामाह

---

1. आभास्यते—K.S.S.

**मर्शोऽपि स्वात्मनि इत्यसिद्धमेतत् । विमर्शो हि सर्वसहः परमपि आत्मीकरोति, आत्मानं च परीकरोति, उभयम् एकीकरोति, एकीकृतं द्वयमपि न्यग्भावयति इत्येवंस्वभावः। प्रत्यवमर्शश्च आन्तराभिलापात्मक-[1] शब्दनस्वभावः, तच्च शब्दनं सङ्केतनिरपेक्षमेव अविच्छिन्नचमत्कारात्मकम्**

"**विमर्शो हि**" इति । **विमर्शः**–चितिक्रियारूपः प्रत्यवमर्शः, **सर्वसहः** न तु प्रकाशत्वाद् बाह्यप्रतिबिंबग्रहणमात्रसमर्थः, अत एव **परमप्यात्मीकरोति**; भूतावेशसमये इत्यर्थः, तत्र हि अहम् अमुकवटस्थो यक्ष इत्यादिज्ञानमनुभूयते । पुनः किं क्रियते इत्यत आह "**आत्मानम्**" इति। "नाहं चैत्रोऽस्मि" इति भावः। **उभयमपि एकीकरोति**–"य एव वटयक्षः स एवाहम्" इति। "**द्वयम्**" इति। **द्वयम्**–आत्मानं परञ्च "अहं चैत्रोपि नास्मि यक्षोपि नास्मि" इत्यर्थः । तदुक्तम्:–

"रज्ज्वां नास्ति भुजंगस्त्रासं कुरुते च मृत्युपर्यन्तम् ।
भ्रान्तेर्महती शक्तिर्निश्चेतुं केन शक्यते नाम ॥"

इति। एतेन पदद्वयेनैव अभिप्रेतोऽर्थः सिद्धः, शेषाणि विशेषणानि प्रत्यवमर्शस्य अत्याश्चर्यत्वद्योतनमात्रपराणीति ज्ञेयम् । तत्र "**परा वाक्**" इति पदं व्याचष्टे "**प्रत्यवमर्शश्च**" इति। **प्रत्यवमर्शश्च**–चितिरूपतया प्रोक्तः प्रत्यवमर्शश्च, आन्तरञ्च तत्–बाह्ये मध्यमाभावेन स्थितम्, न तु पश्यन्तीपदमारूढं वैखरीभावं वा पतितम्, आन्तरत्वे तु पराभावेन स्थितम्, अभिलापात्मकम्–व्यक्तवाग्रूपम्, न तु कुक्कुटादिरुतवत् अव्यक्तम्, शब्दनम्–शब्दोच्चारणं सः स्वभावः यस्य तादृशः, शब्दस्मृतेरेव विकल्परूपप्रत्यवमर्शत्वात्, एतेन वाक्त्वं साधितम् । पराशब्दवाच्यं पूर्णत्वं साधयति "**तच्च**" इति । **तच्च शब्दनम्**–प्रत्यवमर्शस्वरूपभूतं शब्दनम्, **सङ्केतनिरपेक्षमेव**–बाह्यशब्दवत् सङ्केतापेक्षारहितमेव, अन्यथा सद्योजातबालादौ तदुत्पादो न स्यात्, तस्यापि हि सूक्ष्मः "अहम्" इति परामर्शो विद्यते एव, अन्यथा स्वात्मार्थं स्तन्याद्यभिलषणमयुक्तं स्यादिति भावः। तथा अविच्छिन्नः–इदन्तास्पर्शाभावेन परमात्मनः अप्रच्युतः यः चमत्कारः–

1. अन्तरभिलापात्मक—K.S.S.

अन्तर्मुखशिरोनिर्देशप्रख्यम् अकारादिमायीयसाङ्केतिकशब्दजोवितभूत[1]—नीलमिदंचैत्रोऽहमित्यादिप्रत्यवमर्शान्तरभित्तिभूतत्वात्, पूर्णत्वात् परा, वक्ति विश्वम् अभिलपति[2] प्रत्यवमर्शेन इति च वाक्, अत एव सा स्वरसेन

"अहम्" इति स्वरूपः स्वरूपास्वादः स आत्मा यस्य तादृशम्, अत एव अन्तर्मुखः यः शिरोनिर्देशः–शिरःकम्पादिना कृतः वस्तुनिर्देशः तस्य प्रख्यम्–सदृशम्, यद्यप्यत्रापि सङ्केतो विद्यत एव, "एतावन्मात्रस्तनिका" इत्यादौ अभिनये हि सङ्केतो विद्यत एव तथाप्यस्फुटताऽभिप्रायेणेदमुक्तम्। तथा अकारादयः ये मायीयाः साङ्केतिकशब्दाः–भेदरूपत्वेन मायाकार्यसङ्केतविषयगवादिशब्दाः ते संस्कारभावेन जीवितभूतानि येषां तानि च तानि "नीलमिदम्" "चैत्रोहम्" इत्यादीनि प्रत्यवमर्शान्तराणि–अन्ये बाह्याऽऽन्तरवस्तुविषयाः विकल्परूपाः प्रत्यवमर्शाः, तेषां भित्तिभूतत्वात्–आधारतया स्थितत्वात्। तदुक्तम् :–

"गुणादिस्पन्दनिष्यन्दाः सामान्यस्पन्दसंश्रयात्।
लब्धात्मलाभाः"

इति। **पूर्णत्वात्**, एवंरूपया पूर्णतयेत्यर्थः, पराशब्दस्य हि पूर्णत्वमेवार्थः, तथा च गर्भस्थितसकलपश्यन्तीमध्यमावैखरीरूपसकलवाक्प्रपंचा इत्यर्थः। एतेन परात्वं साधितम्। समुच्चयेन वाक्शब्दस्य व्याख्यानं करोति "**वक्ति**" इति। "**वक्ति**" इति पदं व्याचष्टे "**अभिलपति**" इति। **प्रत्यवमर्शेन**—प्रत्यवमर्शवृत्त्या, न तु उच्चारवृत्त्या इत्यर्थः। "**च**" शब्दः समुच्चये पूर्वव्याख्यया सह इमां व्याख्यां समुच्चिनोति। "**स्वरसोदिता**" इति पदं व्याचष्टे "**स्वरसेन**[3]" इति। स्वः–स्वात्मभूतः यः रसः–आस्वादः, न तु कस्यापि केनापि प्रयत्नेन,

1. भूतं नीलमिदं चैत्रोऽहम् इत्यादि—K.S.S.
2. अपलपति—K.S.S.
3. 'चित्' इति—C. The explanation of स्वरसोदिता begins with स्वरसेन and not with चिद्रूपतया। Hence we have substituted स्वरसेन for चित्।

चिद्रूपतया स्वात्मविश्रान्तिवपुषा उदिता सदा[1]नस्तमिता नित्या अहमित्येव । एतदेव परमात्मनो मुख्यं स्वातन्त्र्यम् ऐश्वर्यम् ईशितृत्वम् अनन्यापेक्षित्वम् उच्यते । परापरं तु इदंभावरूपस्य प्रत्यवमर्शस्य अख्यातिप्राणस्य उद्बोधमात्रेऽपि अहंभाव एव विश्रान्तेः श्रीसदाशिवादिभूमौ पश्यन्तीदशायाम् । अपरं तु इदंभावस्यैव निरूढौ मायागर्भाधि-

---

स्वभावेन इति यावत् । स चास्याः चिद्रूपतैव इति "चिद्रूपतया" इत्युक्तम् । कीदृश्या ? स्वात्मनि या विश्रान्तिः–"अहम्" इति विश्रमणम् सा वपुः यस्यास्तादृश्या । **"उदिता"** इति पदं व्याचष्टे **"सदा"** इति । **सदानस्तमिता** सदोदितेत्यर्थः, सकृद्विभातेति यावत् । तदुक्तम् :–

"सकृद्विभातोयमात्मा"

इति । अस्य पदस्यापि स्वयमेव व्याख्यां करोति **"नित्या"** इति । **"अहम्"** **इत्येव,** नित्याहन्ताभावेन स्फुरणशीलेत्यर्थः । द्वितीयार्धं व्याख्यातुमाह **"एतद्"** इति । **एतदेव** च–प्रत्यवमर्श एव च, स्वातन्त्र्यशब्दापेक्षं नपुंसकत्वम्, **परमात्मनः**-प्रकाशरूपस्य अपरिमितप्रमातुः, न तु ग्राहकाभिमतस्य मितप्रमातुः, तस्य परिमिताहन्तास्पदत्वात् । **"ऐश्वर्य"** पदं व्याचष्टे, **"ईशितृत्व"** इति । पर्यायान्तरमाह **"अनन्य"** इति । **"उच्यते"** इति, पण्डितैरिति शेषः । नन्वत्र परात्वं भवतु परापरात्वन्तु अस्याः कुत्रास्तीत्यत आह **"परापरम्"** इति । **अख्यातिप्राणस्य**–उपर्यपि मायातत्त्वस्पर्शात् मायाजीवितस्य, **उद्बोधमात्रेपि**–प्रादुर्भावमात्रेऽपि, न तु स्वकार्योन्मुख्ये, आदिशब्देन ईश्वरादेर्ग्रहणम् । यद् वक्ष्यति :–

"ईश्वरो बहिरुन्मेषो निमेषोन्तः सदाशिवः"

इति । ईश्वरदशायाम् अहन्तेदन्तयोः समप्राधान्येऽपि ब्रह्मादिभ्योऽतिशययुक्तत्वात् श्रीसदाशिवेन सह समकक्षतया कथनम् । अपरात्वं कुत्रास्तीत्यपेक्षायामाह **"अपर"** इति । **निरूढौ**–विश्रान्तौ । ननु तर्हि श्रीसदाशिवादीनामपि

---

1. सततम्—K.S.S.

कृतानामेव विष्णुविरिञ्चेन्द्रादीनाम्, तत्तु तेषां[1] परमेश्वरप्रसादजमेव । इति अन्यनिरपेक्षतैव परमार्थत आनन्दः, ऐश्वर्यम्, स्वातन्त्र्यम्, चैतन्यम् । तस्मात् युक्तमुक्तम्

'.........तेन जडात्स हि विलक्षणः ।'

इति ॥ १३ ॥

प्रधानागमेष्वपि एतत् प्रदर्शितमेव इति निरूपयति :—

**सा स्फुरत्ता महासत्ता देशकालाविशेषिणी ।**
**सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः ॥ १४ ॥**

---

ऐश्वर्यं स्यादेवेत्यत आह "तत्तु" इति । तत्-ऐश्वर्यम्, **तेषाम्**-सदाशिवादीनाम्, **परमेश्वरप्रसादजम्**-परप्रकाशरूपपरशिवप्रसादजम् । तदुक्तम् :-

"एते तदीयैश्वर्यविप्रुड्भिरीश्वरीभूताः"

इति । अथवा कथमैश्वर्यादिरनन्यापेक्षित्वस्वरूपत्वमित्यपेक्षायामाह **"परापरम्"** इति । उपसंहारं करोति **"इति"** इति । **इति**-अतः कारणात् । एतदवष्टंभेन फलितं समर्थनीयं सिद्धत्वेन कथयति **"तस्मात्"** इति । प्रत्यवमर्शस्य हि जडाजड-भावविवेचकत्वं स्फुटमेवानेन श्लोकेन कथितमिति भावः ॥ १३ ॥

अथ चतुर्दशश्लोकस्यावतरणिकां करोति **"प्रधान"** इति ।

अत्र टीका :-

**प्रधानागमेषु**-महाऽद्वैतवादिषु मालिनीविजयादिप्रधानशास्त्रेषु । एवमव-तरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । **"सा स्फुरत्ता"** इति ।

अत्र टीका :-

प्रकृतिचितिरूपप्रत्यवमर्शपरामर्शपरं **"सा"** इति पदं स्फुटार्थत्वेन अव्याख्यया **"स्फुरत्ता"** इति पदं व्याचष्टे **"इह"** इति । इह-अत्र व्यवहारविषया

---

1. एषाम्—K.S.S.

इह घटः कस्मात् अस्ति, खपुष्पं[1] कस्मात् नास्ति इत्युक्त इति-[2]वक्तारो भवन्ति घटो हि स्फुरति मम न तु इतरत् इति। तदेतत् घटत्वमेव यदि स्फुरत्त्वं स्फुरणसंबन्धः, तत् सर्वदा[3] सर्वस्य स्फुरेत् न कस्यचिद्वा, तस्मात् मम स्फुरति इति कोऽर्थः, मदीयं स्फुरणं स्पन्दनम् आविष्टम्[4] इति। स्पन्दनञ्च किञ्चिच्चलनम्, एषैव च किञ्चिद्रूपता यत् अचलमपि

भावभरिते जगति, **घटः कस्मात्**–अर्थतः कारणात्, **अस्ति**–सत्तां भजते, तस्य अस्तित्वेन प्रसिद्धत्वात्, **खपुष्पं कस्मान्नास्ति**, अस्यापि नास्तित्वेन प्रसिद्धेः, **इत्युक्ते**–निर्णयपरेण केनापि पृष्टे सति, **इतिवक्तारः** एवमुत्तर-कर्तारः **भवन्ति**, इति किमिति ? **हि**-यस्मात्, **घटः मम स्फुरति**-मद्बोधे स्फुरणकर्ता भवति, अतः अस्तीति भावः। **इतरत्**–खपुष्पम्, न स्फुरति, अतो नास्तीति भावः। ननु ततः किमित्यत आह "**तदेतत्**" इति। **तत्**–तस्मात्कारणात्, **एतत्**–भासमानम्, **घटत्वम्**–घटत्वाख्यः स्वभाव एव, **स्फुरत्त्वम्**–स्फुरणकर्तृत्वम्, अस्य पर्यायमाह **स्फुरणसंबन्धः**–स्फुरणक्रियासंबन्धः, कर्तुः क्रियासंबन्धस्य युक्तत्वात् अन्यथा कर्तृत्वायोगात्, **तत् सर्वदा सर्वस्य स्फुरेत्**–न हि घटस्य घटत्वं कंचित् प्रत्येव दृश्येत, **वा**–पक्षान्तरे, अस्फुरणस्वभावत्वेऽङ्गीक्रियमाणे **कस्यचिन्न स्फुरेत्**, विशेषाभावात्, न चैतद्युक्तं स्फुरणाविष्टस्य एकस्यैव तत्स्फुरणात् इति भावः। ननु तर्हि किमत्र वाच्यमित्यत आह "**तस्मात्**" इति। उत्तरमाह "**मदीयम्**" इति। **मदीयम्**–मम प्रमातुः संबन्धि, **स्फुरणम्**–प्रकाशरूपा स्फूर्तिः, **स्पन्दनम्**–घटविषयीकरणरूपं किंचिच्चलनम्, **आविष्टम्**, इति, एवमर्थो भवतीत्यर्थः। ननु स्पन्दनं किमुच्यते इत्यत आह "**स्पन्दनञ्च**" इति। किंचित्त्वस्य निर्णयं करोति "**एषैव**" इति। **चलमाभासते**, चलतया

1. खपुष्पं च—K.S.S.
2. इति उक्ते वक्तारो भवन्ति—K.S.S.
3. तत्सर्वस्य स्फुरेत्—K.S.S.
4. आविष्ट—K.S.S.

चलमाभासते इति, प्रकाशस्वरूपं हि मनागपि नातिरिच्यते, अतिरिच्यते इव इति तत्[1] अचलमेव आभासभेदयुक्तमिव[2] च भाति । तत उक्तम् :—

'आत्मैव सर्वभावेषु स्फुरन्निर्वृतचिद्वपुः ।
अनिरुद्धेच्छाप्रसरः प्रसरद्दृक्क्रियः शिवः ॥'

इति । तथा :—

'अतिक्रुद्धः प्रहृष्टो वा किं करोमीति वा मृशन् ।
धावन्वा यत्पदं गच्छेत्तत्र स्पन्दः प्रतिष्ठितः ॥' (स्प० २२)

इति ।

---

भ्रमेण दृश्यते इत्यर्थः । ननु पारमार्थिकमेव किन्न चलनं स्यादित्यत आह **"प्रकाश"** इति । **नातिरिच्यते**–चलनरूपविशेषयुक्तं न संपद्यते, अतिनिर्मलत्वेन न किंचित्-कल्पत्वात्, अन्यथा अतिनिर्मलत्वायोगात्, अतिनिर्मलं हि तदुच्यते यत् स्वयम् असद् इव परं प्रतिबिंबतया भासयति, अतिनिर्मलत्वानङ्गीकारे तु प्रकाशत्वाऽयोगः, प्रकृष्टं काशनं हि समलस्य न संभवति मलावृतत्वात्, नकिंचित्त्वे च किंचिद्रूपस्य चलनस्यायुक्तत्वं स्फुटमेव, न हि अतिमुक्तसारे वस्तुनि स्थूलस्य अवस्थानसंभवः, तथापि च यत् प्रतिबिंबतया भासनं तदेव किंचित्त्वेन साधितम्, यद्यपि असतः किंचित्त्वमयुक्तमेव तथापि सत्यताभ्रमग्रस्तान् प्रत्येवमुक्तम् इत्यलं प्रपंचेन । ननु यदि नातिरिच्यते तर्हि स्पन्दोऽस्य नास्त्येवेत्यत आह **"अतिरिच्यत इव"** इति । पारमार्थिकत्वशङ्कानिवारणप्रयोजनम् **"इव"** शब्दग्रहणम् । इति—अतः कारणात् । **तत्**—प्रकाशस्वरूपम्, **अचलमेव सत् आभासभेदयुक्तमिव च**-चलत्वाख्याभासभेदसहितमिव च, **भाति**, तथास्वभावत्वात्, न च स्वभावस्य पर्यनुयोगो युक्त इति भावः ।

अत्र शास्त्रान्तरसम्मतिमाह **"तत"** इति । **"स्फुरन्"** इति, स्फुरत्तायुक्तो भवतीत्यर्थः । **स्पन्दतत्त्वविविक्तये**–किंचिच्चलनरूपस्पन्दस्वरूपविवेचनार्थम्,

---

1. इति अचलम्—K.S.S.
2. आभासभेदयुक्तमेव—K.S.S.

'.................स्पन्दतत्त्वविविक्तये ।' (स्प० २१)

इति ।

'गुणादिस्पन्दनिःष्यन्दाः.............।' (स्प० १९)

इति च । लोकेऽपि विविधवैचित्र्ययोगेन[1] स्पन्दवत्त्वम् । सत्ता च भवन-

सततमुद्युक्तः सन्निति संबन्धः, तत्र अतिक्रुद्धाद्यवस्थासु प्रतिष्ठितः स्पन्दः विशेषस्पन्दाधारभूतः सामान्यस्पन्दो भवति इति योजना । **गुणादिस्पन्दनिष्यन्दाः** गुणत्रयप्रधानाः सुखादिस्पन्दप्रवाहाः,[2] सामान्यस्पन्दसंश्रयात् लब्धात्मलाभाः सन्तः ज्ञस्य परिपन्थिनो न स्युरिति संबन्धः । एतच्च स्पन्दटीकायां वीक्ष्यमिह तु विमर्शरूपस्फुरत्तास्वभावस्पन्दनाममात्रव्यवहारोदाहरणमात्रमेवोपयोगीति मूलकारेणापि तन्मात्रमेव कथितम्, अस्माभिश्च स्तोकं संबन्धमात्र-योजना कृतातिविस्तरभयात् प्रकृतानुपयोगाच्च सम्यङ्निर्णयो न कृत इत्यंन्यथा न भ्रमितव्यमित्यलम् । अयं भावः, यदि प्रत्यवमर्शो नाम न किञ्चित् स्यात् तदैतेषु महारहस्यशास्त्रेषु तत्पर्यायभूतस्फुरत्तायास्तत्स्वरूपस्य स्पन्दस्य च व्यवहारो न स्यात् इति लोकव्यवहारमप्यत्र साधकत्वेनाश्रयति "लोके" इति । विविधानि यानि वैचित्र्याणि तेषां योगेन, **स्पन्दवत्त्वम्**, किञ्चित्क्षोभावेशात् अचलत्वेन गम्भीरत्वमिति विवेकः । एतेन स्फुरत्ताभावः चितिरूपस्य प्रत्यवमर्शस्य साधितः । प्रकाशसान्निध्ये हि स्वरूपप्रत्यवमर्शव्यतिरिक्तो न संभवत्येव तत्सन्निधौ तद्व्यतिरिक्तस्य सर्वस्य वह्निसन्निधाविव तूलराशेरसंभवात्, प्रत्यवमर्शस्तु तदैश्वर्यविजृंभामयत्वेन कल्पितः, न तादृशीमयोग्यतामावहतीत्यलम् ।

1. लोकेऽपि विविधवैचित्र्ययोगेऽपि स्वरूपात् अचलन् जनो गम्भीरः स्पन्दवान् इति उच्यते—K.S.S.

2. Though only a part is quoted in the Vimarśinī, Bhāskara explains the whole kārikā which is as follows :—

गुणादिस्पन्दनिष्यन्दाः सामान्यस्पन्दसंश्रयात् ।
लब्धात्मलाभाः सततं स्युर्ज्ञस्यापरिपन्थिनः ॥

**कर्तृता सर्वक्रियासु स्वातन्त्र्यम् । सा च खपुष्पादिकमपि व्याप्नोति इति**

अथ **"महासत्ता"** इति पदं व्याचष्टे **"सत्ता च"** इति । महदिति अवयवभूतपदं तावदवस्थाप्य विशेष्यभूतं सत्तेति अवयवं व्याचष्टे **"भवन"** इति । भवने–सत्तायाम्, **"कर्तृता"** पदं व्याचष्टे **"सर्व"** इति । अयं भावः, धातुपाठे तावत् 'अस भुवि' इति पठ्यते, भूश्च भवनं तच्च प्रादुर्भावमात्रं न तु नवीन उत्पादः। यदुक्तं श्रीभगवता :–

"नासतो विद्यते भावः"

इति । तस्माद्धातोश्च कर्तरि लट् तदुपरि च शतृप्रत्ययः सोऽपि स्थानिवद्भावेन कर्तर्येव, ततः "श्नसोरल्लोपः" इत्यलोपः, ततः सुप्रत्ययः, सन्निति सिद्ध्यति, स च प्रादुर्भवन्नित्यस्यार्थे, तस्य सतः भावः स्वरूपभूतो येन तत् सन्नित्यच्यते, सा सत्ता भावे तल्प्रयोगात्, एतेन प्रत्ययेन धर्मिणो निष्कृष्टः कर्तृतासाधकः भवनक्रियारूपः केवलो धर्म उच्यते, स च फलतः प्रादुर्भावः, तमेव चाश्रित्य सर्वाः क्रियाः स्वरूपं लभन्ते, पचतीत्यादौ प्रयोगे हि पचन् भवतीत्यादिरर्थ एव परमार्थतोऽस्ति भवनाभावे पाचकत्वायोगात्, अतोऽस्य प्रादुर्भावक्रियाकर्तुः सर्वक्रियाकर्तृत्वं सिद्धमेव सर्वत्र । स्वातन्त्र्यं च प्रत्यवमर्श एव प्रकाशस्य नान्यत् किञ्चित् । प्रादुर्भावश्च प्रकाशस्य सर्वदा स्थितस्याभिव्यक्तिरूपः स्वात्मप्रत्यवमर्श एवेति सिद्धं सत्तायाः चितिरूपप्रत्यवमर्शत्वम् इति। अस्या एव विकल्परूपप्रत्यवमर्शत्वनिवारणाय महच्छब्दप्रयोगं सफलीकर्तुमाह **"सा च"** इति। **सा च**–सत्ता च, **खपुष्पादिकं व्याप्नोति** सर्वक्रियास्वातन्त्र्यात्, नास्तीत्युक्ते हि असन् भवतीति फलतो हि[1] ज्ञायते, ततश्चेदं भवनं भावमात्रनिष्ठभवनवन् न परिमितम् । ननु कथं न परिमितं भावाभावमात्रव्याप्तेः ? सत्यम्, भावाभावव्यतिरिक्तं किमस्ति न वा ? न चेत् तदा फलितमस्मन्मनोरथेन, न हि असतोऽव्याप्यत्वं युक्तम्, तथा चास्यापि व्याप्यत्वं केनापहस्तितम् । तदुक्तम् :–

"समुदेति यथा भावैर्विना भानुर्नभस्तले ।
वेद्यं विनैव भगवन् भवान् केन कृतोदयः ॥"

1. This 'हि' seems to be superfluous.

**महती, देशकालौ नीलादिवत् सैव सृजति इति ताभ्यां विशेषणीया न भवति, यत् किल येन तुल्यकक्ष्यतया भाति तत् तस्य विशेषणं कटक इव**

---

इति। अस्ति चेत्तर्हि सुतराम्, स्वयमेव तत्रापि भवनव्याप्त्यङ्गीकरणात्। ननु तर्हि द्वैतापत्तिः। अहो विस्मृतिः, समनन्तरमेव चितिक्रियायास्तत्कर्तुश्चैकतया व्यपदेशो दर्शितः, अत्रापि स एव न्यायः, अत एव वेदान्तिभिरपि सत्तामात्रमेव ब्रह्मणो रूपमुक्तम्, यत्तु ते विमर्शासहिष्णुत्वमस्य कथयन्ति तदन्यत् किञ्चिदेव। अस्माभिरपि सदाशिवतत्त्वस्य तथा कथनात् परमशिवावस्थामनारूढेष्वेतच्चोद्यानवकाशात् इति। स्वाभिप्रायमुपसंहरति "इति" इति। इति–अतः कारणात्, इयं सत्ता **महती**-अपरिच्छिन्ना भवति, अत एव सूत्रे महासत्तेत्युक्तम् इति भावः। **"देशकालाविशेषिणी"** इति पदं व्याचष्टे "देश" इति, **सैव**–प्रत्यवमर्शरूपा चितिरेव, **सृजति**-विमर्शरूपत्वेन परमप्रकाशस्वरूपाच्च्यावयति, भासयतीति यावत्, विमर्शरूपो विसर्गो हि त्रिधा, स्थूलः, सूक्ष्मः, परश्च। तदुक्तम्:–

"विसर्गस्त्रैधमुच्यते"

इति। तत्र परः आकारवाच्यः आनन्दरूपत्वात्, येनाभेदप्रधानस्य शिवतत्त्वस्य प्रादुर्भावः। एतच्च निराभासादिति मङ्गलश्लोके प्रतिपादितम्। ननु कथं तस्यैवाहंविमर्शरूपस्य शक्तितत्त्वस्य स्वाविर्भावकत्वं युक्तम्? सत्यम्, अत्राविर्भावकत्वकथनं बोधनमात्रप्रयोजनमेव, परमार्थतस्तु सर्वदा सर्वमयमेव तत्तत्त्वम् न तु केनापि क्वचिदेव। तदुक्तम्:–

"वस्तुनि योऽसौ निवसति कार्त्स्न्येन विस्मयनिधये
तस्मै नमो नमः श्रीमते गुरवे"।

इति। गुरुरत्र विमर्शशक्त्या सहैकीभूतः परः शिव एव ज्ञेयः। सूक्ष्मः अ इत्यनेनोच्यते तेन च भेदाभेदप्रधानस्य शिवादेः शुद्धविद्यान्तस्य तत्त्वव्रातस्य प्रादुर्भावः। स्थूलस्वासश्च हकारवाच्यः, तेन भेदप्रधानस्य मायादेस्तत्त्वसमूहस्य प्रादुर्भावः इति स्फुटमेव स्थूलभावेनास्या एव देशकालप्रकृतित्वम्। ननु सृजतु ततः किम् इत्यत आह "इति" इति। **इति**–अतः कारणात्, **ताभ्याम्**–देशकालाभ्याम्, **विशेषणीया न भवति**, न हि तत्सृष्टस्य तद्विशेषणत्वं युक्तम्, तत्सृष्टेः

**चैत्रस्य। न च देशकालौ विमर्शेन तुल्यकक्ष्यौ भातः तयोः इदन्तया तस्य च अहन्तया प्रकाशे तुल्यकक्ष्यत्वानुपपत्तेः। एवं देशकालास्पर्शात् विभुत्वं नित्यत्वं च, सकलदेशकालस्पर्शोऽपि तन्निर्माणयोगात् इति ततोऽपि व्यापकत्वनित्यत्वे। तदुक्तम् :—**

**'महासत्ता महादेवी विश्वजीवनमुच्यते।'**

**इति। सारम् इति यत् अतुच्छं रूपं तत् इयमेव विमर्शशक्तिः, ग्राह्यग्राह-**

---

पूर्वं तदविशिष्टतया सिद्धस्य तस्योत्तरकाले तद्विशेषणताया व्यर्थत्वात्। हेत्वन्तर-माह **"यत्"** इति। कुतो न तुल्यकक्ष्यौ भात इत्यत आह **"तयोः"** इति। **तयोः**–देशकालयोः। **तस्य**–विमर्शस्य, **प्रकाशे**–परप्रकाशविषये प्रतिबिम्बतया स्फुरणे, परप्रमाता हि स्वात्मानमहमिति गृह्णन् तमहंभावमपि स्वात्मविश्रान्त्यैव गृह्णाति, अन्यथा तस्यापि बाह्यविकल्पत्वापातात्, देशकालयोस्त्विदन्तया ग्रहणं स्फुटमेव, तथा च तद्ग्रहणकाले तस्या[1] ग्रहणं नास्ति, तद्ग्रहणकाले च तयोरिति का विशेषणविशेष्यभावकथेति भावः। एतेन फलिते विभुत्वनित्यत्वे अस्याः कथयति **"एवम्"** इति। देशानवच्छेदे विभुत्वं कालानवच्छेदे च नित्यत्वं स्फुटमेवेति भावः। ननु तर्हि

"यथा न देशो देशस्य कालः कालस्य वापरः।

तथा त्वय्यपि भगवन् न तौ भिन्नौ कदाचन"॥

इति न्यायेन देशकालसमानयोगक्षेमत्वमेवास्यायातम् इत्यत आह **"सकल"** इति। **तन्निर्माणयोगात्**–देशकालसर्जनसमये ताभ्यां स्रष्टतया संबन्धात्। **ततोऽपि**, देश-कालाभ्यां बहिरपीत्यर्थः, तयोरेतदन्तर्गतत्वादिति भावः, ततश्च नास्यास्ताभ्यां तुल्यौ योगक्षेमौ इत्यभिप्रायः। अत्र वृद्धसम्मतिमाह **"महा"** इति। **"विश्वजीवनम्"** इत्यनेन देशकालाविष्टत्वमप्युक्तम्, तयोरपि विश्वान्तर्गतत्वात्, यच्च येन जीव्यते न तत्तस्य विशेषणं युक्तम्। **"सैषा"** इति तावदवस्थाप्य **"सारतया"** इति पदं व्याचष्टे **"सारम्"** इति। सारपदवाच्यम् आह **"अतुच्छम्"** इति।

---

1. तस्याः refers to अहन्ता।

काणां यत् प्रकाशात्मकं रूपं तस्यापि अप्रकाशवैलक्षण्याक्षेपिका इयमेव इति श्रीसारशास्त्रेऽपि निरूपितम् :—

'यत्सारमस्य जगतः सा शक्तिर्मालिनी परा ।'

इति । सैषा इति शक्तिप्रत्यभिज्ञानं दर्शितम् । हृदयं च नाम प्रतिष्ठास्थान-

---

**अतुच्छम्**–न तु भावराशिवत् भावमात्रसिद्धम्, अन्यथा जगतः सारदानायोगात्, न हि शशशृङ्गस्य धनुषः सारदाने शक्तिर्दृष्टा, यच्च जगतस्तुच्छता कथ्यते तज्जगत्त्वापेक्षामात्रेण, परमार्थतस्तु सारात् प्रादुर्भूतत्वेन तदपि सार एव। "**इयम्**" इति, समनन्तरप्रोक्तस्वरूपा। ननु कथमस्यास्सारत्वमित्यत आह "**ग्राह्य**" इति। **प्रकाशात्मकं रूपम्**–सारतया स्थितः प्रकाशभागः, घटसारतया स्थितः मृद्भाग इव, **तस्यापि**–ग्राह्यादिगतस्य प्रकाशात्मकरूपस्य च, अप्रकाशेभ्यो यद्वैलक्षण्यम्–भेदः, तस्याक्षेपिका–आक्षेपकारिणी, प्रकाशिकेति यावत्। न केवलं परप्रकाशस्यैव वैलक्षण्याक्षेपिकेयमपि तु सर्वेषां ग्राह्यग्राहकाणाम् इत्यपिशब्दाभिप्रायः। **इति**–एतत्, **श्रीसारशास्त्रे**–मालिनीविजये, "**निरूपितम्**" इति, श्रीपरमेश्वरेणेत्यर्थः। ननु तर्हि जडेभ्यो वैलक्षण्यमेव ग्राह्यग्राहकाणामियं करोति सारत्वं तु प्रकाशस्यैव युक्तम्। पुनरपि विस्मृतिर्जाता किं कुर्मः, प्रकाशादस्या न कोऽपि भेदः, बोधनार्थमेवैकत्र तत्त्वे द्वित्वमारोपितम्। ननु के ते जडाः येभ्यः प्रतियोगिभूतेभ्यो वैलक्षण्यं करोति, ग्राह्याश्चेत्तेषामपि वैलक्षण्यमेव साधनीयम् ? सत्यम्, सारभागमपेक्ष्य तेषां जडेभ्यो वैलक्षण्यमत्राभिप्रेतम्, यस्तु ग्राह्यताख्यः स्वभावः स भेदप्रतियोग्यवेति न काप्यनुपपत्तिः। ननु केन वाक्येनैतत्तत्र निरूपितम् इत्यत आह "**यत्सारम्**" इति। **मालिनी**–नादिफान्तवर्णसमाम्नायरूपमहामंत्रवाच्यत्वेन त्रिकशास्त्ररतैः सङ्केतिता प्रत्यवमर्शशक्तिः, सैव हि स्वान्तः सर्वं जगद्धारयति, **परा**–परारूपा महाद्वैतप्रधानत्वात्, "**इति**" शब्दः श्रीसारशास्त्रवाक्यसमाप्तौ। सूत्रे स्थापितस्य "**सैषा**" इत्यस्य व्याख्यां करोति "**शक्ति**" इति। **शक्तिप्रत्यभिज्ञानम्**–प्रत्यवमर्शरूपायाः चितेः प्रत्यभिज्ञा, स्वदर्शनरीत्या पूर्वं निर्णीतायाः पुनर्दर्शनान्तररीत्या निर्णेतुमुपात्तायाश्चानुसन्धानरूपं प्रत्यभिज्ञानमिति यावत्। "**हृदयम्**" इति व्याचष्टे "**प्रतिष्ठा**" इति। प्रतिष्ठायाः–

**मुच्यते, तच्च उक्तनीत्या जडानां चेतनम्, तस्यापि प्रकाशात्मकत्वम्,[1] तस्यापि विमर्शशक्तिः इति विश्वस्य परमे पदे तिष्ठतो विश्रान्तस्य तस्य इदमेव हृदयं[2] विमर्शरूपं परमन्त्रात्मकं यत्र तत्र[3] अभिधीयते। सर्वस्य हि मन्त्र एव हृदयम्,**

---

स्वस्य विश्वस्य च स्थितेः, स्थानम्, व्यवस्थापकत्वात्, विमर्शेनैव हि प्रकाशस्य भावानां च स्वरूपव्यवस्था भवति, तत्र प्रतिष्ठितस्पन्दरूपया प्रकाशव्यवस्था "स्वभावमवभासस्य"[4] इति न्यायेन विशेषस्पन्दरूपया भावव्यवस्थेति विभागः। हृद्देशे एव हि सर्वभावव्यवस्था सर्वैरनुभूयते इति "सर्वं प्रतीतिसाक्षिकमेव" इति न्यायेनास्या अपि सर्वव्यवस्थापकत्वेन हृदयत्वमेवेति भावः। **"तच्च"**–हृदयं च, **अजडानाम्**–ग्राहकरूपाणामजडवस्तूनाम्, **चेतनम्**–सारतया प्रोक्तः परिच्छिन्नः प्रकाशभाग एव भवति, **तस्यापि**–चेतनस्यापि, **प्रकाशात्मकत्वं** भवति, शुद्धप्रकाशादुत्थितत्वात्, **तस्यापि**–चेतनात्मतया स्थितस्य शुद्धप्रकाशस्यापि, **विमर्शशक्तिः** भवति। मध्ये **"परमेष्ठिनः"** इति पदं व्याचष्टे **"विश्वस्य"** इति। अर्थात् विश्वस्य तत्त्वषट्त्रिंशकात्मनो जगतः, **परमे पदे**–परमशिवरूपे सप्तत्रिंशे स्थाने। **"तिष्ठतः"** इत्यस्य पर्यायमाह **"विश्रान्तस्य"** इति। विगृहीतस्य समस्तत्वेन परामर्शं करोति **"तस्य"** इति। **इदं विमर्शरूपमेव**–प्रत्यवमर्शस्वरूपमेव, पण्डितैः **तस्य**-परमेष्ठिनः, ग्राहकसारविज्ञानसार–शुद्धप्रकाशसारत्वात्, **हृदयम् यत्र तत्र**–सर्वशास्त्रेषु, अभिधीयते। एतेन **"प्रोक्ता"** इत्यस्य व्याख्या। कीदृशम्? **परमन्त्रात्मकम्**–महामन्त्रस्वरूपम्। तदुक्तम्:–

"आदिमान्त्यविहीनास्तु मन्त्राः स्युः शरदभ्रवत्"

इति। हेतुगर्भमिदं विशेषणम्, यतः परमन्त्रात्मकं तत एव हृदयमित्यर्थः।

---

1. प्रकाशात्मत्वम्—K.S.S.
2. तिष्ठतो विश्रान्तस्य इदमेव हृदयम्—K.S.S.
3. तत्र तत्र—K.S.S.
4. स्वभावस्य—C. From the context it is clear that the reference is to the well-known nyāya "स्वभावमवभासस्य". The text has therefore been changed accordingly.

**मन्त्रश्च विमर्शनात्मा, विमर्शनं च परावाक्छक्तिमयम् । तत एवोक्तम् :—**

**'न तैर्विना भवेच्छब्दो नार्थो नापि चितेर्गतिः ।'**

**इति ।**

**'तत्र तावत्समापन्ना मातृभावम्`````` ।'**

---

ननु परमन्त्रात्मकत्वं कथमस्य ? सत्यम्, मन्त्रः—गुप्तभाषणम् तच्च विमर्श एवान्तरशब्दनरूपत्वात्, तच्चाहंपरामर्शत्वात्, परत्वञ्च अस्य विकल्परूपेभ्यः अन्यप्रत्यवमर्शेभ्यः उत्तीर्णत्वात्, अथवा मन्त्रशब्देनात्र लक्षणया मन्त्रवीर्यं लक्ष्यते, अतः परमन्त्रवीर्यरूपमित्यर्थः, मन्त्रवीर्यत्वं च विमर्शस्य स्फुटमेव, अविमृष्टो हि मन्त्रो न किमपि फलं दातुं समर्थः । तदुक्तम् :—

"तदास्य बलिनो[1] मन्त्राः सर्वज्ञबलशालिनः ।
प्रवर्तन्तेऽधिकाराय करणानीव देहिनाम् ॥"

इति । सर्वज्ञबलं ह्यत्रात्मबलरूपं विमर्शनमेवेष्टम् । करणानां च स्फुटमात्मबलेन स्वकार्यसाधकत्वम् इत्युपमानतया ग्रहणम्, महामन्त्रस्य च शैवादिनयेषु बहुप्रकाराः बीजवर्णसमुदायमयाः बहवः सङ्केताः, ते अतिरहस्यत्वात् स्फुटमनुकृत्य वक्तुमयोग्या एवेति निजनिजगुरुभ्य एव ते महासेवापूर्वमासादनीयाः जप्याश्च, अस्माभिस्तु प्रसङ्गात्तद्वीर्यनिर्णय एव कृतः, परमार्थविचारे तु वीर्यमात्रासादनमेव जपादेः फलम्, अधिगतमन्त्रवीर्यास्तु व्यवहारकथास्वपि मन्त्रजपनिष्ठा एव । तदुक्तम् :—

"कथा जपः"

इति । अधिगमस्तु तस्य सदास्थितस्यावधानमात्रेण तत्परत्वमेव न त्वपूर्वोधिगमः, अवधानं च शनैः शनैः जपादिद्वारेण, येषां तद्रहित एवाधिगमस्तीव्रतरभगवच्छक्तिपाताघ्रातेभ्यस्तेभ्यो नम एव । तदुक्तम्:—

"न ध्यायतो न जपतः स्याद्यस्याविधिपूर्वकम् ।
एवमेव शिवाभासस्तं नुमो भक्तिशालिनम् ॥"

इति । ये तु प्रतिदिनं जपं कुर्वन्तोऽपि तद्वीर्येऽवधानं न कुर्वन्ति, सिकताभ्यस्तैलार्थिनां तेषां विधिरेव त्राणम्, अधिगतमन्त्रवीर्यस्य च युगपदेव सर्वमन्त्रोच्चारणमपि

---

1. बलम्—C.

इत्यादि च, इत्यागमेषु। **तत्रभवद्भर्तृहरिणापि :—**

**'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते॥**
**वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।**
**न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी॥'**

**इति।**

**'सैषा संसारिणां संज्ञा बहिरन्तश्च वर्तते।**
**यदुत्क्रान्तौ विसंज्ञोऽयं दृश्यते काष्ठकुड्यवत्॥'**

---

संभवत्येवेत्यलं प्रसक्तानुप्रसक्त्या। ननु कथं मन्त्रात्मकत्वेन प्रत्यवमर्शस्य हृदयत्वमित्यत आह "**सर्वस्य**" इति। **सर्वस्य**—समस्तस्य चेतनवर्गस्य, अचेतनानामेतन्निष्ठत्वेनैव स्वरूपलाभात्, अनेनैव सर्वभावाभावव्यवस्थाकरणात्, अङ्गुष्ठप्रमाणस्य दहरस्य तु एतदाश्रयत्वमात्रेण हृदयत्वादिति भावः। ननु मन्त्रस्य हृदयत्वं भवतु विमर्शस्य तु किमनेनायातम् इत्यपेक्षायामुक्तमपि विमर्शरूपत्वमतिस्फुटीकरणाय पुनः कथयति "**विमर्शनात्मा**" इति। ननु तद्विमर्शनं किंरूपमित्यत आह "**परा**" इति। परा या वाक्—समनन्तरोक्ता चितिरूपा, तस्या या शक्तिस्तन्मयम्, विशेषस्पन्दरूपमित्यर्थः। एवं च ग्राहकवर्गगतस्य विशेषस्पन्दरूपस्य प्रत्यवमर्शस्य मन्त्रत्वसाधनेनापरिमितप्रमातृगतस्य सामान्यस्पन्दात्मकस्य प्रत्यवमर्शस्य महामन्त्रत्वमयत्नसिद्धमेवेति भावः। अत्रागमवाक्यान्युदाहरति "**तत एव**" इति। श्रीशिवेन कर्त्रा, **इत्यादि**—कर्म, इत्येवंरूपेष्वागमेषु उक्तमिति संबन्धः, **तैर्विना**, मन्त्रैर्विनेत्यर्थः, प्रत्यवमर्शप्राणत्वात् सर्वस्येति भावः। "**तत्र तावत्**" इति। **मातृभावम्**—अवर्गादिरूपवर्गाष्टकात्मब्राह्म्यादिमातृभावम्, आदिशब्देनान्येषां वाक्यानां ग्रहणम्। श्रीभर्तृहरिवाक्यान्यप्युदाहरति "**तत्र**" इति। इत्यादि उक्तम् इति योजना। किमुक्तमित्यपेक्षायां तद्वाक्यान्येकदेशतया पठति "**न सोऽस्ति**" इति। "**वाग्रूपता चेत्**" इति। "**सैषा**" इति। आदिशब्देनान्येषां तत्रत्यवाक्यानां ग्रहणम्। वाक्यत्रयेऽप्यत्र प्रत्यवमर्शस्य सर्वात्मकत्वसाधनमेव, विस्तरभयात्तु न

**इत्यादि च। तत् एतेन विदुः इत्येतत् निर्वाहितम्। बौद्धैरपि अध्य-वसायापेक्षं प्रकाशस्य प्रामाण्यं वदद्भिः उपगतप्राय एव अयम् अर्थः, अभिलापात्मकत्वात् अध्यवसायस्य इति ॥ १४ ॥**

**ननु असंख्यशक्तिश्रेणीशोभितवपुषि परमशिवे विमर्शशक्तिरेव इयम् इत्थंकारम् अभिषिच्यते कस्मात् इत्याशङ्क्याह :—**

---

प्रपञ्चितम्। एतदवष्टम्भेन "स्वभावमवभासस्य" इत्यत्र स्थितस्य 'विदुः' इत्येतस्य निर्वाहं करोति '**एतेन**" इति। **निर्वाहितम्**–निराकाङ्क्षीकृतम्, वादिरूपस्य कर्तृभागस्य पूरणादिति भावः। ननु कथं निर्वाहितं बौद्धैरस्यार्थस्या-नङ्गीकरणात् इत्याशङ्क्याह "**बौद्धैः**" इति। **अध्यवसायापेक्षम्**, अध्यवसाया-पेक्षयेत्यर्थः। तदुक्तम् :–

"यथाध्यवसायः प्रकाशः"

इति। **उपगतप्रायः**–बाहुल्येनाङ्गीकृतः न तु सर्वथा, तन्मते विमर्शस्य भ्रमत्वात्, भ्रमस्यापि भ्रान्तमिदमिति भ्रान्तिविशिष्टज्ञानं प्रति प्रमाणत्वं दृश्यत एवेत्यलम्। नन्वध्यवसायस्य प्रामाण्यमुक्तम् न तु प्रत्यवमर्शस्येत्यपेक्षायां हेतुमाह "**अभिलाप**" इति। **अभिलापात्मकत्वात्**–शब्दरूपत्वात्, ततश्चाध्यवसायस्यापि प्रत्यवमर्श-त्वमेवेति सिद्धम्। तन्मतेऽपि प्रत्यवमर्शस्य प्रकाशजीवितत्वात्[1]। "**इति**" शब्दः श्लोकव्याख्यासमाप्तौ॥ १४॥

अथ पंचदशषोडशयोः श्लोकयोरवतरणिकां करोति "**ननु**" इति।

अत्र टीका :–

असंख्याः याः शक्तयः–जगद्गतपदार्थरूपाः शक्तयः। तदुक्तम् :–

"शक्तयोऽस्य जगत् सर्वं शक्तिमांश्च महेश्वरः।"

इति। तासां या श्रेणी–पङ्क्तिस्तया शोभितम्–विशेषितं वपुः–स्वरूपं यस्य तादृशे, **परमशिवे**–शिवशक्तिसामरस्यरूपे परमशिवाख्ये सप्तत्रिंशे तत्त्वे, **इत्थंकारम्**–इत्थं कृत्वा, कुप्रकारेणेति यावत्। **कस्मात्**–कुतो हेतोः, **इयम्**–समनन्तरो-क्तस्वरूपा, **विमर्शशक्तिरेव**–अहंप्रत्यवमर्शशक्तिरेव, **अभिषिच्यते**–अभिषेक-

---

1. प्रकाशजीवितत्वमिति—C.

**आत्मानमत एवायं ज्ञेयीकुर्यात्पृथक्स्थिति ।**
**ज्ञेयं न तु तदौन्मुख्यात्खण्ड्येतास्य स्वतन्त्रता ॥ १५ ॥**
**स्वातन्त्र्यामुक्तमात्मानं स्वातन्त्र्यादद्वयात्मनः ।**
**प्रभुरीशादिसंकल्पैर्निर्माय व्यवहारयेत् ॥ १६ ॥**

सर्वाः शक्तीः कर्तृत्वशक्तिः ऐश्वर्यात्मा समाक्षिपति । सा च विमर्शरूपा इति युक्तम् अस्या एव प्राधान्यम् इति तात्पर्येण उत्तरमुक्तम् । शब्दार्थस्तु अयम्, प्रकाशात्मा परमेश्वरः स्वात्मानं

युक्ता संपाद्यते, महाधिकारिपदे स्थाप्यते इति यावत्। एवमवतरणिकां कृत्वा श्लोकद्वयमुपन्यस्य व्याचष्टे। **"आत्मानम्"** इति।

अत्र टीका :–

तत्र प्रथमं श्लोकद्वयस्य तात्पर्यमाह **"सर्वाः"** इति। **ऐश्वर्यात्मा**–ऐश्वर्यरूपा,[1] **समाक्षिपति**–स्वान्तः करोति, **सा च**–कर्तृत्वशक्तिश्च, **विमर्शरूपा**–प्रत्यवमर्शस्वरूपा, विमर्शपूर्वमेव करणसंभवात्, यस्तु तत्र कायादिव्यापारो दृश्यते सोपि विमर्शपूर्वक एवेति स्फुटमेव विमर्शशक्तेः कर्तृत्वम्। **इति**–अतः कारणात्, **अस्या एव**–विमर्शशक्तेरेव, **प्राधान्यम्**–सर्वशक्तिभ्यः प्रधानता । तदुक्तं श्रीमत्तन्त्रालोके :—

"तेन स्वातन्त्र्यशक्त्यैव युक्त इत्याञ्जसो विधिः"।

इति। अत्र ह्येवमभिप्रायः, तेन इति पूर्वापेक्षम्, यतः स्वातन्त्र्यशक्तिरेव प्रधानं ततः स्वातन्त्र्यशक्त्या युक्त एव भवति भगवान्, तयैव सर्वशक्त्याक्षेपात्, इति विधिराञ्जसः प्रकटो भवति संक्षेपेण सर्वसाधकत्वात् इति। **इति**–एवम्, **तात्पर्येणोत्तरमुक्तम्**, तात्पर्यार्थोऽत्रैवं भवति इत्युक्तमित्यर्थः । अक्षरार्थकथनं प्रतिजानीते **"शब्द"** इति। शब्दार्थमेव दर्शयति **"अयम्"** इति। **"प्रभुः"** इत्यस्य पदस्यार्थमाह **"परमेश्वरः"** इति। 'ज्ञाता' इति भावप्रधानो निर्देशः,

1. ऐश्वर्यरूपः—C.

**ज्ञात्रेकरूपत्वात् अज्ञेयमपि ज्ञेयीकरोति इति यत् संभाव्यते कारणान्तरस्य अनुपपत्तेः दर्शितत्वात् दृढेन संभावनानुमानेन, तदत[1] एव विमर्शशक्तिलक्षणात् कर्तृत्वात् हेतोः भवति, यतो हि अयम् आत्मानं परामृशति ततो विश्वनिर्भरत्वात् तथा नीलादित्वेन चकास्ति। ननु एषैव कुतः संभावना, आत्मानं ज्ञेयीकरोति इति? आह, पृथक्**

---

ज्ञातृत्वमेकं रूपं यस्य सः, तस्य भावस्तत्त्वम् तस्मात्, **अज्ञेयमपि**–ज्ञेयताऽसहमपि, तदुक्तम् :—

"आत्मा यदि भवेन्मेयस्तस्य माता भवेत्परः।
पर आत्मा तदानीं स्यात् स परो यस्तु मीयते॥"

इति। **ज्ञेयीकरोति**–अज्ञेयं सत् स्वयं स्वशक्त्यास्वादनरूपक्रीडार्थं ज्ञेयतया भासयति। इति–एवम्, **यत्संभाव्यते**–सूत्रस्थकुर्यादितिपदस्थलिङ्द्योत्यसंभावनाविषयतां नीयते। कुतः संभाव्यते? **कारणान्तरस्य**–स्वव्यतिरिक्तोपादानादिकारणानां सामग्र्याः, **अनुपपत्तेः**–अयोग्यत्वात्, **दृढेन**–नत्वन्यतर्कवत् शिथिलेन, **संभावनानुमानेन**–"स्यादेतत्"इति श्लोकोक्तेन संभावनारूपेणानुमानेन, **दर्शितत्वात्**। यच्छब्दापेक्षां पूरयति **"तत्"** इति। **तत्**–यच्छब्दोक्तं वस्तु, **"अत एव"** इति सूत्रस्थं पदं व्याचष्टे **"अत एव"** इति। **कर्तृत्वाद्धेतोः**, स्वातन्त्र्याद्धेतोरित्यर्थः। **भवति**, सिद्ध्यतीत्यर्थः। कुत इत्यपेक्षायामाह **"यतः"** इति। **हि**–यस्मात्कारणात्, **अयम्**–प्रकाशरूपः परमात्मा, **यतः**–यस्मिन् स्वांशे, **आत्मानं परामृशति**–अहमिति परामर्शविषयतां नयति, **ततः**–तस्मिन्नंशे, **विश्वनिर्भरत्वात्**–वस्त्ववस्तुरूपसर्वजगद्भरितत्वेन, **तथा नीलादित्वेन**–परामर्शानुगुणेन नीलादिभावेन, **चकास्ति**–भासते, तत्स्वभावत्वात्। अन्यथा भावाभावरूपजगद्भानासंभवात्। न च स्वभावस्य पर्यनुयोगो युक्त इति बहुवारमुक्तम्। अत्र शिष्यः प्रश्नयति **"ननु"** इति। एषा का इत्यत आह **"आत्मानम्"** इति। **"इति"** शब्दः प्रश्नपरिसमाप्तौ। उत्तरं कथयति **"आह"** इति, गुरुरिति शेषः।

---

1. तत एव—K.S.S.

प्रकाशात् बहिर्भूता स्थितिः यस्य तादृक् ज्ञेयं नैव भवति। तुः अवधारणे। तत्र च उक्ता युक्तयः। अभ्युच्चययुक्तिमपि आह, यदि व्यतिरिक्तं ज्ञेयं स्यात् तत् ज्ञातृरूपस्य आत्मनो यत् एतत् ज्ञेयविषयम् औन्मुख्यं स्वसंवेदनसिद्धं दृश्यते तत् न अस्य स्यात्, तेन व्यतिरिक्तविषयौन्मुख्येन अन्याधीनत्वं नाम पारतन्त्र्यम् अस्य आनीयते। पारतन्त्र्यं च स्वातन्त्र्यस्य विरुद्धम्। स्वातन्त्र्यमेव च अनन्यमुखप्रेक्षित्वम्[1]

किमाहेत्यपेक्षायामाह "**पृथक्**" इति। अस्य पदस्य विग्रहं करोति "**प्रकाशात्**" इति। "**तु**" शब्दार्थमाह "**अवधारणे**" इति। एतेन "**पृथक्स्थिति**" इति पदमुत्तरार्धेन योजनीयम् इति सूचितम्। सर्वं वाक्यं सावधारणम् इति न्यायेन सूत्रेऽनुक्तस्यापि एवशब्दस्य ग्रहणम्। उक्ताः, "प्रागिवार्थः" इत्यादिना। **तत्र**–बहिर्ज्ञेयासंभवे, **युक्तयः**–मुख्ययुक्तयः, साक्षात्तत्साधनेन प्रवृत्तत्वात्। ननु तर्हीदानीं मौनमेव कुरु इत्यत आह "**अभ्युच्चय**" इति। **अभ्युच्चययुक्तिम्**–अन्वाचययुक्तिम्, अप्रधानयुक्तिमिति यावत्, स्वतन्त्रताखण्डनप्रसङ्गद्वारेण युक्तित्वादिति भावः। "**आह**" इत्यस्याकाङ्क्षां पूरयति "**तदौन्मुख्यात्**" इत्यादिश्लोकशेषं च व्याचष्टे "**यदि**" इति। **व्यतिरिक्तम्**–स्वतो भिन्नम्, **तत्**–तदा, **आत्मनः**–प्रकाशरूपापरिमितप्रमातुः। ननु कुतो न स्यात् इत्यत आह "**तेन**" इति। **अन्याधीनत्वम्**–स्वव्यतिरिक्तज्ञेयवशीभावम्, **अस्य**–आत्मनः, **आनीयते**–बलात्संपाद्यते। ननु ततः किम् इत्यत आह "**पारतन्त्र्यं च**" इति। ननु तर्हि स्वातन्त्र्यमेव मास्तु इत्यत आह "**स्वातन्त्र्यमेव च**" इति। **अनन्यमुखप्रेक्षित्वम्**–स्वप्रसिद्धौ परानपेक्षा। अयं भावः–आत्मा हि ज्ञातृत्वेनैवात्मा भवति, अन्यथा घटादेरप्यात्मत्वप्रसङ्गात्, अतः ज्ञेयेनैवात्मसिद्धिः, तच्च यदि व्यतिरिक्तं तर्हि स्फुटैवात्मनोऽन्यापेक्षा, परापेक्षाग्रस्त आत्मा चात्मैव

1. अनन्यमुखप्रेक्षित्वलक्षणम्—K.S.S.

**आत्मनः स्वरूपम्, इति व्यतिरिक्तोन्मुख आत्मा अनात्मैव स्यात्। अनात्मा च जडो ज्ञेयं प्रति न उन्मुखीभवति इति प्रसङ्गः। ततः प्रसङ्गविपर्ययात् इदमायातम्—अव्यतिरिक्तोन्मुखः स्वतन्त्रः सन् आत्मानमेव ज्ञेयीकरोति इति॥ १५॥**

**न च केवलं नीलादिरूपमेव ज्ञेयम्, यावत् अत्यक्तकर्तृस्वभावं स्वातन्त्र्येण अपरित्यक्तमेव सन्तम् आत्मानं निर्माय व्यवहारेण ध्यानोपा-**

---

न स्यात्। स्वं तत्त्वं ह्यात्मा, यस्य च परापेक्षा तस्य तदधीनतासमये स्वं तत्त्वं हीयते, परकीयत्वापातात्, तद्धानौ च सातत्यगमनं न स्यात्। सातत्यगन्तृत्वं हि आत्मशब्दार्थः, तच्च लक्षणया स्वरूपे सदा तथैवावस्थानमेव न कुत्रापि सदागमनम्, तत्र गत एव हि प्रायस्तत्रस्थ उच्यते इति तान्तेन[1] निर्देशः। ज्ञेयस्य स्वाव्यतिरिक्तत्वे तु स्वाधीनत्वमेव, तच्च नाधीनत्वम्, यतस्तदेव स्वातन्त्र्यमिति। ननु आत्मत्वमेव मास्तु इत्यत आह **"अनात्मा"** इति। **"नोन्मुखीभवति"** इति, तत्राशक्तत्वात्, न हि[2] जलं तृणलाभौन्मुख्ययुक्तं दृष्टमिति भावः। ननु मा भवतु इत्यत आह **"इति प्रसङ्गः"** इति। एतच्चानिष्टमेवानुभवविरोधात् इति भावः। ननु तर्हि किं कार्यम् इत्यत आह **"ततः"** इति। **प्रसङ्गविपर्ययात्**—पूर्वोक्तप्रसङ्गस्य विपर्ययाद्धेतोः, ज्ञेयं प्रत्यात्मन औन्मुख्यदर्शनादिति यावत्। किमायातमित्यत आह **"अव्यतिरिक्त"** इति॥ १५॥

अथ द्वितीयश्लोकं व्याख्यातुं सङ्गतिं दर्शयति **"न च"** इति। **"न केवलम्"** इत्यस्याकाङ्क्षां पूरयति **"यावत्"** इति। **"स्वातन्त्र्यामुक्तम्"** इति व्याचष्टे **"अत्यक्त"** इति। **"निर्माय"** इति निगदव्याख्यातम्। सङ्कल्पेन स्वयमत्पाद्येत्यर्थः। **"व्यवहारयेत्"** इति व्याचष्टे **"व्यवहारेण"** इति। कृदन्ततावशेन प्रातिपादिकीभूतसुबन्तसोपसर्गधातुप्रकृत्यर्थं स्फुटयति **"ध्यान"** इति,

---

1. तान्त means "by a word ending in 'ता'" i.e. the word स्वतन्त्रता।

2. न हि जलं तृणभादेतौत्मुख्ययुक्तं दृष्टमिति भावः—C.

सनार्चनोपदेशादिना योजयति इति यत् संभाव्यते तदपि अत एव इति संबन्धः। ननु स्वातन्त्र्ययुक्तं च निर्मीयते च इति विरुद्धम् इदम्? अत्राह[1], 'अद्वयात्मनः' संविदेकरूपस्य स्वातन्त्र्यात् हेतोः इदं न न युज्यते, यत् किल मायापदे अतिदुर्घटं प्रतिभाति, तत्संपादने यत् अप्रतिहतं स्वातन्त्र्यं तदेव पुनः स्वातन्त्र्यशब्देन दर्शितम्। 'अत एव' इत्यनेन तु विमर्शशक्तिरूपम् इति अपुनरुक्तम्। अथ वा अत एव स्वातन्त्र्यात् इति सामा-

---

ध्यानादेरेवात्र व्यवहारत्वात्। तृतीयया णिजन्तयुजिना च णिजर्थ उक्तः, तृतीयान्तव्यवहारशब्दात् हस्तिना क्रामतीतिवत् णिजुत्पत्तेः। **योजयति**–विषयत्वाभावेऽपि स्वातन्त्र्यात् विषयतया संबध्नाति। लिङर्थमाह "**संभाव्यते**" इति। यच्छब्दाकाङ्क्षां पूरयति "**तत्**" इति। एतेन पूर्वसूत्रस्थस्यातःशब्दस्य हेतुत्वेनेहापि योजना कृता। शिष्योऽत्र प्रश्नयति "**ननु**" इति। गुरुणा दत्तमुत्तरं कथयितुमाह "**अत्र**" इति। किमाहेत्यपेक्षायां सूत्रस्थम् "**अद्वयात्मनः स्वातन्त्र्यात्**" इति षष्ठ्यन्तपञ्चम्यन्तपदद्वयं व्याचष्टे "**संविदेक**" इति। **न न युज्यते**, अपि तु युज्यते इत्यर्थः। कुतो युज्यते इत्यत आह "**यत् किल**" इति। **मायापदे**–भेदपदे, **अतिदुर्घटम्**–अतिशयेनासंभवोपहतम्। **अप्रतिहतम्**–प्रतीघातरहितम्, "**पुनः**" शब्दो व्यतिरेके। "**अत एव इत्यनेन**" इति, पूर्वसूत्रस्थेनेहापि योजितेनात एवेति शब्देन। **विमर्शशक्तिरूपम्**–विमर्शशक्त्याख्यं हेतुस्वरूपम्, **अपुनरुक्तम्**, पुनरुक्तं न भवतीत्यर्थः[2]। अन्यथा द्वयोरपि हेत्वोः स्वातन्त्र्यवाचकत्वात् पौनरुक्त्यं स्यादिति भावः। मतान्तरमाह "**अथ वा**" इति। **अत एव स्वातन्त्र्यात्**, विमर्शरूपात् स्वातन्त्र्यात् हेतोरित्यर्थः। "**ईशादिसङ्कल्पैः**" इत्यस्य व्याख्यां कर्तुं योजनां करोति

---

1. तत्र—K.S.S.
2. अपुनरुक्तम् न भवतीत्यर्थः—C.

नाधिकरण्येन श्लोकद्वयेन संबन्धनीयम्। उदाहरणम् अत्रार्थे दर्शयति, नीलादिनिर्माणवत् अस्य स्वतन्त्रनिर्माणस्य[1] अप्रसिद्धत्वात्, ईश्वरो भगवान् आत्मा नित्यो विभुः स्वतन्त्रः इत्येवमादौ हि प्रमातुः, पूजयितुः, ध्यातुः वाऽपृथग्भूतं तत् प्रमेयम्, पूज्यम्, ध्येयं च भाति इति तत् तावत् निर्मितम्, न च अनीश्वरम्[2]। एवं हि ईश्वर इति, अनीश्वर इति संकल्पध्यानादेः तुल्यत्वं स्यात्, न च एवम् फलभेदस्य उपलब्धेः इति, तस्मात्

"**उदाहरणम्**" इति, सामान्ये विशेषरूपम्, **अत्रार्थे**–ईशादिसङ्कल्पैर्निर्मितज्ञेयव्यवहारविषये, तदुक्तम् :–

"शिवश्चालुप्तविभवस्तथासृष्टोऽवभासते।
स्वसंविन्मात्रमुकुरे स्वातन्त्र्याद् भावनादिषु"॥

इति। ननु किमर्थमत्रोदाहरणं दर्शयति इत्यत आह "**नील**" इति, **स्वतन्त्रनिर्माणस्य**–स्वातन्त्र्यामुक्तात्मरूपेशादिनिर्मितेः, **अप्रसिद्धत्वात्**-लोके प्रसिद्ध्यभावात्। ननु कथं स्वातन्त्र्ययुक्तानामीशादीनां निर्मितत्वं युक्तमित्यत आह "**ईश्वरः**" इति। "**ईश्वरः**" इत्यनेन "**ईश**" शब्दव्याख्या, '**भगवान्**' इत्यादयस्तु आदिशब्दगृहीताः, **अपृथग्भूतम्**—अभिन्नम्, **तत् प्रमेयम्**—ईशादिरूपं प्रमेयम्, **निर्मितम्**—सङ्कल्पेन संपादितम्, प्रमेयस्य स्फुटमेव निर्मितत्वानपायात् इति भावः। ननु तर्हि निर्मितत्वेन स्वातन्त्र्यमुक्तमेव भवतु इत्यत आह "**न च**" इति। कुतो नानीश्वरम् इत्यत आह "**एवं हि**" इति। "**आदि**" शब्देन पूजादेर्ग्रहणम्। ननु तुल्यतैवास्तु इत्यत आह "**न चैवम्**" इति। कुतो नैवम् इत्यत आह "**फल**" इति। **फलभेदस्य**—भोगमोक्षरूपस्य, नीलादिसेवनेन हि भोगः, ईशादिसेवनेन हि मोक्ष इति भावः। ये तु भगवत्तीव्रतरशक्तिपवित्रीकृताः नीलादेरपि

"येनैव मुह्यति जडः प्राज्ञस्तेनैव तरति संसारात्।
पिण्डितमयोऽप्सु मज्जति तदेव पात्रीकृतं प्लवते"॥

1. स्वतन्त्ररूपनिर्माणस्य—K.S.S.
2. अनीश्वररूपम्—K.S.S.

स्वातन्त्र्यशून्यताभासनेन स्वातन्त्र्ययुक्तताभासनेन च यत् इदम् उभयं ज्ञेयम् आत्मरूपमेव परमेश्वरो भासयति तत् विमर्शशक्तिबलात् एव, इति सैव प्रधानम् इति ॥ १६ ॥

ननु प्रकाशबलात् भावव्यवस्था, स च प्रकाशो विमर्शसार इति विमर्शाभेदे तदेव तत् इति वक्तुं युक्तम्, ईश्वर आत्मा इत्यादिसंकल्पेषु च निर्मितस्य इदन्तया परामर्शः, स्वातन्त्र्यं तु अहंपरामर्शरूपम्, इति निर्मितस्य तद्रूपत्वाभावे कथं स्वातन्त्र्यामुक्तत्वम् इति ? तत् एतत् परिहर्तुमाह :—

**नाहन्तादिपरामर्शभेदादस्यान्यतात्मनः ।**
**अहंमृश्यतयैवास्य सृष्टेस्तिङ्वाच्यकर्मवत् ॥ १७ ॥**

स्वरूपे भावप्रत्ययः, आदिग्रहणात् आत्मेश्वरादिपरामर्शः, तिङ्ग्रहणं

---

इति दृशा मोक्षफलभागिन एव, तेषां कथाऽन्यैव । तदुक्तम् :—

"भुक्त्वा भोगान् भवभ्रान्तिं हित्वा लप्स्ये परं पदम् ।
इत्याशंसेह शोभेत शंभोर्भक्तिमतः परम्" ॥

इति । संक्षेपेण श्लोकद्वयार्थं कथयत्युपसंहाररीत्या **"तस्मात्"** इति । **उभयम्**-नीलादिरूपमीशादिरूपं च, **तत्**-भासनम्, **इति**-अतः कारणात्, **सैव**—विमर्शशक्तिरेव, **प्रधानम्**, प्रधानभूतप्रकाशजीवितत्वादिति भावः ॥ १६ ॥

अथ सप्तदशश्लोकस्यावतरणिकां करोति **"ननु"** इति ।

अत्र टीका :—

तदत्र, तदित्यर्थः, **तद्रूपत्वाभावे**–अहंपरामर्शविषयत्वाभावे । **परिहर्तुम्**-परिहारविषयीकर्तुम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । **"नाहन्ता"** इति ।

अत्र टीका :—

"तल्" अर्थमाह **"स्वरूपे"** इति, न तु भावे, असंबन्धात् । स्वरूपं हि धर्मी भावस्तु स्वरूपगतः शब्दप्रवृत्तिनिमित्तभूतो धर्मः, इह च धर्म्येवोपयुक्तः ।

क्रियावाचिप्रत्ययोपलक्षणम्, कर्मग्रहणम्[1] असत्त्वभूतशक्तिरूपोपलक्षणम्।

**"आदि"** शब्दग्राह्यमाह **"आत्मा"** इति। **"आदि"** शब्देन स्वतन्त्र इत्यादीनां ग्रहणम्। तिङ्प्रत्ययग्राह्यमाह **"प्रत्यय"** इति। न स्वान्तर्गतस्वरूपसहिततिप्तस्आदिप्रत्ययमात्रपरम्, अपि तु क्रियावाचिसर्वप्रत्ययपरम्। प्रत्ययग्रहणमप्यत्रोपलक्षणमेव, निपातानामप्यनेन ग्रहणात्। **'कर्म'** शब्दग्राह्यमाह **'असत्त्व'** इति। असत्त्वभूतानाम्–सर्वनामप्रयोगासहत्वेनाऽद्रव्यभूतानां यत् शक्तिरूपम्–शक्त्याख्यं वस्तु तस्योपलक्षणम्, न तु केवलस्य वाच्यभूतस्य क्रियामात्रस्य ग्रहणपरम्। तिङादिवाच्यम्–क्रियादि, निपातवाच्याः समुच्चयादयश्च बहिः स्वप्रधानतया स्थितं सर्वनामव्यपदेशार्हं स्वरूपं न बिभ्रति परनिष्ठत्वेनैव स्थितत्वात्, अत एव च निपातानां निपात इति नाम सार्थकम् एव, निपतन्ति–सूचकत्वेन विषयीभवन्ति परनिष्ठेष्वर्थेषु इति निपाताः। तिङादिवाच्यक्रियाकारकाणि च स्फुटमेव परनिष्ठान्येव, परं तु तद्वाचकानां निपातत्वेन रूढिर्नास्त्येव यतस्ते योगमात्रेण

1. कर्मग्रहणं क्रियावाचिसदसत्त्वभूतशक्तिरूपोपलक्षणम्—K.S.S. Abhinava generally follows the Vaiyyākaraṇas, according to whom karma, i.e. kriyā, does not express both सत्त्व and असत्त्व. The reading found in the K.S.S. edition, therefore, cannot stand. Bhāskara seems to have had a different text. According to him, the position of क्रियावाचि was immediately before प्रत्ययोपलक्षणम्। His interpretation seems to be that the use of the word तिङ by Utpala is meant to include all pratyayas expressive of action. The adjunct क्रियावाचि used by Abhinava is meant to exclude those pratyayas which express सत्त्व, such as घञ्. Bhāskara's text of the Vimarśinī probably didn't have the word सत् at all. We have, therefore, amended the text as printed.

**तत् अयम् अर्थः, अहम् इत्येवंस्वरूपो[1] यः परामर्शो यश्च ईश्वरः प्रमाता आत्मा शिव इत्यादिः अनन्तप्रकारः परामर्शः, तस्य यद्यपि भेदोऽन्यान्यरूपता, तथापि तद्भेदात् हेतोः अस्य आत्मनो निर्मातृरूपस्य अहंपरामर्शमयस्य निर्मेयरूपस्य च ईश्वरादिपरामर्शास्पदस्य यो भेदः शङ्कितः, स न युक्तः। यत ईश्वर इत्यपि यः परामर्शः, स ईशनशीले ज्ञातृत्वकर्तृत्वतत्त्वे विश्राम्यति, ज्ञातृत्वादि च ज्ञानादौ स्वातन्त्र्यम् अनन्य-**

निपाताः, विकल्पादिवाचकानां वादीनां तु योगरूढ्या निपातत्वम्, यद्यपि कारकाणां बहिः प्रधानं स्वरूपं वर्तत एव तथापि तदर्थरूपत्वेनैव न कारकत्वेन, कारकत्वं हि स्वरूपनिष्ठशक्तिमात्ररूपमेव, अन्यथा विदितकार्यकारणभावो बालश्छिद्राद्यर्थं पादुकादि न गृह्णीयात् इत्यलं प्रपंचेन।

एतदवष्टम्भेनार्थकरणे प्रतिज्ञां करोति "**तत्**" इति। "**अहन्ता**" शब्दे प्रकृतिं व्याचष्टे "**अहम्**" इति। तल्प्रत्ययार्थमाह "**स्वरूपः**"[2] इति। परामर्शशब्दस्य प्रसिद्धत्वेन निगदव्याख्यानम्। आदिगृहीतं वस्तु आह "**ईश्वर**" इति। "**भेदात्**" इति पदं व्याचष्टे "**अन्यान्य**" इति। तेषाम्-परामर्शानां भेदस्तद्भेदस्तस्मात्। तत्राहंपरामर्शः निर्मातृविषयः, ईश्वरादिपरामर्शाः निर्मेयविषयाः। पञ्चम्यर्थमाह "**हेतोः**" इति। "**अस्य आत्मनः**" इति पदद्वयं व्याचष्टे "**निर्मातृ**" इति। "**अन्यता**" पदं व्याचष्टे "**भेद**" इति। शेषत्वेन "**युक्तः**" इत्यध्याहृतम्। अत्र हेतुत्वेन स्थितमुत्तरार्धं व्याचष्टे "**यतः**" इति। "**ईशन**" इति। ईशनम्—समर्थीभवनक्रिया, शीलम्-निष्प्रयोजना प्रवृत्तिर्यस्य तादृशे। ज्ञातृत्वरूपं यत् कर्तृत्वं तस्य यत्तत्त्वं तस्मिन्, ज्ञानपल्लवभूतैव हि क्रिया वक्ष्यते इति भावः। "**विश्राम्यति**" इति। ईश् धातोः कर्तरि कृत्प्रत्ययोत्तादादिति भावः। ननु विश्राम्यतु ततः किमित्यत आह "**ज्ञातृत्व**" इति। **ज्ञातृत्वादि च**—ज्ञातृत्वमादिशब्देन कर्तृत्वं च, **ज्ञानादौ**—ज्ञाने आदिशब्दात्करणे च,

1. इत्येवंरूपः—K.S.S.
2. तल्प्रत्ययार्थमाह स्वरूपमिति—C.

**मुखप्रेक्षित्वम् अविच्छिन्नज्ञानयोगः,[1] अविच्छेदश्च जानामि करोमि इति अस्मदर्थविश्रान्तिः इति अस्य ईश्वरस्य आत्मनः सृष्टेः सृज्यमानस्य अहंविमर्शनीयत्वमेव। सृष्टेरिति वा हेतौ पञ्चमी। अस्य ईश्वरस्य यतः ईश्वरादिसंकल्पेषु अपि अहंपरामर्शनयोग्यस्यैव सृष्टिः। अर्हे कृत्यः। यथा**

---

**स्वातन्त्र्यं** भवति। कर्तरि प्रत्ययोत्पाददिति भावः। तच्च **अनन्यमुखप्रेक्षित्वं** भवति, तच्च **अविच्छिन्नज्ञानयोगो** भवति, विच्छिन्नज्ञानयोगो हि कादाचित्कत्वेन स्वव्यतिरिक्तहेत्वपेक्षत्वेनान्यमुखप्रेक्षित्वग्रस्त एव। स **अविच्छेदश्च** अहं **जानामि**, अहं **करोमि, इति**—एवम्, अस्मदर्थे या विश्रान्तिः–भित्तितया तदाश्रयणम्, सा भवति, स्फुटं ज्ञानकरणयोरस्मदर्थेऽहंपदार्थे स्थिततया स्फुरणात्, इति–**अतः** कारणात्, **"अस्य"** इति पदं व्याचष्टे **"ईश्वरस्य"** इति। **"सृष्टेः"** इति पदं व्याचष्टे **"सृज्यमानस्य"** इति। एतेन कर्मणि क्तिन्निति द्योतितम्। **सृज्यमानस्य**, संकल्पेन भाव्यमानस्येत्यर्थः। **अहंपरामर्शनीयत्वमेव**–अहंपरामर्शविषयत्वमेव, साक्षात्तत्त्वाभावेऽपि फलतस्तत्त्वानपायात्। पक्षान्तरमाह **"सृष्टेरिति वा"** इति। पञ्चमीं व्याचष्टे **"यतः"** इति। अस्मिन्पक्षे **"सृष्टेः"** इत्यस्य भावे क्तिन् पञ्चम्यन्तता च। ननु योग्यतायाः कुतोऽवगम इत्यत आह **"अर्हे"** इति। **कृत्यः–"मृश्यतया"** इत्यत्र स्थितः कृत्यप्रत्ययः। अहमिति म्रष्टुं योग्यः–अहंमृश्यः, तस्य भावस्तत्ता तयेत्यर्थः, पूर्वपक्षे तु कर्मणीति भावः। **"तिङ्वाच्य"** इति पदस्य अर्थोपमापरस्य व्याख्यां करोति **"यथा"** इति। वतिप्रत्ययार्थमाह **"यथा"** इति। प्रकृत्यर्थमाह **"क्रिया"** इति। आदिशब्देनोपमादेर्ग्रहणम्। **"यथास्वम्"** इति। तत्र क्रियाशक्तिः तिङ्प्रयोगावसेयपरामर्शपरमार्था, तिङ्प्रयोगेनावसेयः–द्योत्यः, यः परामर्शः स एव परमार्थः यस्याः सा। धातुवाच्यत्वेपि

"प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः"

---

1. अविच्छिन्नज्ञानादिशक्तियोगः—K.S.S.

**क्रियाकारकसमुच्चयविकल्पादिशक्तयो यथास्वं तिङ्तृतीयादिचवादिप्रयोगावसेयपरामर्शपरमार्थाः पाकः कर्ता समुच्चयो विकल्पः इत्यादिशब्दैः अभिधीयमानाः सत्त्वभावमापादिता अपि पचति चैत्रेण च वा इत्येवंरूपे[1] मूलपरामर्शे विश्राम्यन्ति, अन्यथा तु ताः प्रतीता नैव भवेयुः। तद्वत्**

---

इति न्याये तु प्रत्ययरूपतिङमात्रग्रहणम्, उपलक्षणं चैतत्कृत्प्रत्ययादीनाम्, तेषामपि क्रियायां प्रयोगात्। तथा कारकशक्तिः तृतीयादिप्रयोगावसेयपरामर्शपरमार्था, तृतीयाया एव कर्तृत्वकरणत्वद्योतकत्वात्, आदिशब्देन चतुर्थ्यादीनां ग्रहणम्, तासामपि संप्रदानादिद्योतकत्वात्, एवं सर्वत्र योजना। **"वादि"** इत्यत्रादिशब्देनोपमादिद्योतकस्य इवादेर्ग्रहणम्, उपमाशक्तिरपि हि इवादिप्रयोगावसेयपरामर्शपरमार्थैव, ताश्च शक्तयः एवंविधाः सत्यः **पाकः कर्ता समुच्चयो विकल्प इत्यादिशब्दैरभिधीयमानाः**। पाको हि भावविहितघञन्तत्वेन क्रियामभिदधाति, एवं कर्त्रादिकमपि कारकादीन्, आदिशब्देनोपमादेरभिधायकस्य सादृश्यादेः शब्दजातस्य ग्रहणम्। अत एव **सत्त्वभावमापादिताः**—सहजस्वरूपतया स्थितात् अद्रव्यभावात् प्रच्याव्य कल्पिते 'अयं पाकः' इत्येवमभिनवनामपरामर्शसहे सत्त्वे-द्रव्ये तादात्म्यमापादिताः, **अपि पचति चैत्रेण च वेत्येवंरूपे मूलपरामर्शे विश्राम्यन्ति, अन्यथा**—मूलपरामर्शविश्रामाभावे, **ताः प्रतीता एव**—लब्धस्वरूपा एव, **न भवेयुः**। अनेन पाकः क्रियते इति ह्युक्ते पचत्ययमिति परामर्शे सद्यो विश्रान्तिर्जायते, न हि पाके नाम सिद्धं वस्तु कुत्रापि तिष्ठति पूर्वापरीभूतावयवत्वेन सिद्धत्वासंभवात्, तिङप्रत्ययस्य तु तत्रैव सङ्केतितत्वात् झटिति प्रत्यायकत्वम्, मूलत्वं च तत एव प्रथमं क्रियापरामर्शोत्पादात्। सिद्धतया कथनं तु व्युत्पन्नं प्रत्येव, अत्र स्वबुद्धिरेव साक्षिणीति नाऽयस्यते। एवं कारकत्वादिकमपि कार्यमात्राधिगम्यमेव न सिद्धतया स्थितम्, न हीदं कारकमित्युक्ते वस्तुस्वरूपं विना किञ्चिल्लभ्यते, कार्येण तु ज्ञायतेऽस्य कारकत्वशक्तिरस्तीति, सत्त्वस्य च सर्वनामपरामर्शसहत्वम्

---

1. इत्येवंभूते—K.S.S.

**अत्रापि। एतदुक्तं भवति—परामर्शो नाम विश्रान्तिस्थानम्, तच्च पार्यन्तिकमेव पारमार्थिकम्, तच्च अहमित्येवंरूपमेव। मध्यविश्रान्तिपदं तु यत्**

---

"वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः"॥

इति वृद्धसम्मत्या ज्ञेयम्। उपमानोपमेयभावरूपां योजनां करोति "**तद्वत्**" इति। एवं च तिङ्वाच्यकर्मणीव तिङ्वाच्यकर्मवत् इति संक्षेपः। एतदुक्तं भवति। यथा पाक इति परामर्शः तिङ्वाच्ये कर्मणि पचतीत्येवंरूपपरामर्श एव फलतो विश्राम्यति, तथेश्वर इत्युक्तेऽहंपरामर्श एव फलतो विश्रामः, अन्यत्र स्वातन्त्र्यरूपेश्वरत्वासंभवात्, यस्तु मूढानां पाकादिसिद्धत्वे ईश्वरविषये च स्वतो भिन्नत्वेन निश्चयः स भ्रम एवेति। अत्र स्वयमपि भावकथनं प्रतिजानीते "**एतदुक्तं भवति**" इति। किमुक्तं भवति इत्यपेक्षायामाह "**परामर्शो नाम**" इति। "**विश्रान्तिस्थानम्**" इति, विषयग्रहे परामर्शानन्तरमेव पुरुषो हि तूष्णीं तिष्ठति, तूष्णींभावश्च विषयसुखानुभवः, स एव च विश्राम इति स्फुटमेव परामर्शस्य विश्रान्तिस्थानत्वम्। **तच्च**—विश्रान्तिस्थानं च, **पार्यन्तिकमेव**—पर्यन्ते भवमेव नत्ववान्तरम्, **पारमार्थिकम्**—सत्यभूतम्, अवान्तरविश्रान्तिस्थानानां परमार्थतो मार्गरूपत्वात्, **तच्च**—पारमार्थिकं विश्रान्तिस्थानं च, **अहमित्येवंरूपमेव**, अहंपरामर्श एवेत्यर्थः, विषयकृते सुखे विश्रान्तोऽपि हि परमार्थतः स्वात्मविश्रान्त एव भवति, तदुक्तम् :—

"दृश्यदर्शनसंबन्धे यत्सुखं पारमात्मिकम्"

इति। ये त्वेतेन विषयरसिका अपि परमात्मविश्रान्तिमभिनयन्ति तेषां स्ववञ्चकत्वमेव, तत्र विश्रान्ता हि केनापि वस्तुना सदैव सुखिनस्सन्तः प्रवाहवशेन विषयेभ्यः सुखं प्राप्नुवन्तोऽपि विषयवैमुख्यपरा एव, आत्मन्येव सुखकारित्वनिश्चयात्। यस्तु विषयकाले एव सुखी स विषयमात्रपर एव, सदा सुखित्वे चात्मैव साक्षीकार्योऽन्यथा स्ववञ्चकत्वापत्तेरित्यलं परचोदनाभिः। ननु मध्ये स्फुरणशीलं विषयपरामर्शनं कुत्रापसारयामः इत्यत आह "**यत्**" इति। **मध्यविश्रान्तिपदम्**—ईश्वरपरामर्शरूपं नीलादिविषयपरामर्शरूपं चावान्तरविश्रान्तिस्थानम्, **ग्राम-**

**वृत्तमूलस्थानीयं ग्रामगमने तस्य[1] तदपेत्तया सृष्टत्वम् उच्यते इति को विरोधः। अनेन नीलादेः अपि इदं नीलम् इति मध्यपरामर्शेऽपि मूलपरामर्शे अहमित्येव विश्रान्तेः आत्ममयत्वम् उपपादितमेव। "नीलम् इदम् वेद्मि" इत्यपि हि "अहं प्रकाशे" इतीयत्तत्त्वम्। यथोक्तम् 'इदमित्यस्य' इत्यादि। मूढस्तु नीलादिविमर्शात् एव अर्थक्रियादिपरितोषाभिमानी**

---

**गमने वृक्षमूलस्थानीयम्**–वृक्षमलसदृशम्, ग्रामं गन्ता हि श्रान्तस्तावद्विश्रामार्थं वृक्षतले तिष्ठति, मूलशब्दस्य तलवाचकत्वं लक्षणया ज्ञेयम्। ननु मध्यपरामर्शस्य सृष्टत्वं कथमुक्तमित्यत आह **"तदपेक्षया"** इति। पार्यन्तिकविश्रान्तिस्थानभूताहंपरामर्शापेक्षया तत्पूर्वकत्वादस्येति भावः। नन्वीश्वरपरामर्शस्य प्रत्यासन्नत्वेनाहंपरामर्शविश्रान्तत्वं भवतु, नीलादिविषयपरामर्शस्य का वार्ता इत्यत आह **"अनेन"** इति। **अनेन**–ईश्वरपरामर्शस्याहंपरामर्शविश्रान्तिसाधनेन, **उपपादितमेव**–समर्थितमेव, विषयत्वाविशेषादिति भावः। अत्र च भरःकृतः इति न पुनरायस्यते। ननु कथमेतद्युक्तम् इत्यत आह **"नीलम्"** इति। **हि**–यस्मात्, **'नीलमिदं वेद्मि' इत्यपि "अहं प्रकाशे"** इतीयत्–एतावन्मात्रं तत्त्वम्-परमार्थः यस्य तत्, भवति नीलद्वारेणाहंपरामर्शात्, अन्यथाहंप्रयोगासंभवात् इति भावः। अत्राऽऽचार्यसम्मतिमाह **"इदम्"** इति। **"आदि"**शब्देन "विच्छिन्नविमर्शस्य" इत्यादेः श्लोकशेषस्य ग्रहणम्, अत्र च पूर्वं व्याख्या कृतेति न पुनरायस्यते। ननु कथं तर्हि मूढा एवं न जानन्ति इत्यत आह **"मूढः"** इति। अथ च यद्येवं तर्हि कथमीश्वरादिविषयस्यैव स्वातन्त्र्यामुक्तत्वमुक्तं न नीलादेरपीत्यत आह **"मूढः"** इति। अर्थक्रियादिकृतः परितोषः–अर्थक्रियादिपरितोषस्तमभिमन्यत इति तादृशः, परमार्थतोऽपेक्षाग्रस्तस्य तस्य सः परितोषोऽपि हस्तं

---

1. This word, though not found in the Kashmir edition, seems to be necessary for the completion of the sense.

2. नीलमिदमहं वेद्मि इति अहं प्रकाशे इति हि इयत्तत्वम्—K.S.S.

**इति नीलादेः स्वातन्त्र्यनिर्मुक्तत्वम् उक्तम् । आत्मादौ तु तन्मूलपरामर्श-विश्रान्तिमन्तरेण प्रतीतिपरिसमाप्तिम् अर्थक्रियां च मूढोऽपि न अभिमन्यत इति तस्य निर्मितौ अपि अनुज्झितस्वातन्त्र्यम् उक्तम् ॥ १७ ॥**

**नन्वेवं विश्वपरामर्शानाम् अहम् इत्येव विशुद्धैकपरामर्शविश्रान्तिरेव तत्त्वम् तत् कथम् इदम् उच्यते—ज्ञानस्मृत्यादिका अस्य शक्तय इति, ज्ञानस्य च संशयनिर्णयादिभेदः[1] नीलादीनां च वैचित्र्यम् ? इति आशङ्कायां परिहारमाह :—**

---

नायाति इत्यभिमानीत्युक्तम् । **निर्मितौ अपि**–सृष्टत्वेऽपि, **'उक्तम्'** इति, मूढप्रबोधनमात्रफलत्वादस्य शास्त्रस्य, अन्यथा सर्वथाऽनिर्वाच्ये ततोऽपि व्यतीते प्रसिद्धात् प्रसिद्धे च भगवत्स्वरूपे का प्रक्रियाजालपरिनिष्ठतेति भावः।

एवमत्र संक्षेपः । अस्यात्मनः–परप्रकाशतया ईश्वरादिरूपतया च भावितस्य परमात्मनः; अहन्तादेः परामर्शस्य यो भेदः भिन्नविषयताकृतस्तत अन्यता–भेदो न भवति कुतः ? अस्य सृष्टेः–सृज्यमानस्येश्वरादेः अहंमृश्यतया, कथम् ? "तिङवाच्य" इति । अस्येश्वरादेः सृष्टेर्हेतोरिति वेति ॥ १७ ॥

अथाष्टादशश्लोकस्यावतरणिकां करोति **"नन्वेवम्"** इति।

अत्र टीका :–

**विश्वपरामर्शानाम्**–अयमीश्वर इदं नीलमित्यादीनां सर्वेषां परामर्शानाम्, विशुद्धः–विषयोपरागाऽरूषितत्वेन अतिशुद्धो यः परामर्शः–प्रकाशस्य स्वरूपमात्र-निष्ठोहंपरामर्शः, स एव, **तत्त्वम्**–पारमार्थिकं स्वरूपम्, **तत्**–तदा, इदं किम् इत्यपेक्षायामाह **"ज्ञान"** इति। आदिशब्देनापोहनस्य ग्रहणम्। **अस्य**–प्रकाशस्य, **'ज्ञानस्य'** इति। **ज्ञानस्य संशयनिर्णयादिभेदः नीलादीनां च वैचित्र्यम्,** कथं शक्तिरुच्यते इति संबन्धः । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । **"माया"** इति।

---

1. निर्णयसंशयभेदाः—K.S.S.

**मायाशक्त्या विभोः सैव भिन्नसंवेद्यगोचरा।**
**कथिता ज्ञानसंकल्पाध्यवसायादिनामभिः ॥ १८ ॥**

अनुपपन्नम् अवभासनं माया इति उच्यते, ततश्च भिन्नं प्रकाशात् सर्वम् अवभासजातं माया, तत्र च चित्तत्त्वस्यैव स्वातन्त्र्यं मायाशक्तिः, तया भिन्नं यत् संवेद्यं प्रमातुश्च अन्योन्यतश्च, मायाशक्त्या भिन्नेन प्रमातुः अन्योन्यतो वेद्याच्च करणवर्गेण यत् संवेद्यं स एव गोचरो विश्रान्तिपदं

---

अत्र टीका :–

"**माया**"पदं व्याचष्टे "**अनुपपन्नम्**" इति। **अनुपपन्नम्**–उपपत्त्यसहम्, **अवभासनम्**–भेदेन वस्तूनां स्फुरणम्। फलितं मायास्वरूपमाह "**ततश्च**" इति। **ततश्च**–तस्माच्च, **भिन्नम्**–भेदधर्मितया स्थितम्, **प्रकाशात्**–परमप्रकाशाख्यात्प्रतियोगिनः, **अवभासजातम्**–नानाविधबाह्यान्तरभावविषयो ज्ञानसमूहः। "**शक्ति**" पदं व्याचष्टे "**तत्र च**" इति। **तत्र च**–अवभासजाते मायास्वरूपे सति, **स्वातन्त्र्यम्**–अवभासोद्भावने समर्थता, अनन्यमखप्रेक्षित्वमिति यावत्। योजनामात्रप्रयोजनं पुनर्मायापदग्रहणम्। तृतीयार्थमाह "**तया**" इति। "**भिन्न**" इत्यादिसमस्तपदस्य विग्रहं व्याख्यां चावयवविभागेन करोति "**भिन्नम्**" इति। "**संवेद्य**" इत्यवयवं व्याचष्टे "**माया**" इति। "**प्रमातुरन्योन्यतश्च**" इति पदद्वयस्य व्यवहितेन "**भिन्नम्**" इत्यनेन योजना। कुतो भिन्नम्? **प्रमातुः**–ग्राहकात्, "**अन्योन्यतश्च**" इत्यर्थः। "**संवेद्य**" इत्यस्य सापेक्षशब्दत्वात् तदपेक्षापूरकस्य "**करणवर्गेण**" इत्यस्याध्याहारः। **करणवर्गेण**–बाह्यान्तररूपेण करणसमूहेन, तद्द्वारेणेति यावत्। **यत्संवेद्यम्**–संवेदनविषयः, अर्थाद् बाह्यान्तरं भावजातम्, **सः**–भिन्नं संवेद्यं च भावजातं च। एकेनैव तच्छब्देन यच्छब्दद्वयस्याकाङ्क्षा पूरिता। "**गोचरा**" इत्यवयवं व्याचष्टे "**विश्रान्ति**" इति। अयं च लक्षणाप्रयोग एव, गाव एव हि गोचरे विश्राम्यन्ति। विगृहीतानां पदानां समसनं करोति "**यस्या**" इति, योग्यतया

**यस्याः तादृशी सती, 'सैव' प्रत्यवमर्शात्मा चितिः परावाग्रूपा ज्ञानम् इति, संकल्प इति, अध्यवसाय इति च उच्यते, आदिग्रहणात् संशयः स्मृतिः इत्यादि। तथा हि—यत् इन्द्रियेण स्फुटग्राहिणा बाह्येन विषयेण स्फुटेन च नियन्त्रितं संवित्तत्त्वं तत् ज्ञानम्। मनसा विषयेण च अस्फुटेन संकल्पः। बुद्ध्या विषयेण च विषयत्वपर्यन्तभाजा अध्यवसायो निश्चयः। विषयस्य च यत् भिन्नत्वं बहिरन्तःकरणानां च तत्प्रकाशाभेदात् अनुपपन्नं चित्तत्त्वेन भास्यते[1] इति भेदे यतो विश्रान्तिः, न तु भेदस्य अभेदे ईश्वरसदाशिवादिवत्,**

---

"सती" इत्यस्याध्याहारः। **"सैव"** इति पदं व्याचष्टे **"प्रत्यवमर्श"** इति। **"ज्ञान"** इत्यादि पदं व्याचष्टे **"ज्ञानम्"** इति। सर्वत्र **'इति'** शब्दः स्वान्तः-कृततृतीयार्थः शब्दस्वरूपाक्षेपपरः शब्दस्वरूपस्यैव नामत्वात्। **"कथिता"** इति पदं व्याचष्टे **"उच्यते"** इति। **"आदि"** शब्दग्राह्यं वस्तु कथयितुमाह **"आदि"** इति। इत्यादि ग्राह्यमिति शेषः। आदिशब्देन भ्रमज्ञानादेर्ग्रहणम्। ज्ञानादीनां स्वरूपकथनं प्रक्रमते **"तथा हि"** इति। **स्फुटग्राहिणा**—सर्व-धर्माक्षेपेण ग्रहणात् स्फुटतया वस्तुग्रहणं कुर्वता, **स्फुटेन**—सन्निकर्षचतुष्टयवशेन स्फुटतां गतेन। **नियन्त्रितम्**—प्रमाणतया प्रमेयतया च परिच्छिन्नतां नीतम्, **संवित्तत्त्वम्**—अपरिच्छिन्नप्रकाशस्वरूपम्। **"ज्ञानम्"** इति, प्रमारूपमित्यर्थः। सङ्कल्पस्य स्वरूपमाह **"मनसा"** इति। अध्यवसायस्वरूपमाह **"बुद्ध्या"** इति। विषयत्वस्य—भावगतस्य विषयभावस्य यः पर्यन्तस्तं भजतीति तादृशेन। ततः परं हि भावस्य विषयीभावो नास्तीति भावः। ननु कथं ज्ञानादीनां भिन्नत्वं युक्तमित्यपेक्षायां निर्णेतुमाह **"विषयस्य"** इति। प्रकाशेन—परप्रकाशेन सह यः अभेदस्तस्मात्। **"भास्यते"** इति, मायाशक्त्येति भावः। **इति**—एवम्। यतः कारणाद् **भेदे विश्रान्तिः** भवति नत्वीश्वरसदाशिवादिवत्, आदिशब्देन शक्त्या-देर्ग्रहणम्, **भेदस्याभेदे** विश्रान्तिर्भवति, **ततः**—तस्मात्कारणात्, **ज्ञानसङ्क-**

---

1. आभास्यते—K.S.S.

ततो ज्ञानसंकल्पादयो भिन्नाः तस्य अप्रध्वस्तस्वस्वभावाभेदस्य संवित्तत्त्वस्य अनुसंधातुः शक्तय इति उक्ताः, संशयादयश्च भिन्ना नीलादिवैचित्र्यं च इति सर्वम् अखण्डितम् ॥ १८ ॥

ननु प्रत्यवमर्शात्मत्वं चितिशक्तेः सङ्कल्पस्मरणादिशक्तिषु सविकल्पात्मिकासु भवतु। या तु निर्विकल्परूपा साक्षात्करणलक्षणा अनुभवशक्तिः, तत्र कथम्। प्रत्यवमर्शो हि अभिलापविशेषयोजनामयः[1], अभिलापविशेषयोजना च सङ्केतस्मरणम् अपेक्षते। तच्च संस्कारप्रबोधम्। सोऽपि

ल्पादयो भिन्ना भवन्ति, विषयभेदेनैव ज्ञानभेदस्य युक्तत्वात्। ज्ञानादीनामपि शक्तित्वं साधयति "तस्य" इति। तस्य–परमप्रकाशरूपस्य। 'उक्ताः' इति, मायावत् तत्सामर्थ्यसिद्धत्वादिति भावः। संशयादयश्च–आदिशब्दगृहीताः संशयादयश्च, शक्तय इत्युक्ताः, नीलादिवैचित्र्यं च शक्तिरित्युक्तमिति संबन्धः। इति–एवम्, सर्वम्–समस्तम्, अखण्डितम्–खण्डनाऽसहं भवति, न हि मायायाः किमपि दुष्करम् इति सर्वैरङ्गीकृतत्वादिति भावः। १८॥

अथैकोनविंशस्य श्लोकस्यावतरणिकां करोति "ननु" इति।

अत्र टीका :–

प्रत्यवमर्शात्मकत्वम्-प्रत्यवमर्शस्वभावत्वम्। चितिशक्तेः-चैतन्यशक्तेः। अनुभवशक्तिः–चितिशक्तिः, तत्र–तस्यां शक्तौ, कथम् प्रत्यवमर्शात्मकत्वमिति संबन्धः। कुत इत्यपेक्षायामाह "प्रत्यवमर्शो हि" इति। अभिलापविशेषाणाम्–प्रतिपदार्थेऽभिन्नतया स्थितानां शब्दानां या योजना–स्मृत्या योजनं तन्मयः–तत्स्वरूपः। ननु ततः किमित्यत आह "अभिलाप" इति। "अपेक्षते" इति, न हि पूर्वगृहीतसंङकेतस्मृतिं विना ज्ञातार्थः शब्दो योजयितु शक्यते इति भावः। तच्च–संङकेतस्मरणं च। सोऽपि–संस्कारप्रबोधोऽपि। तादृशी चासौ दृक् तादृशदृक् ताम्, सदृशज्ञानमित्यर्थः। प्रथमसमये–प्रथमतया स्थितनिर्वि-

1. अभिलापभेदयोजनामयः—K.S.S.

तादृशतादृशम्, इति एवं प्रथमसमये कथम् अभिलापयोगः इति परस्य व्यामोहम् अपोहितुमाह:[1]—

**साक्षात्कारक्षणेऽप्यस्ति विमर्शः कथमन्यथा।**
**धावनाद्युपपद्येत प्रतिसंधानवर्जितम् ॥ १९ ॥**

इह तावत् चैतन्यस्य आत्मभूतोऽङ्गुलिनिर्देशादिप्रख्योऽभिलापयोगः, अन्यथा बालस्य प्रथमं व्यवहारे दृश्यमाने व्युत्पत्तिरेव न स्यात्।

---

कल्पज्ञानसमये। **परस्य**—तार्किकादेः। **अपोहितुम्**—दूरीकर्तुम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"साक्षात्कारक्षणेऽप्यस्ति"** इति।

अत्र टीका :–

श्लोकं व्याख्यातुं प्रक्रियां तनोति "इह" इति। इह—भासमाने जगति, **चैतन्यस्य**—प्रकाशस्य, **अङ्गुलिनिर्देशप्रख्यः**—अङ्गुल्या कृतो यो निर्देशः—वस्तुनिर्देशस्तस्य प्रख्यः—सदृशः। आदिशब्देन शिरआदिनिर्देशग्रहणम्। **अभिलापयोगः**—शब्दयोगः, तेन सहाव्यभिचार इति यावत्। अस्तीति शेषः। व्यतिरेकरीत्यात्र समर्थनं करोति "**अन्यथा**" इति। **अन्यथा**—तदभावे। **बालस्य**—अद्य तावदशिक्षितस्य शिक्षोन्मुखस्य, न तु स्तनपायिनः। **प्रथमव्यवहारे**—तावत्कालमननुभूतायां वृद्धमध्यमवृद्धयोर्घटमानयनयेत्यादिरूपायां व्यवहृतौ, **दृश्यमाने** सति, **व्युत्पत्तिः**—अस्य वाक्यस्यायमर्थ इत्येवमावापोद्वापाभ्यां सङ्केतग्रहणकृता निपुणता, **एव न स्यात्** का कथा तत्कार्यस्य व्यवहारस्येत्येवशब्दाभिप्रायः। कुतो न स्यात् इत्यत आह "**निर्विकल्प**" इति। हि—यस्मात्—बालो **निर्विकल्पकज्ञानपरम्परया**—इदंप्रथमतः ग्रहणवशेन शब्दार्थविषयपरामर्शरूपविकल्परहितश्रवणेन्द्रियकृतशब्दश्रुतिप्रमातृ[2]रूपानुभवपरम्पराभावेन,

---

1 अपोहयितुम्—K. S. S.

2. प्रमा instead of प्रमातृ would be better, because experience (अनुभव) is of the nature of प्रमा and not of प्रमातृ।

**निर्विकल्पकज्ञानपरंपरया[1] हि तं शब्दं शृणोति, ततः[2] तमर्थं पुरः पश्यति, पुनस्तद्विविक्तं भूतलं पश्यति इति घटम् आनय नय इति व्यवहारात् कथम् अस्य अयम् अर्थ[3] इति हृदि परिस्फुरेत, इदम्[4] घट इति, इदमानय इति, इदं नय इति, इतियोजनाप्राणो[5] हि अयमर्थः,योजना च विकल्प-**

**तं शब्दम्**–वृद्धेनोच्चारितं घटानयननयनवाचकं शब्दम्, **शृणोति** । बहुवारं श्रवणानन्तरं सङ्केतग्रहणसंभवमपेक्ष्य **'परम्परया'** इत्युक्तम् । **ततः**–तदनन्तरम्। **तमर्थम्**–व्यवहारविषयं घटरूपमर्थम्, **पुरः पश्यति** तत्रैव स्थितत्वात्, **पुनस्तद्विविक्तं भूतलम्**–घटरहितं तं भूप्रदेशम्, **पश्यति,** मध्यमवृद्धेनानयतिशब्दश्रवणे अन्यदेशं प्रत्यानीतत्वात् नयेति शब्दव्यवहारे तु अन्यत्र नीतत्वात्, न तु तत्र तस्य कोऽपि शृङ्गग्राहिकया शब्दार्थयोर्योजनां कृत्वा दर्शयति "अस्यायमर्थः" इति इति भावः। **इति**–अतः कारणात्, **व्यवहारात्**–वृद्धेनोच्चार्यमाणशब्दवाच्यात् मध्यमवृद्धेन क्रियमाणादानयननयनव्यवहारात्। **अस्य**–तटस्थस्य, बालस्येति शेषः। **इति**–एतद्वस्तु, **हृदि कथं परिस्फुरेत्** । इति किमिति? अस्य शब्दस्यायमर्थो भवति इति। "**अस्य**" इत्यस्य काकाक्षिवदुभयत्र योजना। अथवा "अयमर्थः" इत्यनेनैवास्यायमर्थ इति ज्ञायते। कुतो न परिस्फुरेदित्यत आह "**योजना**" इति। **हि**–यस्मात्, **अयमर्थः**–"अस्यायमर्थः" इत्येतद्वस्तु, इतियोजना––एवंरूपं योजनं प्राणो यस्य तादृशो भवति । इति किमिति? **इदम्**–वस्तु, **घट इति**–घटशब्दवाच्यं भवति, **इदम्**–वस्तु, **आनयेति**–आनयशब्दवाच्यं भवति, **इदम्**–वस्तु, **नयेति**–नयेतिशब्दवाच्यं भवति । तत्र प्रथमं घटमानयेति श्रुतेऽखण्डो वाक्यार्थ एव ज्ञायते, न तु प्रतिपदम् अर्थतः, पुनः प्रसङ्गेन घटं नयेति श्रुते घटशब्दस्यान्वयेन नयशब्दस्य व्यतिरेकेण च ज्ञायते घटपदस्यायमर्थः, आनय-

1. निर्विकल्पविज्ञानपरंपरया—K.S.S.
2. ततः is absent in the K.S.S. edition
3. अस्य अयमर्थो हृदि परिस्फुरेत्—K.S.S.
4. इदम् is not found in the K.S.S. edition.
5. इदमिति—K.S.S.

**व्यापारः। अथ बालस्य प्राग्जन्मानुभूतसङ्केतस्मृतेः एवम्, तथापि सङ्केतकाले**

---

शब्दस्यायं नयशब्दस्यायमिति आनयनयेत्युक्तम्, अन्यथा प्रतिपदमर्थज्ञानं कदापि न संभवेत्। ननु योजनाप्यत्रास्त्येवेत्यत आह **"योजना च"** इति। **"विकल्पव्यापारः"** इति, अनुसन्धानात्मकत्वात् इति भावः। अनुसन्धानकारिविकल्पाभावे हि घटदर्शनसमये शब्दस्मृतिर्नास्ति, तस्यां चोत्पन्नायां तदतिक्रान्तमेवेति संकल्प एव घटोऽपि जात इति किं कुत्र योजयेत्। शब्दस्मृतिरपि तस्य दुरुपपादैव। ननु कथं दुरुपपादा समनन्तरमेव हि शब्दः श्रुतः, मध्ये घटदर्शनमात्रमेव संपन्नम्, इति घट-दर्शने जाते तदुद्बुद्धेन संस्कारेण घटशब्दस्मृतिर्युक्तैवेति। सत्यम्, प्रथमं घटमानयेति व्यवहारे तस्याखण्डवाक्यार्थप्रतीतिरेव,घटं नयेति व्यवहारे तु प्रतिपदमर्थो ज्ञायते, तत्र च पुरातनस्य घटशब्दस्यैव स्वार्थेन सह स्मृत्या योजना क्रियते एव। किन्त्वखण्ड-वाक्यार्थे या खण्डशब्दयोजना क्रियते अस्य वाक्यस्यायमर्थ इति, तत्र या शब्दस्मृतिः सैवास्माभिर्दुरुपपादत्वेनोक्ता। ननु सापि न दुरुपपादा मध्यमवृद्ध-व्यवहारदर्शनमात्रस्याखण्डवाक्यानुभूतेर्व्यवधानात्, अनुभूतेश्च मध्यमवृद्धव्यवहारे तत्कृतसंस्कारोद्बोधात् अखण्डवाक्यस्मृतिरयत्नमेव जायते। सत्यम्, सा स्मृता-खण्डपदपङ्क्तिरखण्डे वाक्यार्थे येन स्मृतेन शब्दराशिरूपेण परामर्शेन योज्यते, अस्यायमर्थ इति तत्स्मृतिः कथं सिद्ध्यति? न हि तदनुभवस्तस्याद्यतावज्जातः, तदभावे च तस्या दुरुपपादत्वमेवेति सा स्मृतिः तस्य बालस्य चैतन्ये स्वरूपतया स्थितैव युक्ता, परमार्थविचारे तु तस्याः स्मृतेरस्यायमर्थ इत्यपि रूपं न भवत्येव, अस्य पदत्रयस्य संस्कृतभाषापेक्षया सामान्यत्वेऽपि देशादिभाषापेक्षया विशेषत्वम् इत्यङ्गुल्यादिनिर्देशप्रख्यत्वमुक्तम्, अङ्गुलिनिर्देशोऽपि विचार्यमाणो विशेष एव, अत एव "प्रख्य" इत्युक्तम्। अत आन्तरः कोऽप्यसौ चैतन्यशक्तिरूपः परामर्शः, येन बालः प्रथम स्वयमेव योजनां करोति, सा शक्तिश्च पश्वादिष्वपि वर्तत एव, गवाद-योपि हि अङ्गुल्यादिनिर्देशेन वस्तु जानन्त्येव। तदुक्तम् :–

"बालास्तिर्यक्प्रमातारो येऽप्यसङ्केतभागिनः।
तेऽप्यकृत्रिमसंस्कारसारामेनां हि संविदम्॥
भिन्नभिन्नामुपाश्रित्य यान्ति चित्रां प्रमातृताम्।"

**स शब्दो विषयत्वेन इदंभावेन प्रत्यवमृश्यमानत्वात्[1] भेदात् प्रच्युत्य**

इति। पाषाणादिष्वपि तस्याः स्थितिरनिवार्यैव, शक्तियुक्तचैतन्ययुक्तत्वात्, अन्यथा वृद्ध्याद्यसंभवात्। अत्र तरूणां चैतन्ये स्वकीयं केशादि, पाषाणानां चैतन्ये स्वकीयमस्थिजातं साक्षितया स्थितमित्यलमनिर्वाच्येषु वस्तुषु हेतुपर्येषणाभिः। अत एव च सर्वेषां जडाजडानां भावानां भगवत्स्तुतिपरत्वं यत् कथयन्ति तद्युक्तमेव परामर्शमात्रस्य स्तुतित्वात्। परामर्शस्य चैतन्यद्वारेण सर्वत्रगतत्वेन साधनात्। चैतन्यस्य च सर्वगतत्वं सन्मात्रभावेन सर्वसत्तादायकत्वेन चिन्मात्रताद्वारेण सर्वज्ञापकत्वेन च द्विविधमेव, अन्यथा जगद्गतं भाववृन्दं किंमयं केन ज्ञातं च भवेत्। ननु परामर्शमात्रेण कथं सर्वोत्कर्षपरामर्शरूपस्तुतिकारित्वं युक्तम्? सत्यम्, सर्वोत्कर्षः–स्वातन्त्र्यम्, तच्चानन्यमुखप्रेक्षित्वं तदेव चाहंपरामर्शस्य साधितम् स एव सर्वत्र जडाजडेषु सारतया स्थित इति सर्वे एव भगवत्स्वरूपा एवेति कः कं स्तूयादित्यलं मूढसंबोधनार्थं कल्पितेषु प्रपंचेषु सूक्ष्मेक्षिकाभिः।

प्रकृतमनुसरामः। अत्र शिष्यः प्रश्नं करोति **"अथ"** इति। प्राग्जन्मनि–पूर्वजन्मनि, अनुभूतो यः सङ्केतः–अस्यायमर्थं इत्येवंरूपस्तस्य स्मृतेः, **एवम्**, योजनं भवतीत्यर्थः। ननु प्राग्जन्मैव किमुच्यते? श्रृणु, प्रथमं तावदयं यत उत्थितस्तदेवास्य प्राग्जन्म, तत्र च सव शक्तितया स्थितमिति यदनेन स्वतन्त्र्यतया नीतं तदस्य प्राग्जन्मकालीनमुच्यते, तदेव स्मरति इति कथ्यते। यदि तु नाऽत्र त्वद्बुद्धिः समर्था तर्हि पिता पुत्रस्य प्राग्जन्मेति जानीहि। तत एव च यद्रेतसा सहास्यागतम्, तदेव चास्य प्राग्जन्मकालीनं तदेव च स्मरतीति कथ्यते नवीनं जन्म च पुत्र एव। यदि चात्रापि त्वद्बुद्धिर्न व्यापृता तर्हि स्मृतिशास्त्रेषु यस्मात्पूर्वजन्मनोऽयमागतस्तदेवास्य प्राग्जन्म, तत्रैव च यद्यदनेन कृतं तदेव अदृष्टवशात् अयमिह स्मरति, नवीनं च यत्र पुनर्येन भावेन जन्म प्राप्स्यतीति। अत्रोत्तरमाह **"तथापि"** इति। **सङ्केतकाले**–प्राग्जन्मनि स्थिते सङ्केतसमये, **स शब्दः**–अद्य योजनाहेतुत्वेन स्थितः परामर्शरूपः शब्दः। **इदंभावेन**–इदन्तया, अयं शब्दोऽस्यार्थस्य वाचकः इत्येवम्। **विषयत्वेन**–विषयभावेन, **प्रत्यवमृश्यमानत्वात्**–प्रमात्रापरामर्श-

1. अप्रत्यवमृश्यमानत्वात्—K.S.S.

**निर्भासमानो विज्ञानशरीरे[1] विश्रान्तः सन् वाचक इति भवति, तद् विज्ञानस्य स्वरूपं चेत् भाति तत् अभिलापमयमेव इति, यथा विषयस्य सुखरूपत्वाभावेऽपि ज्ञानं सुखात्मकं भाति तथा मा भूत् अभिलापात्मा रूपादिः विषयः, तथापि विज्ञानं तदात्मकं अवभासिष्यते। अत्र तु दर्शने**

विषयीकृतत्वेन, संपादितात् **भेदात् प्रच्युत्य**—परप्रमातुः शून्यप्रमातुश्च विच्छिन्नीभूय, **निर्भासमानः**-तस्मिन् काले भासमानः, **विज्ञानशरीरे**-बुद्धिप्रमातरि, **विश्रान्तस्सन् वाचक इति भवति**। परापश्यन्तीभावात् प्रच्युतो मध्यमाभावमागत्य बुद्धिप्रमातरि निरूढः शब्दो हि स्वार्थनियमितः सन् वाचक इति कथ्यते। ततोऽपि च्युतस्तु वैखरीभावमागतः प्राणदेहरूपप्रमातृद्वये विश्रान्तः तराम्[2], **तद्विज्ञानस्य**—वाचकविश्रान्तिस्थानभूतस्य बुद्धिप्रमातुः, **स्वरूपं चेद् भाति**—स्वप्रकाशत्वेन स्फुरति, **तत्**—तर्हि, **अभिलापमयमेव**-शब्दमयमेव, भाति, वाचकविश्रान्तिस्थानस्वभावत्वात्। तज्जन्मान्तरे बालस्याभिलापः स्वाभाविक एव सिद्ध इति भावः। "**इति**" शब्दः प्रमेयपरिसमाप्तौ। ननु विषयोऽभिलापरूपो नास्तीति कथं विज्ञानं तन्मयतायुक्तं विषयानुगुणेनैव विज्ञानोत्थानात्, अन्यथा तस्यापि परप्रमातृत्वानपायात् इत्यत आह "**यथा**" इति। **ज्ञानम्**-विज्ञानम्, **भाति**—स्फुरति, विषयकृततात्कालिकनैरपेक्ष्यवशेन स्वरूपभूतसुखाविर्भावात्। **तथा**—तद्वत्, **तदात्मकम्**—स्वात्मविश्रान्ताभिलापमयम्। **अवभासिष्यते**-स्वप्रकाशत्वेन स्वयं स्वं प्रति भासनविषयीभविष्यति, कर्मकर्तरि लृडुपरि "ते" आदेशः। अस्मद्दर्शने तु विषयोऽप्यभिलापमय एव इत्याह "**अत्र तु दर्शने**" इति। **अत्र दर्शने**, श्रीशैवनये इत्यर्थः। तदुक्तम् :—

> अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
> विवर्ततेर्थभावेन प्रक्रिया जगतो यतः॥

1. विज्ञानशरीरविश्रान्तीकृतः—K.S.S.
2. 'तराम्' seems to be connected with कथ्यते, but both the construction of the sentence and the use of 'तराम्' are rather unusual.

**विषयस्यापि विमर्शमयत्वात् अभिलापमयत्वमेव वस्तुतः, स्तैमित्याद्यवस्थापि यदि न परामर्शमयी तर्हि अस्यां विकल्पात्मकप्रमातृव्यापारानुल्लासात् संभवः शपथपरमार्थ एव, स्मरणं च न स्यात्, रूपविषयाध्यवसायी हि यदि विकल्प उदियात् किमन्यत्, सर्वचिन्तासंहरणेन स्तैमित्यं नाम न स्यात्, इति तत्रापि अस्ति अन्तः परामर्शः, सकलेन च शब्दग्रामेण शब्दनं हि सहन्ते वस्तूनि, तत्र च नियतशब्दयोजनं क्रियते। तथा हि–बालस्य पुरः[1] पिण्डे सहजो यः परामर्शः, अहम् इत्यविच्छेदेन इदम् इति विच्छेदेन**

इति। ननु यदि सर्वमभिलापमयमेव तर्हि कथं स्तैमित्यं नाम संभवति इत्यत आह **"स्तैमित्य"** इति। विकल्पात्मकः–विकल्परूपः यः प्रमाता–बुद्धिप्रमाता तस्य यो व्यापारः—ग्रहणरूपः तस्यानुल्लासात्। **शपथपरमार्थः,** शपथेनैव यदि कश्चित्तत्सत्त्वमङ्गीकरोति तर्हि तं प्रत्यस्ति, अन्यथा तत्सत्तामेव कोऽपि नाङ्गीकरोति, साक्ष्यभावात्, साक्षी च विज्ञानमयः स्वात्मैवेति भावः। **स्मरणं च**— स्तैमित्यादुत्थितस्य उत्तरकालीनम् "स्तैमित्यं ममासीत्" इत्येवंरूपा स्मृतिः। ननु यद्येवं तर्हि तत्राप्यध्यवसायः स्फुट एव भवतु इत्यत आह **"रूप"** इति। रूपविषय अध्यवसायः–परामर्शोऽस्यास्तीति **रूपविषयाध्यवसायी,** स्तैमित्ये इति शेषः, **यदि उदियात्,** तर्हीति शेषः। **किमन्यत्**–अत्राङ्गीकृतादस्मादध्यवसायाद् भिन्नम्, **सर्वचिन्तासंहरणेन स्तैमित्यं नाम**—सर्वचिन्तासंहरणरूपं स्तैमित्याख्यं वस्तु किं स्यात्, स्तैमित्याध्यवसायस्यैव स्तैमित्यसिद्धिहेतुत्वान्न किमपि स्यादित्यर्थः। फलितमाह **"इति"** इति। **इति**–अतः कारणात्। **तत्रापि**–स्तैमित्येऽपि, **अन्तः परामर्शः अस्ति**। एतेनायातं सर्वशब्दानां सर्वार्थविषयत्वं कथयति **"सकलेन"** इति। **शब्दनम्**–कथनम्, वाचकतया संयोजनम्। अत्र समर्थनं करोति **"तथा हि"** इति। **पुरःपिण्डे**–अग्रगते गवादिपिण्डे। **सहजः**–स्वाभाविकः, न तु इहानुभूतशब्दसंस्काररूपः, **परामर्शः**–प्रथमव्यवहारयोजनानिमित्तभूतः, वाशब्दद्वयमुभयत्र विकल्पप्रधानताद्योतनार्थम्। **तत्पृष्ठे**-अविच्छ-

1. पुरतः पिण्डे—K.S.S.

**वा तत्पृष्ठे एव गौर इति गौः इति वा शब्द आरोप्यते, सोऽपि अभ्यासात् प्रमातृमयो[1] भवति, तत्पृष्ठे च अन्यः शुक्ल इति, अन्यत् बलीवर्द[2] इति, इत्येवं सङ्केततत्त्वम्। तस्मात् अस्ति साक्षात्कारे प्रत्यवमर्शः। अपिशब्दस्य अयमाशयः। इह साक्षात्कारो वस्तुतः 'पश्यामि' इत्येवंभूतविकल्पनव्यापारपर्यन्त एव। विकल्पो हि प्रत्यक्षस्य व्यापार इति परोऽपि मन्यते। न च व्यापारः तद्वतो भिन्नो युक्तः, तत्स्वरूपभूतो हि सः। भवतु वा**

दपरामर्शस्य विच्छेदपरामर्शस्य वा पृष्ठे, **"गौर"** इति देशभाषाशब्दोपलक्षणम्, "गौः" इति नानाविधशास्त्रभाषाशब्दोपलक्षणम्। **"आरोप्यते"** इति, शुक्तिकायां रजतमिवारोपविषयतां नीयते, परमार्थतस्तु काकवाशितादिरूपस्यान्तरपरामर्शस्यैव स्थितत्वात् तस्यैव च वर्णविशेषैः उपरागीकरणात्। **सोऽपि**--स शब्दोऽपि, **प्रमातृमयः**-विज्ञानशरीराविष्टः। **तत्पृष्ठे च**--प्रोक्तशब्दद्वयपृष्ठे च, **अन्यः "शुक्लः"** इत्यारोप्यते, **अन्यत् "बलीवर्दः"** इत्येवमारोप्यते, **इत्येवं सङ्केततत्त्वं** भवति, न तु कोऽपि शब्दः कुत्रापि नियतो वर्तते, तत्त्वे हि सर्वा भाषा एकरूपा एव भवेयुरिति भावः। **"विमर्श"** इत्यन्तं व्याख्यातस्य श्लोकखण्डस्य वाच्यमुपसंहरति **"तस्मात्"** इति। एतद्वाक्यगतस्य **"अपि"** शब्दस्याभिप्रायमाह **"अपिशब्दस्य"** इति। **साक्षात्कारः**-प्रत्यक्षीकरणम्। कुतो विकल्पव्यापारपर्यन्त इत्यत आह **"विकल्पो हि"** इति। **प्रत्यक्षस्य**-प्रत्यक्षप्रमाणस्य। तदुक्तम्:-

"प्रत्यक्षं द्विविधं सविकल्पकं निर्विकल्पकं च"

इति। **परोऽपि**--तार्किकोऽपि न तु बौद्धः, तन्मते विकल्पस्याप्रत्यक्षरूपत्वात्। ननु ततः किम् इत्यत आह **"न च"** इति। **तद्वतः**-व्यापारवतः। कुतो न भिन्न इत्यत आह **"तत्"** इति। ततश्च स्फुटमेव साक्षात्कारस्य विमर्शमयत्वमेवेति भावः। एतत्तु वाक्यदृष्ट्या साधनम्। अत्र बौद्धमतमुत्थापयति

1. प्रमातृमयीभवति—K.S.S.
2. अन्यः शुक्ल इति, बलीवर्द इति एवमन्यत इति सङ्केततत्त्वम्—K.S.S.

क्षणमात्रस्वभावः साक्षात्कारः, तत्रापि अस्ति विमर्शः। अवश्यं चैतत्। 'कथम्[1] अन्यथा' इति। यदि स न स्यात् तत् एकाभिसंधानेन जवात् गच्छन्, त्वरितं च वर्णान् पठन्, द्रुतं च मन्त्रपुस्तकं वाचयन्, न अभिमतमेव गच्छेत्, उच्चारयेत्, वाचयेत् वा। तथा हि—तस्मिन् देशे ज्ञानम्-आचिक्रमिषा-आक्रमणम्-आक्रान्तताज्ञानम्-प्रयोजनान्तरानुसंधानम्-तित्यक्षा-देशान्तरानुसंधिः, तत्रापि आचिक्रमिषा इत्यादिना योजनवियोजनरूपेण[2] प्रत्यवमर्शेन[3] विनाभिमतदेशावाप्तिः कथं भवेत्। एवं त्वरितोद्ग्रहणवाचनादौ

"भवतु वा" इति। **क्षणमात्रस्वभावः**—विकल्पारूषितैकक्षणस्वरूपः, बौद्धमते सर्वस्य क्षणिकत्वात्। अत्रापि विमर्शस्य सत्त्वं साधयति **"तत्रापि"** इति। **तत्रापि**—क्षणमात्रस्वभावे साक्षात्कारेऽपि। तेषामत्रानङ्गीकारमाशङ्क्याह—**"अवश्यम्"** इति। कथमित्यपेक्षायां **"कथमन्यथा"** इत्यादिश्लोकशेषमुत्तरतया व्याचष्टे **"कथम् अन्यथा"** इति। **"कथमन्यथा"** इति पदद्वयं व्याचष्टे **"यदि"** इति। **सः**—विमर्शः। **"प्रतिसन्धान"** इति पदं व्याचष्टे **"तत्"** इति। **तत्**—तदा, **एकाभिसंधानेन**—धावनं करोमीत्यादिप्रथमपरामर्शरूपेणानुसन्धानेन, **अभिमतम्**—इष्टगन्तव्यदेशाद्येव। अत्र समर्थनं कर्तुमारभते **"तथा हि"** इति। **तस्मिन्देशे**—प्रथमं धावनविषयीकृते देशे। **ज्ञानम्**—इतो देशाद्धावनं करोमीति, तत **आचिक्रमिषा**—आक्रान्तुमिच्छा, तत **आक्रमणम्**—तद्देशाक्रान्तिः, ततः **तित्यक्षा**—तस्य देशस्य त्यक्तुमिच्छा, ततो **देशान्तरानुसन्धिः**—द्वितीयपदाश्रयभूतस्य देशस्य मनस्यभिसन्धानम्, **तत्राचिक्रमिषा,** आदिशब्देनाक्रमणादेः देशान्तराभिसन्धानादेश्च ग्रहणम्। **इत्यादिना**—इत्येवंरूपेण, **योजनवियोजनरूपेण परामर्शेन**—अस्फुटेनावश्याङ्गीकर्तव्येन च, **प्रत्यवमर्शेन विनाभिमतदेशाप्तिः कथं भवेत्**, प्रतिपदमेतावतः

1. 'कथम्' is not found in the K.S.S. edition.
2. संयोजनवियोजनरूपेण—K.S.S.
3. परामर्शेन विना—K.S.S.

**मन्तव्यम्। तत्र विशेषतः स्थानकरणाक्रमणादियोगः। अत्र च यतः**

ज्ञानेच्छाऽऽक्रान्त्यादिजालस्य संभव एव तत्संभवात् न स्यादित्यर्थः। येन रूपेण च तस्य ज्ञानादि तत्र स्थितं तदेव सहजोहंपरामर्श इति तत्रावधानपरेणैव भाव्यम्। तदुक्तम् :–

"धावन् वा यत्पदं गच्छेत्तत्र स्पन्दः प्रतिष्ठितः।"

इति। न चात्राप्यसंभवो ज्ञानादेर्वाच्यः, पदद्वयमध्यप्रदेशरूपस्य सर्वमयस्य मध्यपदस्यात्र स्थितत्वात्, मध्यपदं च ज्ञानाज् ज्ञानान्तरगमने स्फुटतरमेव प्रबुद्धानाम्, सुप्रबुद्धानां सर्वदा सर्वं तन्मयमेव, अप्रबुद्धानां त्वत्राधिकार एव नास्ति। तदुक्तम् :–

'एकचिन्ताप्रसक्तस्य यतः स्यादपरोदयः।
उन्मेषः स तु विज्ञेयः स्वयं तदुपलक्षयेत्'॥

इति।

श्रीवसिष्ठेनापि एतदेव मनसि कृत्वा

"देशाद्देशान्तरं दूरं गतायाः संविदः क्षणात्।
यद्रूपममलं मध्ये तद्रूपं परमात्मनः" ॥

इत्युक्तम्। अत्रैव स्थितिं कुर्वतामणिमादिकमैश्वर्यं विघ्नत्वेनाविर्भवति। तदुक्तम् :–

"अतो बिन्दुरतो नादो रूपमस्मादतो रसः।
प्रवर्तन्तेऽचिरेणैव क्षोभकत्वेन देहिनः॥"

इति। देहिन इत्यनेनैतत् सूचितम्–प्रथमं यथातथाभूतादेवोत्थाय[1] गन्तव्यम् अन्यथा मध्यधामाभ्यासिनोऽपि मध्ये क्षोभा आयान्त्येवेत्यलम्। आदिशब्दगृहीते तद्ग्रहणवाचनादौ चामुं न्यायम् अतिदिशति **"एवम्"** इति। आदिशब्देन त्वरितं क्रियमाणस्य सर्वस्य क्रियाजातस्य ग्रहणम्। तत्रापि विमर्शस्फूर्तिरस्तीति भावः। तदुक्तम् :–

"अयमुच्चारयन् वाक्यं वर्णाद्वर्णं कथं व्रजेत्।
यावन्न मध्ये विश्रान्तस्त्वयि शुद्धचिदात्मनि॥"

1. प्रथमं यथा तयादेवोत्थाय—C.

पश्चाद्धाविस्थूलविकल्पकल्पना न संवेद्यते, तत एव त्वरितत्वम् इति सूक्ष्मेण प्रत्यवमर्शेन संवर्तितशब्दभावनामयेन भाव्यमेव। संवर्तिता हि शब्दभावना प्रसारणेन विवर्त्यमाना स्थूलो विकल्पः, यथा इदमित्यस्य प्रसारणा घटः शुक्ल इत्यादिः, तस्यापि पृथुबुध्नोदराकारः शुक्लत्वजातियुक्तगुणसमवायी इत्यादिः। "धावु गतिशुद्धौ" इति पाठात् धाविस्त्वरितगतौ स्वशक्तिवशात् वर्तत इति॥ १९॥

भवतु एवं सूक्ष्मो विमर्शः प्रकाशशरीरावेशी, यत्र तु स्थूलत्वेन

---

इति। शुद्धाहंपरामर्शयुक्त एव शुद्धचिदात्मेति नान्यथा शङ्क्यम्। नन्वेतत्कथमित्यपेक्षायामाह **"तत्र"** इति। **तत्र**—त्वरितोद्ग्रहणादौ। स्थानानाम्-कण्ठादीनाम्, करणानाम्—स्पृष्टत्वादिरूपाणाम्। **यत्र**—त्वरितोद्ग्रहणादिसमये, च भाविनी—ततो विश्रम्य स्फुरणशीला, **न संवेद्यते**—नानुभूयते। **इति**—अतः कारणात्, **संवर्तितशब्दभावनामयेन**—अतिसङ्कुचितशब्दपरामर्शरूपेण, **भाव्यमेव,** अन्यथा एकवर्णोच्चारानन्तरं द्वितीयवर्णज्ञानाद्यसंभवे द्वितीयवर्णपठनमयुक्तमेव स्यादिति भावः। संवर्तिता—प्रथमं त्वरितपठनरीत्या सङ्कुचिता, शब्दभावना—वर्णद्वयमध्यगता तत्संयोजनहेतुप्रत्यवमर्शरूपा, **विवर्त्यमाना**—स्फुटतां नीता सती, **स्थूलो विकल्पो** भवतीति योजना। अत्रोदाहरणमाह **"यथा"** इति। आदिशब्देन क्रियादेर्ग्रहणम्। **तस्य**—घटः शुक्ल इत्यादेः। तत्र घट इत्यस्य प्रसारणमाह **"पृथु"** इति। शुक्ल इत्यस्य प्रसारणा **"शुक्लत्व"** इति। नन कथं धावतेस्त्वरितगतिवाचकत्वम् इत्यत आह **"धावु गति"** इति। **स्वशक्तिवशात्**—स्वशक्तिवशेन। धातूनां हि उपसर्गैर्विनापि स्वशक्त्यैव नानार्थत्वम्, यथा यौतेः मिश्रणामिश्रणार्थत्वमिति भावः। "धावु गतिशुद्धयोः" इति प्रशस्तः पाठः। **'इति'** शब्दः श्लोकव्याख्यासमाप्तौ॥ १९॥

अथ विंशस्य श्लोकस्यावतरणिकां करोति **"भवत्वेवम्"** इति।

अत्र टीका:—

**एवम्**—त्वदुक्तप्रकारेण, **सूक्ष्मः**—शुद्धाहंमात्रस्वरूपः, **प्रकाशशरीरावेशी**—

विकल्परूपता स्फुटा, तत्र शब्दो नीलादिवत् एव पृथक् प्रतिभासते— नीलम् इदम् इति, स कथं प्रकाशस्वरूपात् अपृथग्भूतः स्यात्, शब्दात्मा च विमर्शः, स च अत्र मायात्मके भेदपदेऽपि प्रकाशापृथग्भूतो भवद्भिः इष्टः, तत् एतत् कथं प्रतिपत्तव्यम् इत्याशङ्क्याह:—

**घटोऽयमित्यध्यवसा नामरूपातिरेकिणी ।**
**परेशशक्तिरात्मेव भासते न त्विदन्तया ॥ २० ॥**

केन एतत् उक्तम् घट इति यः स्थूलः शब्दः स प्रकाशजीवितस्वभावो विमर्श इति । सोऽपि हि स्थूलः शब्दोऽर्थवत् पृथग्भूत एव भाति । तौ नामरूपलक्षणौ शब्दार्थौ एकरूपतया 'सोऽयम्' इत्येवंरूपत्वेन परामृशन्ती अध्यवसा[1] या सा परमेश्वरशक्तिः विमर्शरूपा आत्मव-

प्रकाशस्वरूपाविष्टः, प्रकाशस्य तं विना स्वरूपानुद्भूतेः, **यत्र तु**—यस्मिन्नीलादौ, कथं प्रतिभासते इत्यत आह **"नीलम्"** इति, **सः**—विकल्परूपः शब्दः, अत्र पुरःस्थितः[2] **"अपि"** शब्दो भिन्नक्रमः, तथा च भवद्भिरपीष्ट इति योजना। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । **"घटोयम्"** इति ।

अत्र टीका :—

श्लोकं व्याख्यातुं प्रक्रियां तनोति **"केनैतत्"** इति । पुनः किमुक्तमस्तीत्यपेक्षायामाह **"सोऽपि"** इति । पुनः कस्य प्रकाशजीवितत्वमित्यत आह— **"तौ"** इति । **तौ**—प्रसिद्धौ, नामरूपौ-घट इति नामेदमिति रूपम् लक्षणम्—स्वरूपं ययोस्तौ, **शब्दार्थौ । "एकरूपतया"**, स्वयमेवास्य पदस्य व्याख्यां करोति **"सोऽयम् इत्येवम्"** इति । **परामृशन्ती**—शब्दार्थैकीकरणरूपया प्रत्यभिज्ञया परामर्शविषयतां नयन्ती, अत एव ताभ्यामतिरेकेण युक्तेति भावः। **अध्यवसा**— बुद्धिव्यापाररूपमध्यवसानम्, **या** भवति **सा** न तु घट इति स्थूलः शब्दः, **परमेश्वर**—

1. अध्यवसायशक्तिः—K.S.S.
2. परः स्थितः—C.

देव अहमित्यनवच्छिन्नत्वेन भाति, न तु कदाचित् इदन्तया विच्छिन्नत्वेन भाति, विच्छिन्नत्वेन अवभासे परप्रतिष्ठत्वात् पुनर्विमर्शान्तरेण भाव्यम्, तत्रापि एवम् इति अनवस्थातो[1] नीलस्य प्रकाशनमेव न स्यात् प्रतिष्ठालाभाभावात्। तस्मात् सर्व एव विमर्शः प्रकाशात् अविच्छिन्न एव इति। अध्यवसा इति, 'आतश्चोपसर्गे' (पा. व्या. ३-३-१६) इत्यङन्तः स्त्रियाम् ॥२०॥

---

**शक्तिः विमर्शरूप**—नामरूपोपरागेपि परमार्थतोहमित्येव विमर्शरूपा सती। **आत्मवदेव**–प्रकाशवदेव, **अहमित्यनवच्छिन्नत्वेन भाति**, तत्स्वभावभूतत्वात्, उपरागस्य तु अकिञ्चित्करत्वादिति भावः। ननु कुतो न इदन्तया भाति "इयं घटाध्यवसा" इति भिन्नत्वेन भानादित्यत आह **"इदन्तया"** इति। **परप्रतिष्ठत्वात्** स्वात्मविश्रान्त्यभावेन विषयनिष्ठतया ग्रहणात्, **पुनः विमर्शान्तरेण**–स्वात्मारोहार्थं कृतेनान्येन विमर्शेन, **भाव्यम्,** विमर्शं विना स्वात्मारोहाभावात्, स्वात्मारोहं विना च संपन्नाप्यध्यवसाऽसत्कल्पैवेति भावः। ननु भवतु विमर्शान्तरमपि ततः किम् इत्यत आह **"तत्रापि"** इति। **तत्रापि**–तस्मिन्विमर्शान्तरेऽपि, **एवम्,** विमर्शान्तरेण भाव्यमित्यर्थः, समानन्यायत्वादिति भावः। **इति**–एवम्, **अनवस्थातः**–अनवस्थादोषप्रसङ्गात्, **नीलस्य प्रकाशनमेव न स्यात्,** प्रमातुरध्यवसानग्रहणमात्र एव क्षीणत्वादिति भावः। फलितं स्वाभीष्टं सिद्धत्वेन कथयति **"तस्मात्"** इति। **सर्व एव**–अहंस्वरूपः नीलादिरूपश्च सामान्यविशेषस्पन्दात्मकः। **"इति"** शब्दो व्याख्यासमाप्तौ। **"अध्यवसा"** इति पदं व्युत्पादयति **"अध्यवसा"** इति। **"अङ्"** इति, भावे विहितः इत्यर्थः, स्त्रियां टाबन्तत्वात् स्त्रीलिङ्ग इत्यर्थः। अध्यवसेति उपसर्गद्वयपूर्वस्य "षो अन्तकर्मणि" इत्यस्येदं रूपम्, "आदे च" इति ओकारस्याकारः॥ २०॥

---

1. अनवस्था अतः—K.S.S.

**ननु एवं सर्वस्यैव ज्ञानकलापस्य अहमित्येव प्रतिष्ठाने वेद्यभूमिस्पर्शो नास्ति वेद्यभुवि च देशकालयोगः न तु वेदकांशे, देशकालयोगाभावे च यत् इदं ज्ञानानां देशापेक्षया[1] प्रमात्राद्यंशापेक्षया च सक्रमत्वं लक्ष्यते तत् कथं स्यात्, क्रमाभावे च एकत्वमेव वस्तुतो भवेत्, ततश्च 'ज्ञान-स्मृत्यादिभिस्तद्वान्[2] परमेश्वरः' इति यत् उक्तं तत् कथं निर्वहेत् इत्याशङ्कां शमयन् पूर्वोक्तमुपसंहरति:—**

**केवलं भिन्नसंवेद्यदेशकालानुरोधतः ।**
**ज्ञानस्मृत्यवसायादि सक्रमं प्रतिभासते ॥ २१ ॥**

---

अथैकविंशस्य श्लोकस्यावतरणिकां करोति **"ननु एवम्"** इति ।

अत्र टीका:—

**एवम्,** समनन्तरोक्ते प्रकारे सतीत्यर्थः, **प्रतिष्ठाने**—स्थितौ सत्याम्, कुतो नास्तीत्यत आह **"वेद्य"** इति। **"च"** शब्दो "हि" शब्दार्थे, मास्तु देशकालस्पर्शस्ततः किम् इत्यत आह **"देश"** इति। **देशापेक्षया प्रमात्राद्यंशापेक्षया कथं स्यात्,** कालस्यैव क्रमहेतुत्वान्न स्यादित्यर्थः। ननु तदपि मास्तु इत्यत आह **"क्रम"** इति। नन्वेकत्वमेव भवतु ततोऽपि किम् इत्यत आह **"ततश्च"** इति। **ततश्च**—एकत्वे[3] च सतीत्यर्थः । **ज्ञानस्मृत्यादिभिः तद्वान्**—ज्ञानस्मृत्यपोहनशक्तिमान् । **"उक्तम्"** इति, न चेदन्तःकृतेति श्लोके इत्यर्थः । **निर्वहेत्**—सिद्धिं गच्छेत् । **उपसंहरति,** सङ्कलय्यकत्र कथयतीत्यर्थः । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । **"केवलम्"** इति ।

---

1. स्वांशापेक्षया ज्ञानान्तरापेक्षया—K.S.S.
2. ज्ञानस्मृत्यादिशक्तिभिस्तद्वान्—K.S S
3. एकत्वाभावे च सति—C. The argument requires एकत्वे च सति । The word अभाव, as found in the manuscript, seems to be out of place.

सत्यम् एवम् अक्रममेव संवित्तत्त्वम्, किन्तु स्वशक्तिवशात् भिन्नत्वेन भासितानि यानि वेद्यानि तेषां मूर्तिभेदकृतो यो दूरादूरवैतत्यावैतत्यादिः देशः, क्रियाभेदकृतश्च यः चिरशीघ्रक्रमादिरूपः कालः,[1] तौ अनुरुध्य छायामात्रेण अवलम्ब्य, ज्ञानस्मरणाध्यवसायानां स्वांशा इव भान्ति निरंशानामपि, तद्भासमानांशकृतश्च सक्रमत्वावभासः परस्परापेक्षया स्वांशापेक्षया च, यद्यपि कालक्रम एव स्फुटो विज्ञानेषु भाति न देशक्रमः,

---

अत्र टीका :–

**"केवलम्"** इति पदं व्याचष्टे **"सत्यम्"** इत्यादिना **"किन्तु"** इत्यन्तेन। **"स्वशक्तिवशात्"** इत्यस्योपयोगित्वेनाध्याहारः। **"भिन्नसंवेद्य"** इत्यादेस्समस्तपदस्य विग्रहं व्याख्यां च करोति **"भिन्नत्वेन"** इति। **'संवेद्य'** पदं व्याचष्टे **"वेद्यानि"** इति। **वेद्यानि**–नीलादयो विषयाः, **तेषां यः** मूर्तिभेदः–स्वरूपभेदः–तेन कृतः **यो देशः**, देशो हि वस्तुस्वरूपभेदमात्रमेव। किंरूपो देश इत्यपेक्षायां तद्विशेषणमाह **"दूर"** इति। तथा यः क्रियाभेदः–चेष्टाभेदस्तेन कृतः **यः कालः**, कीदृशः कालः इत्यत आह **"चिर"** इति। **तौ**-देशकालौ। **"अनुरोधतः"** इत्यस्यार्थमाह **"छाया"** इति। **छायामात्रेण**-भासमात्रेण, न तु परमार्थतः, **अवलंब्य,** आश्रित्येत्यर्थः, एतेन ल्यब्लोपेऽयं तसिलिति सूचितम्। पूर्वार्धं व्याख्यायोत्तरार्धं व्याचष्टे **"ज्ञान"** इति। **"आदि"** शब्देन ज्ञानाद्यंशानां ग्रहणम्। कथमादिशब्दगृहीता अंशाः संभवन्ति इत्यत आह **"स्वांशा"** इति। **निरंशानामपि** सतां **स्वांशा इव भान्ति,** उपाधिवशेनाकाशांशवदिति योजना। ते भासमानाश्च ते अंशास्तैः कृतः–**तद्भासमानांशकृतः**। **"सक्रमं प्रतिभासते"** इति व्याचष्टे **"सक्रम"** इति। तत्र **"क्रम"**[2] इति पदेन सूचनया तद्व्याख्या, **"अवभास"** इत्यनेन प्रतिपूर्वभासृधातुव्याख्या। नन

---

1. क्रियाभेदकृतश्च चिरशीघ्रक्रमादिरूपः कालः—K.S.S.
2. तत्र कृत इति पदेन—C.

तथापि विमूढस्य पर्वतसंवेदनं विततमिव बदरसंवेदनं च सूक्ष्ममिव भाति इति देशक्रमोऽपि दर्शितः, तेन वेद्यगतक्रमस्वीकाराभासात् सक्रमत्वम् आभासमानमपि न अपारमार्थिकम् आभासमानस्य परमार्थत्वात्, ततश्च युक्तमुक्तम् 'ज्ञानादयोऽस्य भगवतः शक्तयः' इति।

'मायाशक्त्या विभोः'

इति श्लोकेन स्वरूपवैचित्र्यं ज्ञानानां दर्शितम्। अनेन तु देशकालवैचित्र्यम् इति विशेषः। इति शिवम् ॥ २१ ॥

इति श्रीमदाचार्याभिनवगुप्तविरचितायामीश्वरप्रत्यभिज्ञासूत्रविमर्शिन्यां प्रथमे ज्ञानाधिकारे ज्ञानशक्तिनिरूपणं नाम पञ्चममाह्निकम् ॥

---

क्रमशब्दस्य सापेक्षशब्दत्वात् किमपेक्ष्य स क्रमः प्रतिभासते इत्यपेक्षायां सूत्रे कृतमप्येतन्निर्णयं करोति "**परस्पर**" इति। न हि ज्ञानादय एककाले एव संभवन्तीति भावः। न हि ज्ञानं युगपत् प्रादुर्भवति, अपि तु प्रमात्राद्यंशावलंबक्रमेणैव, एवं स्मृत्याद्यपि। शिष्यशङ्कां मनसि कृत्वा निर्णयान्तरमपि करोति "**यद्यपि**" इति। "**अपि**" शब्दो देशक्रमदर्शनस्य स्तोकमयुक्ततां सूचयति। फलितमाह "**तेन**" इति। आभासमानस्य च पारमार्थिकत्वं प्रागिवार्थं इति श्लोकोक्तयुक्त्या ज्ञेयम्। एतदवष्टम्भेन पूर्वोक्तवस्तुनो युक्ततां साधयति "**ततश्च**" इति। "मायाशक्त्या" इति पूर्वश्लोकेन सहास्य पुनरुक्ततां निवारयति "**माया**" इति। **अनेन**-एतेन श्लोकेन, **इति विशेषः**-एवं भेदो भवति। "**इति**" शब्द आह्निकसमाप्तौ। "**शिवम्**" इति मङ्गलवाचकं परतत्त्वपरामर्शसूचकञ्चेति शिवम् ॥ २२ ॥

इति श्रीभास्करकण्ठविरचितायां श्रीप्रत्यभिज्ञासूत्रविमर्शिनीटीकायां श्रीभास्कर्याख्यायां ज्ञानाधिकारे पञ्चममाह्निकं समाप्तम्। शुभमस्तु सर्वजगताम् ॥

# अथ षष्ठमाह्निकम् ।

स्वात्माभेदघनान्भावांस्तदपोहनटङ्कतः ।

छिन्दन्यः स्वेच्छया चित्ररूपकृत्तं स्तुमः शिवम् ॥

एवं स्मृतिशक्तिर्ज्ञानशक्तिश्च निरूपिता । अथ तदुभयानुग्राहिणी अपोहनशक्तिर्वितत्य श्लोकैकादशकेन 'अहं प्रत्यवमर्शो यः प्रकाशात्मा'

---

**अथ षष्ठाह्निकप्रारम्भः ।**

स्वरूपस्तम्भगा भावपुत्रिका विविधात्मिकाः ।

अपोहशक्त्यापास्येवोद्भावयन्तं शिवं स्तुमः ॥

अथ ज्ञानाधिकारे षष्ठाह्निकयाख्यामारभमाणस्तन्निर्विघ्नसमाप्तये परतत्त्वाख्येष्टदेवतानुस्मरणरूपं मङ्गलं समस्ताह्निकाभिप्रायसूचकश्लोकेन शिष्यशिक्षार्थं निबध्नाति "**स्वात्माभेद**" इति ।

अत्र टीका :–

वयं **तं शिवम्**––प्रकाशस्वरूपपरमात्मतत्त्वरूपं शिवेति प्रसिद्धं सुखकारि किमप्यान्तरं तत्त्वम्, **स्तुमः**–स्तुतिद्वारेण तत्स्वरूपं विमर्शविषयतां नयामः । ततो **यः स्वेच्छया**––स्वातन्त्र्यप्रेरितया कार्यैकगम्ययाऽतिसूक्ष्मयेच्छाशक्त्या स्वरूपभतया, न तु लौकिकेच्छया मनोधर्मरूपया, स्वात्मनः–प्रकाशरूपात् स्वस्मात्, यः अभेदः–भेदराहित्यम्, स्वस्मिन् तादात्म्येनावस्थानमिति यावत्, तेन घनान्––एकपिण्डरूपान् घटादीनिव मृदन्तः, **भावान्**–ग्राह्यग्राहकरूपान् जडाजडान पदार्थान्, ते–भावाः, अपोह्यन्ते-स्वतोऽन्योन्यतश्च भेदेन भास्यन्ते ऽनेनेति, तदपोहनशक्तिरिति यावत्, तदेव टङ्कम्–पाषाणदारणं करणम्, ततः, तेनेत्यर्थः । **छिन्दन्**–स्वतोऽन्योन्यतश्च भेदेन भासयन् । चित्राणि यानि रूपाणि अर्थात्तेषां भावानां स्वरूपाणि तानि करोति–प्रतिबिंबतया स्वात्मन्याविर्भावयतीति तादृशो भवति । सार्वकालीनां प्रत्यत कालस्यापि सत्ताप्रदत्वेनातिमहतीं स्वरूपत्वेन स्थितां सत्तां

**इत्यादिना 'सिद्धे सर्वस्य जीवतः' इत्यन्तेन निर्णीयते। तत्र श्लोकेन प्रत्यवमर्शो अविकल्पो विशेषः इति सूच्यते। ततः श्लोकेन शुद्धेऽहंप्रत्यवमर्शोऽपोहनव्यापारासंभवः उच्यते। ततः स्वदृष्टावेव तदुपपत्तिः इति**

---

स्वात्मनि कर्तृत्वमाभास्य तद्भावेन भजति। शस्त्रस्य छेदनस्य करणं[1] प्रति हेतुत्वं द्योतयति। एतेनापोहनशक्तिरत्र निर्णीयत इति सूचितम्। अन्योपि महाशिल्पी स्फाटिकशिलादेः टङ्केन खण्डान् छिन्दन् चित्राः पुत्रिकाः करोति, परन्तु व्यतिरिक्तान् व्यतिरिक्तेन करणेन छिन्दन् व्यतिरिक्तानेव तान् करोति। अयन्तु स्वात्मन एव छिन्दन् स्वात्मरूपाण्येव रूपाणि स्वस्मादभिन्नेनेच्छामात्रेण करोति इति व्यतिरेको व्यङ्ग्यः।

एवं मङ्गलं संपाद्य समस्ताह्निकाभिप्रायं शिष्यबुद्धिसमाधानार्थं प्रथममेव कथयति **"एवम्"** इति।

अत्र टीका :–

**निरूपिता,** समनन्तरोक्ताह्निकद्वयेनेत्यर्थः। **ते उभे**––ज्ञानस्मृतिरूपशक्ती, तयोरुभयम्–युगलकम्[2] **अनुगृह्णाति**–अपोहितविषयप्रदानेनानुग्रहविषयतां नयतीति तादृशी। केन श्लोकैकादशकेनेत्यपेक्षायां श्लोकैकादशकमाद्यन्ताभ्यामुपलक्षयति **"अहम्"** इति। **निर्णीयते,** प्रतिपक्षदलनपूर्वकं निश्चयविषयतां नीयते इत्यर्थः। सामस्त्येनाभिप्रायमुक्त्वा व्यस्तत्वेनापि कथयति **"तत्र"** इति। **तत्र,** श्लोकैकादशकमध्ये इत्यर्थः। **प्रत्यवमर्शः**––शुद्धप्रकाशगतेऽहंप्रत्यवमर्शः। **अविकल्पः**–द्वयाक्षेपिविकल्पाभावः, **विशेषः**–लौकिकपरामर्शाद्विशेषः। **सूच्यत,** सूचना–मात्रेण न तु साक्षात् कथ्यत इत्यर्थः। **ततः**––तदनन्तरम्। अपोहनव्यापारस्य, अन्यव्यवच्छेदरूपस्येति भावः, असंभवः–अन्याभावकृतः संभवाभावः। **स्वदृष्टौ–**

---

1. 'करण' is used here, not in the sense of instrument, but in that of "doing action" the word which indicater 'हेतुत्व' seems to have been omitted.
2. युगलकं वा—C. युगलकम् comes as an explanation of उभयम्। वा, therefore, seems to be unnecessary.

श्लोकेन। ततोऽपि द्वयेन अशुद्धस्याहमित्यवमर्शस्य विकल्परूपता। ततः श्लोकेन अनुसंधानस्यापि विकल्परूपता। एवंरूपानुसंधानादिरूपमेव[1] परमेश्वरस्य स्रष्टृत्वम् इति श्लोकेन। ततः प्रकृते चिदात्मन्यर्थावभासस्य सत्तोपसंह्रियते श्लोकेन। ततो द्वयेन तस्यैवार्थावभासस्यानुभवस्मरणादौ वैचित्र्यमुच्यते, तदुक्तिश्च प्रकृतायामीश्वररूपस्वात्मप्रत्यभिज्ञायामुपयुज्यते इति श्लोकेन। इत्याह्निकस्य तात्पर्यार्थः। अथ ग्रन्थार्थो व्याख्यायते।

उक्तमिदम्:—

'स्वभावमवभासस्य विमर्शम् ·····।'

इति। तत्र विमर्शोऽभिलापात्मना शब्देन योजित एव, तद्योजनाकृतं च

---

स्वदर्शनभूते शैवनये। **तदुपपत्तिः**—अहंप्रत्यवमर्शेऽपोहनव्यापारोपपत्तिः। **अशुद्धस्य**—भेदाख्यमलयुक्तदेहादिप्रमातृगतत्वेन परमार्थतः शुद्धिराहित्याभावेपि तद्युक्तस्य। **अनुसन्धानस्यापि**—प्रत्यवमर्शकार्यस्य योजनस्यापि, **एवंरूपानुसन्धानादिरूपमेव**—विकल्पस्वरूपानुसन्धानादिस्वरूपमेव। **चिदात्मनि**—शिवस्वरूपभूते प्रकाशे। **उपसंह्रियते**—उपसंहाररीत्या कथ्यते। **तस्यैव**—संहृतस्यार्थावभासस्यैव, **तदुक्तिश्च**—वैचित्र्योक्तिश्च। उपसंहारं करोति **"इति"** इति। **इति**—एवम्, **आह्निकस्य तात्पर्यार्थः**, समस्ताह्निकस्य व्यस्तत्वेन तात्पर्यार्थ इत्यर्थः। ग्रन्थार्थकथनं प्रतिजानीते **"अथ"** इति। **व्याख्यायते**, व्याख्याविषयतां नीयत इत्यर्थः। "स्वभावमवभासस्य" इति श्लोकव्याख्यावसरे मनसि स्फुरितं शिष्यस्याशङ्कनीयं वस्तु तदशङ्कितमपि कृपादृष्ट्या निर्णेतुं स्वयमेव तदनुगुणाम् अवतरणिकां तादृगपेक्षारहितस्यापि प्रथमश्लोकस्य करोति **"उक्तम्"** इति।

अत्र टीका :—

**तद्योजनाकृतम्**—शब्दयोजनाकृतम्। **शुद्धेऽपि**—विकल्पासहेपि। तदुक्तम्:—

---

1. एवं "भूतानुसंधानादिरूपमेव परमेश्वरस्य स्रष्टृत्वम्"—K.S.S.

विकल्परूपत्वं शुद्धेऽपि परमेश्वरे प्राप्तम्, न चैतदिष्टं तस्य संसारपदे मायात्मन्युपपत्तेः इत्याशङ्क्याह :—

**अहंप्रत्यवमर्शो यः प्रकाशात्मापि वाग्वपुः।**
**नासौ विकल्पः स ह्युक्तो द्वयाक्षेपी विनिश्चयः ॥१॥**

प्रकाशस्य शुद्धसंविद्रूपस्य[1] देहादिसंस्पर्शैरनाविलीभूतस्य यः आत्मा जीवितभूतः सारस्वभावो विच्छेदशून्योऽन्तरभ्युपगमकल्पोऽनन्य-

---

"विकल्पातीतवृत्तित्वात् प्रत्यक्षोप्यसि विस्मृतः।
पुरःस्थितो यथा भावः चेतसोन्याभिलाषिणः॥"

इति। ननु परमशिवमपि प्राप्नोत्वित्यत आह "**न च**" इति। कुतो नेष्टमित्यत आह "**तस्य**" इति। **तस्य**–विकल्पस्य। **मायात्मनि**–मायाकार्यभेदरूपत्वेन लक्षणया तत्स्वरूपे। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**अहम्**" इति।

अत्र टीका :–

"**प्रकाशात्मा**" इति पदं व्याचष्टे विगृह्णाति च "**प्रकाशस्य**" इति। "**शुद्ध**" इति, शुद्धा–संवेद्याऽरूषिता, या संवित्-आन्तरं संवित्तत्त्वम्, सा रूपं यस्य तादृशस्य। शुद्धत्वे हेतुगर्भं विशेषणमाह "**देहादि**" इति। आदिशब्देन प्राणादेर्ग्रहणम्। देहादिभिरवच्छिन्नतामनानीतस्येत्यर्थः[2]। "**आत्मा**" इत्यवयवं व्याचष्टे "**जीवित**" इति। एतेन षष्ठीतत्पुरुषत्वमस्य द्योतितम् "**प्रत्यवमर्शः**" इत्यस्य विशेषणत्वञ्च। "**अहंप्रत्यवमर्शः**" इति पदं व्याचष्टे "**अहम्**" इति। **'अहम्' इति**— शुद्धे प्रकाशरूपे स्वात्मनि स्थितत्वात् "अहम्" इत्येवं-रूपः, न तु भावविषयत्वेन "इदम्" इतिरूपः, **प्रत्यवमर्शः**, प्रति–आन्तरत्वेन, अवमर्शः–सूक्ष्माभिलापेन स्पर्शनम् "अहम्" इति प्रत्यवमर्शः। ननु कीदृगसा-

---

1. विशुद्धसंविद्रूपस्य—K.S.S.
2. देहादिभिरवच्छिन्नतामानीतस्य—C.

मुखप्रेक्षित्वरूपस्वातन्त्र्यविश्रान्तिरूपः[1] 'अहम्' इति प्रत्यवमर्शः असौ विकल्पो न भवति । विकल्पत्वाशङ्कायां बीजं दर्शयति "वाग्वपुरपि" इति । विषयरूपात् श्रोत्रग्राह्यात् शब्दादन्य एव अन्तरवभासमानः संविद्रूपावेशी शब्दनात्माभिलापो वागित्यनेनोक्तः-वक्ति अर्थं स्वाध्यासेन सोऽयमित्य-[2]भिसंधानेन । यदि वाग्वपुः, कस्मान्न विकल्पः ? आह—न ह्यस्य विकल्प-लक्षणमस्ति, तथा हि-विविधा कल्पना विविधत्वेन च शङ्कितस्य कल्पोऽ-

वित्यपेक्षायां स्वयमपि विशेषणान्याह "**विच्छेदशून्यः**" इति । प्रकाशस्वात्मभूतत्वेन तद्वन्नित्याव्यभिचरितरूप इति भावः । एतेनास्य बाह्यस्पर्शवन्नवीनमुत्थानं निवारितम्, तथा "**अन्तरभ्युपगमकल्पः**" इति, स्वात्मनि यः स्वात्माङ्गीकार-स्तद्रूपः, न तु बाह्याभ्युपगमतुल्य इति कल्पग्रहणम् । तथा अनन्यमुखप्रेक्षित्वरूपम्-स्वग्रहणे परापेक्षाराहित्यं नाम यत्स्वातन्त्र्यं तत्र या विश्रान्तिः-आस्वादरूपो विश्रामः सा रूपं यस्य तादृशः । यच्छब्दाकाङ्क्षां पूरयति "**असौ**" इति। "**वाग्वपुः**" इति विशेषणस्य हेतुगर्भत्वं साधयितुमाह "**विकल्प**" इति । **बीजम्**-हेतुम् । वाक्शब्दस्यालौकिकार्थत्वं साधयति "**विषय**" इति । "**अन्तर-वभासमानः**" इत्यस्य हेतुमाह "**संवित्**" इति । तत्र प्रकाशमात्रनिष्ठत्वेन[3] तच्छरीरविश्रान्त इत्यर्थः । ननु तर्हि वाग्रूपोसौ न स्यादित्यत आह "**शब्दन**" इति । अस्य पर्यायमाह "**अभिलापः**" इति! **वागित्यनेन,** सूत्रस्थेन वाक्-शब्देनेत्यर्थः । इयं परामर्शरूपा वाक् सद्योजातेषु बालेषु स्तन्याभिलाषयुक्त-तयाऽनुमीयते एव परन्तु सापि पुष्टिं गतैव भवति, अन्यथा बहिः प्रसारासंभवात्, अतश्चान्तरेव गुरूपदेशादिना स्वयमेवानुभाव्या । तदुक्तम् :-

"हन्त भणामो मूढाः"

इति । परमार्थविचारे तन्मयीभाव एव सिद्ध्यति न तत्रावधानम्, भेदापादकत्वात् ।

1. अनन्यमुखप्रेक्षित्वस्वातन्त्र्य—K.S.S.
2. सोयमित्यभिसंबन्धेन—K.S.S.
3. नात्राप्रकाशमात्रनिष्ठत्वेन—C.

**न्यव्यवच्छेदनं विकल्पः, विविधत्वं च वह्नावनग्निसंभावनासमारोप-निरासेऽसति भवत्, द्वयं वह्न्यवह्निरूपं समाक्षिपति[1], तेन विकल्पेऽवश्यं**

तदुक्तम् :—

"त्यजावधानानि"

इति। अतोपि परमार्थविचारे सिद्धिकथनमपि तत्रायुक्तमेव। सर्वदा सर्वस्य तन्मयत्वात् परं सुप्रबुद्धा एव[2] ……… विज्ञाः प्रबुद्धानामुपदेशमात्रयोग्यत्वात्, अप्रबुद्धानां तत्राप्यनधिकारात्। तदुक्तम् :—

"सेयं क्रियात्मिका शक्तिः शिवस्य वशवर्तिनी।
बन्धयित्री स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका॥"

इति। अलं प्रसङ्गेन। अत्रोपयोगि **'वाक्'** शब्दस्य व्युत्पादनं करोति **"वक्ति"** इति। **"स्वाध्यासेन"** इति, अयं घटः इति हि घटशब्दाध्यासपूर्वं घटशब्दार्थो निश्चीयते। **सो यमित्यभिसंधानेन**—यः घटशब्दवाच्यः सोयं पुरःस्थितो भावो भवति, योजनया इत्यर्थः। एतेनात्र वाच्यवाचकसङ्केतकरणहेतोरान्तरस्य परामर्शस्यैव वाक्त्वमुक्तम्, न तु बाह्यस्य स्थूलशब्दस्य। अत्र शिष्यः पच्छति **"यदि"** इति। अत्र गुरुणा दत्तमुत्तरं कथयितुमाह **"आह"** इति। किमाहेत्यत आह **"न ह्यस्य"** इति। **अस्य**—प्रत्यवमर्शस्य। कथमित्यपेक्षायां समर्थनमुपक्रमते **"तथा हि"** इति। तत्र **"विकल्प"** शब्दस्यावयवार्थमाह **"विविधा"** इति। **विविधा**—तदतद्रूपा, **कल्पना**। द्वितीयमर्थमाह **"विविधत्वेन च"** इति। चः समुच्चये, **विविधत्वेन**—तदतद्रूपत्वेन। **'कल्प'** पदस्यार्थमाह **"अन्य"** इति। अन्यस्य—अतद्रूपस्य, व्यवच्छेदनम्—अर्थात् तद्रूपाद् व्यावर्तनम्। एवमवयवार्थं कृत्वा उपसर्गवाच्यस्य विविधत्वस्य कार्यमाह **"विविधत्वञ्च"** इति। तावद् **'असति'** सति इति योजनीयम्। **समाक्षिपति-**

1. आक्षिपति—K.S.S.
2. Although a gap is shown in the manuscript between एव and विज्ञाः, the text yields a good meaning without the gap being filled.

**तच्च निश्चेतव्यम् अतच्च[1] अपोहितव्यं[2] भवति ।**

**तथा च**

**भिन्नयोरवभासो हि स्याद्घटाघटयोर्द्वयोः ।**
**प्रकाशस्यैव नान्यस्य भेदिनस्त्ववभासनम् ॥ २ ॥**

---

अन्योन्याभावाग्रहणात् प्रमातृबुद्धौ स्फुरणशीलं करोति। उपसर्गप्रकृतिसमुदायकार्यमाह "**तेन**" इति। **तेन**—ततः कारणात्। **विकल्पे**—विकल्पविषये। **तच्च**—विकल्पविषयद्वयमध्ये पुरःस्थितं वस्तु च। **निश्चेतव्यम्**—अस्तित्वनिश्चयार्हं भवति। **अतच्च**[3]—केवलशङ्काविषयं वस्तु च। **अपोहितव्यम्**—नास्तीति व्यवच्छेद्यम्। **भवति**, तच्च विकल्पकार्यमेव भवतीत्यर्थः। परमार्थतस्तु कल्पपदस्यैवात्र सामर्थ्यं निश्चयव्यवच्छेदवाचकत्वात्। अथवा कल्पस्येत्यध्याहारः, तथा चैवमर्थः। तेन विकल्पे–विकल्पपदे स्थितस्य कल्पस्य तन्निश्चेतव्यमतच्च[4] व्यपोहितव्यं भवति उपसर्गेणैकत्र तदतत्त्वारोपणादिति भावः ॥ १ ॥

अथ द्वितीयस्य श्लोकस्यावतरणिकां करोति "**तथा च**" इति।

अत्र टीका :–

**तथा च**, तदेव दर्शयिष्यामीत्यर्थः।

एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**भिन्नयोः**" इति।

---

1. अतश्च—K.S.S. In the Bhāskarī also, the same word occurs twice. But from the manner in which Bhāskara explains it, it is evident that his text of the Vimarśinī was अतच्च, because his explanation of the word ends in the nominative. It also fits in well with the sentence as it would correspond to तच्च. It is further supported by footnote no. 20, p. 241, Vol. I of the K.S.S. edition. It runs as follows :—तद्विनिश्चयातद्व्यपोहलक्षण।
2. व्यपोहितव्यम्—K.S.S.
3. अतश्च—C.
4. अतश्च—C.

**घटे हि दृष्टे घटस्थान एवाघटोऽपि योग्यदेशाभिमतस्थानाक्रमणशीलो विज्ञानजनकः स्वकारणोपनीतः संभाव्यते पटादिस्वभावः, अतो घटाघटयोर्द्वयोरवभासस्य संभावनात् समारोपः सावकाशो भवति, अघटस्य सत्यारोपे निषेधनलक्षणोपोहनव्यापारः[1] इति तदनुप्राणिता विकल्परूपता घट इत्येतस्य निश्चयस्य, 'लिङ् संभावनायाम्'। यस्त्वयं प्रकाशो**

अत्र टीका :—

भङ्ग्या श्लोकं व्याचष्टे **"घटे हि"** इति। **घटस्थाने एव**—घटविषये एव, घटरूपतयेति यावत्। पटादिस्वभावः अघटोपीति योजना। कीदृशः अघटः? योग्यः—तदवस्थाने योग्यताभाक् यो देशः—पटादिव्यक्तिरूपः देशः, स एवाभिमतं स्थानं तस्य यदाक्रमणं तदेव शीलं यस्य तादृशः, अर्थात् परमार्थतो घटस्थाने संभवसह इति भावः। **संभाव्यते**—तावत्तादात्म्याभावग्रहणात् स्यादिति संभावनाविषयतां नीयते। प्रथमं व्यक्तिमात्रं पश्यन् पुरुषः संकीर्णतयैव भावस्वरूपं गृह्णाति। तदुक्तम् :—

"गौर्हि स्वरूपेण न गौः नागौः"

इति। ततः तादात्म्याभावं निर्णीय तत्र तद्व्यवहारं करोति, अन्यथा शुक्तिकादौ रजतभ्रमाभावप्रसङ्गात्। सादृश्यनिमित्तोयं भ्रम इति चेत् सत्तारूपसमानधर्मस्य सर्वत्र भावात् सर्वत्रैव सादृश्यं भवतीति यत्किञ्चिदेतत्। यस्तु सद्य एवासंकीर्णतया भावव्यवहारः सोऽभ्यासपाटवकृत एवेत्यलम्। ननु ततः किमित्यत आह **"अतः"** इति। **अतः**—अवभाससंभावनाया हेतोः। **समारोपः**—अध्यासः। ननु भवतु समारोपः सावकाशः ततः किमित्यत आह **"अघटस्य"** इति। **निषेधनलक्षणः**—अघटनिषेधकरणस्वभावः, युक्त इति शेषः। ननु ततोपि किमित्यत आह **"इति"** इति। **इति**—अतः कारणात्, **तदनुप्राणिता**—अपोहनदत्तसत्ताका, अतन्निषेधपरस्य निश्चयस्यैव विकल्पत्वादिति भावः। लिङो वाच्यमाह **"संभावनायाम्"** इति। एतेन पूर्वार्धं गतव्याख्यम्। तथा

1. निषेधलक्षण :—K.S.S.

**नाम तस्य स्थाने यः संभाव्यते स तावदप्रकाशरूपो न भवति तुल्यकक्षस्य हि संभावनं भवति, न च यत्प्रकाशेन कर्तव्यं तदप्रकाशस्य कदाचित् दृष्टम् संभावनारोपणादिबलादेव च अस्याप्रकाशरूपत्वं विघटेत, अतः प्रकाश- तुल्यस्यान्यस्याप्रकाशरूपस्य भेदिनस्तत्तुल्यकक्ष्यस्यापोहनात्मकभेदनव्या- पारासहिष्णोरवभासनमेव नास्ति, तदभावे कस्यापोहनम् ? अवभास-**

---

सङ्क्षेपः । प्रकृतत्वात् घटग्रहणकाले भिन्नयोः–स्फुटं भेदेन स्थितयोः, द्वयोर्घटाघट-योरवभासः स्यात्-भवेत्, तावत्तादात्म्याभावग्रहणादित्यर्थः । तथा चातद्व्यपोहनार्थ-मत्र विकल्पो युक्त एवेति भावः ।

उत्तरार्धं व्याचष्टे **"यस्त्वयम्"** इति । **तस्य**-प्रकाशस्य, **स्थाने**-विषये, कुतो नाप्रकाशरूपो भवेदित्यत आह **"तुल्य"** इति । **तुल्यकक्ष्यस्य**—सदृशबलस्य, प्रतियोगिन इति यावत् । **संभावनम्**—संभवं प्रति प्रेरणम् । ननु कथं घटाघटयोस्तुल्यकक्षत्वम् ? सत्यम्, यथा सत्तायोगन घटस्य भावबुद्धि-जनकत्वं तथाऽघटस्यापीत्येतावन्मात्रेणैवात्र प्रतिस्पर्धित्वरूपं तुल्यकक्षत्वमिति । ननु प्रकाशाप्रकाशयोः अपि तुल्यकक्षत्वं स्यादेवेत्यत आह **"न च"** इति । अन्यथा तमसोपि पदार्थप्रकाशकत्वप्रसङ्गादिति भावः । तथापि तुल्यकक्षत्वमभ्युपगम्य दोषमाह **"संभावना"** इति । संभावनाया यदारोपणादि, आदिशब्देन व्यवच्छेदग्रहणम्, तस्य बलात्, **विघटेत**–नश्येत् । "प्रागिवार्थ" इति न्यायेन संभावनार्थं ग्रहणेनैवाप्रकाशत्वाभावापातात् । फलितमाह **"अतः"** इति । अतः कारणात् । **"प्रकाशस्येव"** इति पदद्वयं व्याचष्टे **"प्रकाश"** इति । **"अन्यस्य"** इति पदं व्याचष्टे **"अप्रकाश"** इति । **"भेदिनः"** इति पदं व्याचष्टे **"तत्"** इति । **तत्तुल्यप्रकाशस्य**––प्रकाशेन सह तुल्यक-क्ष्यस्य । अत्रापि व्याख्यां करोति **"अपोहन"** इति । तुल्यकक्ष्य एव हि प्रतिस्पर्धितया भेदेन पुरः स्थातुं शक्नोति इति तुल्यकक्ष्यस्येत्युक्तम् । **"नास्ति"** इति, न हि प्रकाशग्रहणसमये तमोग्रहणं संभवतीति भावः । **तदभावे**–अवभासा-भावे, अवभाससंभवमभ्युपगम्यापि दोषमाह **'प्रकाश'** इति । "प्रागिवार्थ" इत्य-

**संभवेऽपि प्रकाशरूपत्वमेव। न च प्रकाशस्य स्वरूपदेशकालभेदो येन द्वितीयः प्रकाश एकस्मादपोह्येतेति। हीति, यस्मादेवं ततो द्वयाभावादपोहासंभवे विकल्परूपत्वाभावात् चिन्मात्रे परामर्शात्मनि अहमिति प्रत्यवमर्श एव, न तु विकल्पः॥ २॥**

**ननु घटे परिनिष्ठितरूपे दृष्टे तद्दर्शनमुपजीवता विकल्पेन कथमघटस्य निषेधनं क्रियते, न ह्यघटस्य केनचिन्नामापि गृहीतम्, अघटवासनापि घटे दृष्टे कथंकारं प्रबुध्यताम्? सत्यम्, एवं शाक्यः पर्यनुयोज्यो न तु वयम्, यतः**

---

त्रोक्तन्यायेनेत्यर्थः। भेदस्याप्यसंभवं वक्तुमाह **"न च"** इति। भेदो यदि ह्यत्राभ्युपगम्यते तर्हि अप्रकाशासंभवोपहतत्वात् प्रकाशान्तरेण सहैव स वाच्यः। न च प्रकाशस्य स्वरूपगतो भेदो युक्त इति भावः। **"हि"** शब्दस्यार्थमाह **"हीति"**। हिशब्दद्योतितं पूर्वं प्रत्यस्य श्लोकस्य हेतुत्वं स्फुटीकृत्य कथयति **"यस्मादेवम्"** इति। **ततः**–तस्मात्, **द्वयाभावात्**–प्रकाशाप्रकाशाख्ययुगलाभावात्, **अपोहासंभवे**–अप्रकाशापोहनासंभवे। **अहमिति**–अहमित्येवं स्थितः स्वस्वरूपपरामर्शः, **प्रत्यवमर्श एव**–तद्रूपप्रकाशाख्यस्वरूपपरामर्शनमात्रमेव भवति, **न तु विकल्पः**, अतद्रूपाप्रकाशव्यवच्छेदनं न भवतीत्यर्थः। अयमत्र सङ्क्षेपः। अर्थात् अयमिति प्रकाशस्य स्वग्रहणसमये प्रकाशस्येव–प्रकाशवत्, अन्यस्य भेदिनः–अप्रकाशरूपस्य प्रतियोगिनः घटग्रहे अघटस्येव, तुः व्यतिरेके, अवभासनं न भवति अतोऽत्र विकल्पत्वं नास्तीति। हि–यस्मादेवं ततः पूर्वश्लोकोक्तं वस्तु युज्यत एवेति योजना "हि" शब्देन द्योत्यते।

अथ तृतीयश्लोकस्यावतरणिकां करोति "ननु" इति।

अत्र टीका :–

परिनिष्ठितम्––स्वाकारमात्रेऽवसानं गतम्, रूपं यस्य तादृशे। **तद्दर्शनम्**–घटानुभवम्, **उपजीवता**–अपेक्षाविषयतां नयता। कुतो न क्रियत इत्यत आह **"अघट"** इति। सदृशदर्शनादेव हि वासना प्रबुध्यते न च घटोऽघटसदृशः प्रत्युत विलक्षण इति भावः। गुरुरुत्तरमाह **"सत्यम्"** इति, **एवम्**–अनेन

**तदतत्प्रतिभाभाजा मात्रैवातद्व्यपोहनात्।**
**तन्निश्चयनमुक्तो हि विकल्पो घट इत्ययम् ॥ ३ ॥**

इह प्रमाता नाम प्रमाणादतिरिक्तः प्रमासु स्वतन्त्रः संयोजनवियोजनाद्याधानवशात्[1] कर्ता दर्शितः, तस्य च प्रमातुरन्तः सर्वार्थावभासः, चिन्मात्रशरीरेऽपि तत्सामानाधिकरण्यवृत्तिरपि दर्पणनगरन्यायेनास्ति—इत्यपि उक्तम्। एवं च तत्प्रतिभं घटाभासम्, अतत्प्रतिभं च अघटाभासं प्रमाता भजते-सेवते तावत्, तदविकल्पदशायां चित्स्वभावोऽसौ घटः

प्रकारेण। **शाक्यः**–क्षणिकज्ञानरूपं परमात्मानमनिच्छन्[2] बौद्धः। **पर्यनुयोज्यः**–चोदनीयः। कुतो न पर्यनुयोज्या इत्यत आह **"यतः"** इति। यत एवं भवतीत्यर्थः। एवमवतरणिकां कृत्वा तत्र स्थापितं यतःशब्दं निराकाङ्क्षयितुं श्लोकमुपन्यस्य व्याचष्टे। **"तदतत्"** इति।

अत्र टीका :–

**प्रमाणात्**–इहैव वक्ष्यमाणस्वरूपात् प्रमाकरणात्। **प्रमासु**–प्रमाणसाध्येषु ज्ञानेषु। **स्वतन्त्रः कर्ता** इति योजना, न तु हेतुकर्तेति भावः। आधानम्–संपादनम्। तेन-चिन्मात्रशरीरेण, सामानाधिकरण्येन–एकतया वृत्तिर्यस्य सः। अपिशब्दद्योतितमस्तित्वासंभवं दूरीकर्तुं **"दर्पण"** इति दृष्टान्तग्रहणम्। **अस्ति**–ततो भेदेन स्फुरति, तथाभासमानत्वादिति भावः। **'उक्तम्'** इति, "न चेदन्तः" इत्यत्रेत्यर्थः। ननु ततः किम् इत्यत आह **'एवञ्च'** इति। **'तदतत्'** इति समस्तपदं व्याचष्टे विगृह्णाति च **'तत्'** इति। **"सेवते"** इत्यनेन कर्तर्यत्र क्विप् इति सूचितम्। **तावत्**, अत्र कस्यापि विप्रतिपत्तिर्नास्तीत्यर्थः। **तदविकल्पदशायां चित्स्वभावः**–"प्रागिवार्थः" इति न्यायेन चित्स्वरूपः। विश्वम्-भावराशिः, शरीरे यस्य सः, अत-

1. संयोजनवियोजनाद्याधारवशात्––K.S.S.
2. Was the text क्षणिकज्ञानरूपं परमात्मानमिच्छन् ?

**चिद्वदेव विश्वशरीरः पूर्णः, न च तेन कश्चिद्व्यवहारः[1], तत् मायाव्यापारमुल्लासयन्पूर्णमपि खण्डयति भावम्, तेनाघटस्यात्मनः पटादेश्चापोहनं क्रियते निषेधनरूपम्, तदेव व्यपोहनमाश्रित्य तस्य घटस्य निश्चयनमुच्यते 'घट एव' इति, एवार्थस्य संभाव्यमानापरवस्तुनिषेधरूपत्वात्, एष एव परितश्छेदात्तक्षणकल्पात् परिच्छेदः, हीति—यत एवम्, तस्मात् युक्तं 'द्वयाक्षेपी विकल्पः' इति पूर्वश्लोकोक्तेन[2] वस्तुद्वयेन हेतू क्रमेणोक्तौ यस्मादेवं विकल्पः**

---

**एव पूर्णः, तेन**—विश्वशरीरेण घटेन, **न कश्चिद् व्यवहारः,** सङ्कीर्णतया स्फुरणात् न कोपि व्यवहारः सम्भवतीत्यर्थः। तर्हि कथं तेन व्यवहार इत्यत आह **'तत्'** इति। ***मायाव्यापारम्***—भेदनरूपं मायातत्त्वसंबन्धिनं व्यापारम्। **भावम्**—घटरूपम्, **तेन**—मायाव्यापारोल्लासनेन। **आत्मनः**—चिन्मात्ररूपात् स्वस्मात्, **पटादेश्च**—स्वान्तर्गतादघटाच्च, **अपोहनम्**। कीदृशम्? **निषेधनरूपम्**—निषेधकरणरूपम्, **निश्चयनम्**—निश्चयकरणम्, संङ्कीर्णतानिवारणेन स्वात्ममात्रे ऽवस्थापनमिति यावत्। ननु कथं निषेधनं गम्यते घट एवायमित्येतन्मात्रमेव तत्र स्फुरतीत्यत आह **'घट एव'** इति। **एवार्थस्य,** एवशब्दार्थस्येत्यर्थः। **अपरवस्तु**—अघटरूपं वस्तु। अवधारणं हि फलतोऽन्यनिषेधनमेवेति भावः। ननु तर्हि परिच्छेदः क उच्यत इत्यत आह **"एष एव"** इति। **एष एव**—अपोह एव, **परितः**—अभितः, परप्रमातुरन्योन्यतश्चेति यावत्। **'छेदनात्'** इति स्वयं व्याचष्टे **"तक्षणात्"** इति, भेदेन भासनादिति यावत्। **'हि'** शब्दाभिप्रायं वक्तुमाह **"हीति"** इति। इतिशब्दः शब्दस्वरूपाक्षेपपरः। **यतः**—यस्मात्, **एवम्**—एतच्छ्लोकोक्तं वस्तु, भवति, **तस्मात्**—ततः, **द्वयाक्षेपी इति युक्तम्**—प्रथमश्लोकोत्तरार्धप्रोक्तं विकल्पस्य द्वयाक्षपित्वं युक्तं भवति। ननु यदि द्वयाक्षेपित्वं प्रत्यनेन हेतुत्वमुक्तं तर्हि पूर्वश्लोकोक्ताभ्यां

---

1. न केचिद् व्यवहाराः—K.S.S.
2. तस्माद्युक्तं द्वयाक्षेपी विकल्प इति पूर्वश्लोकोक्ते वस्तुद्वये श्लोकद्वयेन हेतू क्रमेणोक्तौ—K.S.S.

**ततोऽहमिति शुद्धो विमर्शः न विकल्पः—इति श्लोकत्रये[1] महावाक्यार्थः। शाक्यैरपि प्रमातुरेवायं व्यापार उक्तः[2] 'एकः प्रत्यवमर्शाख्यः' इत्यत्र 'प्रपत्ता'**

किं साधितमित्यत आह "**पूर्व**" इति। **वस्तुद्वयेन**—पूर्वार्धोत्तरार्धाभ्यामुक्तेन वस्तुद्वितयेन, **हेतू**—हेतुद्वयम्, "**क्रमेणोक्तौ**" इति। तत्र द्वितीयश्लोकपूर्वार्धेन प्रथमश्लोकोक्तं "नासौ विकल्पः" इत्येतत्प्रति हेतुत्वमुक्तम्, उत्तराधन तु तत्रै-वोक्तं "प्रत्यवमर्श" इति प्रति हेतुत्वम्। यद्यपि तत्र "प्रत्यवमर्श" इत्यस्यानन्तरम् 'एव' शब्दप्रयोगो नास्ति तथापि सर्वं वाक्यं सावधारणमिति न्यायमाश्रित्यैवमुक्तम्। अस्य श्लोकस्य शृङ्खलाबन्धेन परस्परसंबद्धार्थमाह "**यस्मादेवम्**" इति। **यस्मादेवम्** "हि" शब्दत्रयाक्षिप्तं वस्तु भवति ततः कारणात्। **अहमिति**—अहमित्येतद्वस्तु। **शुद्धो विमर्शः** भवति, विमर्श एव भवतीति यावत। **न विकल्पः**, द्वयकल्पनामिश्रो विकल्पः सर्वो भवतीत्यर्थः, **इति**—एवम्, **श्लोकत्रये**—श्लोकानां त्रितये, **महावाक्यार्थः**—गर्भीकृतावान्तरवाक्यसमूहस्य परमवाक्यस्यार्थो भवति। अत्र चायं विभागः। प्रथमश्लोकोक्तः कुतो न विकल्प[3] इत्यपेक्षायां "**स ह्युक्तः**" इत्यादिना हेतुकथनम्। भवतु विकल्पो द्वयाक्षेपी विनिश्चयः, क ं तेन प्रत्यवमर्शस्य प्रत्यवमर्शैकरूपता विकल्पतानिषेधश्चेत्यपेक्षायामेकेनैव हेतुद्योतकेन हिना पूर्वार्धापरार्धगतहेतुद्वयकथनम्। तत्र पूर्वार्धेन विकल्पतानिषेधं प्रति हेतुरुक्तः, यत्र द्वयं संभवति तत्रैव विकल्पता यथा घटविमर्शे, अत्र तु तथा नेति व्यतिरेकद्वारेण। उत्तरार्धेन तु प्रत्यवमर्शैकरूपतां प्रति, यतोऽत्र द्वयग्रहणं संभवति ततोत्र प्रत्यवमर्शतामात्रत्वमेवेत्यन्वयेनैव। अत्रापि पूर्वार्धे कथं द्वयोर्ग्रहणमत्र संभवतीत्यपेक्षायां तृतीयेन श्लोकेन हेतुकथनरीत्या समर्थनम्। परमार्थतस्तु प्रथमश्लोकोक्तवस्तुन एव साधनमिति स्फुटमेव श्लोकत्रयस्य संबद्धार्थत्वम्। ननु शाक्या एतन्न सहन्ते इत्यत आह "**शाक्यैरपि**" इति। **अयं व्यापारः**-

1. श्लोकत्रयेण—K.S.S.
2. एकप्रत्यवमर्शाख्य—K.S.S.—We have amended the tex as printed in the light of the same quotation occurring in full in the Bhāskarī on the next page an its explanation there.
3. कुतो विकल्प इत्यपेक्षायाम्—C.

**इति 'स्वयम्' इति च वदद्भिः, स त्वेतैः कथं समर्थ्यः–इत्यास्तामेतत् ॥ ३॥**

**नन्वेवमहमित्यपि प्रत्यवमर्शेऽनहंरूपस्य घटादेः प्रतियोगिनोऽपोहनीयस्यापोहे विकल्परूपता कथं न स्यात् इत्याशयेनाहः—**

**चित्तत्त्वं मायया हित्वा भिन्न एवावभाति यः।**
**देहे बुद्धावथ प्राणे कल्पिते नभसीव वा॥ ४॥**

---

विमर्शाख्यो व्यापारः। शाक्यैः कीदृशैः ? । **"एकः प्रत्यवमर्शाख्यः"** इत्यत्र–अस्मिन् श्लोके **'प्रपत्ता' इति 'स्वयम्' इति च वदद्भिः**–कथयद्भिः। एतेन पदद्वयेनैवास्यार्थस्य तैः प्रमातृव्यापारत्वमुक्तमिति भावः। तथा चैवमयं श्लोक:–

"एकः प्रत्यवमर्शाख्यो ज्ञान एकत्र हि स्थितः।
प्रपत्ता तदतद्रूपान् भावान् विभजते स्वयम्॥"

इति। अत्रायमर्थः। हि–यस्मात्, एकत्र ज्ञाने-ज्ञानक्षणे, एकः प्रत्यवमर्शाख्यः–प्रत्यवमर्श इति नामधेयः, प्रकृतत्वाद् व्यापारः, स्थितो भवति, ततः कारणात् प्रपत्ता–प्रमाता, तदतद्रूपान् भावान्-पदार्थान्, स्वकाले स्थितान् भावक्षणान् इति यावत्, स्वयं विभजते–निश्चेयापोह्यत्वाभ्यां विभागविषयीकरोति। तत्र तद्रूपाणां निश्चेयत्वेन स्थापनम् अतद्रूपाणां तु अपोह्यतयेति। अत्र च प्रपत्तेत्यनेन प्रमातुः कथनम्, स्वयमित्यनेन विभजनरूपस्य प्रत्यवमर्शस्य तत्संबन्धित्वं विभजनस्य च प्रत्यवमर्शत्वं स्फुटमेवेति युक्तमुक्तं प्रपत्तेति स्वयमिति चेति। ननु तर्हि शाक्यदर्शनस्यापि शैवनयसमानत्वमेवापतितमित्यत आह "**सः**" इति। **सः**—प्रत्यवमर्शः, **एतैः**—शाक्यैः, **कथं समर्थ्यः**—समर्थयितुं योग्यो भवति, तत्समर्थकस्य प्रमातृनित्यत्वस्यानङ्गीकारान्न समर्थ्य इति भावः। ननु तर्ह्यत्र भरः कार्य इत्यत आह "**इति**" इति। **इति एतत् आस्ताम्**, अप्रकृतत्वेन प्रपंचानर्हत्वादिति भावः। अयमत्र सङ्क्षेपः। हि-यस्मात्, तदतत्प्रतिभाभाजा-स्वान्तःकृतभावराशित्वेन घटाघटादिज्ञानसेविना, मात्रा–प्रमात्रैव, अतद्व्यपोहनात्–अघटव्यवच्छेदनाद्धेतोः, तन्निश्चयनम्–घटनिश्चयनं कर्म, पंडितैः, कर्तृभिः 'अयं घटः' इति विकल्पः उक्तः, अतो द्वयग्रहणमत्र संभवत्येव येन पूर्वोक्तवस्तुनः संभव इति भावः। 'मात्रा' इति कर्तरि तृतीया॥ ३॥

**प्रमातृत्वेनाहमिति विमर्शोऽन्यव्यपोहनात् ।**
**विकल्प एव स परप्रतियोग्यवभासजः ॥ ५ ॥**

अहमित्यवमर्शो द्विधा–शुद्धो मायीयश्च, तत्र शुद्धो यः संविन्मात्रे विश्वाभिन्ने विश्वच्छायाच्छुरिताच्छात्मनि[1] वा । अशुद्धस्तु वेद्यरूपे शरीरादौ । तत्र शुद्धेऽहंप्रत्यवमर्शे प्रतियोगी न कश्चिदपोहितव्यः संभवति घटादेरपि

---

अथ चतुर्थस्य पंचमस्य च श्लोकस्यावतरणिकां करोति **"नन्वेवम्"** इति ।

अत्र टीका :–

**प्रतियोगिनः**— विरुद्धत्वेन प्रतिस्पर्धिभूतस्य[2]। **इत्याशयेन**—इत्यभिप्रायेण, एतमेवाभिप्रायं मनसि कृत्वेति यावत् । एवमवतरणिकां कृत्वा श्लोकद्वयमुपन्यस्य व्याचष्टे । **"चित्तत्त्वम्"** इति ।

अत्र टीका :–

श्लोकद्वयस्य तात्पर्यार्थं वक्तुं प्रक्रियां करोति **"अहम्"** इति । द्विधात्वं विभज्य कथयति **"शुद्धः"** इति । तत्र शुद्धविषयं कथयति **"संवित्"** इति । मात्रचा संवेद्योपरागनिरासः । एतेन शिवतत्त्वस्य ग्रहणम् । शुद्धाशुद्धविमर्शविषयाणां सदाशिवादीनामप्यत्रैव समुच्चयेन विषयत्वं कथयति **"विश्वच्छाया"** इति । विश्वस्य–इदन्ताग्रहणयोग्यस्य वेद्यराशेः, या छाया-प्रतिबिम्बः, तेन छुरितः–स्तोकं रूषितः यः अच्छात्मा–श्रीसदाशिवादिरूप आत्मा तस्मिन् । यद्यप्येतदर्थं शुद्धाशुद्धस्यापि विमर्शस्य कथनं युक्तं तथापि विस्तरभयान्न कृतम्, शुद्धस्यैव प्रकारत्वेनास्य सूचनामुत्तरश्लोकावतरणिकायां करिष्यति । अशुद्धस्य विषयमाह **"वेद्य"** इति । आदिशब्देन प्राणादेर्ग्रहणम् । तत्र शुद्धस्य विकल्परूपतां निवारयति **"तत्र"** इति । **तत्र,** शुद्धाशुद्धविमर्शमध्य इत्यर्थः । **प्रतियोगी**–समकक्ष्यतया प्रतिस्पर्धी । **अप्रतियोगित्वेन**–'प्रागिवार्थः' इति न्यायागतप्रकाशरूपताकृतेन प्रतियोगित्वाभावेन । **'अपि'** शब्देन देहादिप्रमातॄणामत्र प्रतियोगित्वे कथैव

---

1. विश्वच्छायाच्छुरितस्वच्छात्मनि––K.S.S.
2. प्रति अस्य विभूतस्य—C.

**प्रकाशसारत्वेनाप्रतियोगित्वेनानपोह्यत्वात्, इत्यपोह्याभावे[1] कथं तत्र विकल्परूपता। अशुद्धस्तु वेद्यरूपे शरीरादौ अन्यस्माद् देहादेर्घटादेश्च व्यवच्छेदेन भवन् विकल्प एव—इति वाक्यार्थः। अक्षरार्थस्तु–चित्तत्त्वं प्रकाशमात्ररूपं हित्वा सदप्यपहस्तनया अप्रधानीकृत्य भिन्ने देहादावहमेव देहादिः नीलादौ प्रमेये प्रमाता–इत्यभिमानेन 'योऽहं स्थूलः' इत्यादि-विमर्शः स विकल्प एव, न तु शुद्धं प्रत्यवमर्शमात्रम्। अत्र हेतुः—परो**

नास्तीति सूचितम्। ननु ततः किमित्यत आह **"इति"** इति। **इत्यपोह्याभावे,** एवमपोह्याभावे सतीत्यर्थः। तत्र–शुद्धे प्रकाशे। अशुद्धस्य विकल्परूपत्वं साधयति **"अशुद्धस्तु"** इति। प्रमातृणां परस्परं स्थितमपोह्यत्वमभि-प्रेत्याह **"देहादेः"** इति। प्रमेयमपेक्ष्याह **"घटादेश्च"** इति। **व्यवच्छेदेन**–अपोहेन। **वाक्यार्थः**—तात्पर्यार्थः। पदार्थकथनं प्रतिजानीते **"अक्षरार्थः"** इति। पदानामप्यवयवभावेनार्थकथनमभिप्रेत्याक्षरशब्दग्रहणम्। 'तु' शब्दो यथा–शब्दार्थे व्यतिरेके च। **"चित्तत्त्वम्"** इति पदं व्याचष्टे **"प्रकाशमात्र"** इति। तत्र चिच्छब्दस्य प्रकाशमात्रपदेन व्याख्या, रूपपदेन तु तत्त्वप-दस्य। **"हित्वा"** इति पदं व्याचष्टे **"सदपि"** इति। **अपहस्तनया**—वक्ष्यमाणेन मायाकृतेन प्रच्छादनेन। **अप्रधानीकृत्य**—कल्पितप्रमातृधर्मतया विभाव्य, देहादिनिष्ठो हि ज्ञानं देहादिगुणत्वेनैवाभिमन्यते। **भिन्ने**—परस्परं घटाद्यपेक्षया च समकक्ष्ये, प्रतियोगितया स्थिते इति यावत्। **अहमेवेत्यभिमानेन**–एवंरूपेणाभिमानेन, **नीलादौ प्रमेये प्रमाता,** प्रमातृत्वेन स्थित इत्यर्थः। **"स्थूलः इत्यादि"** इति। आदिशब्देनाहं पिपासायुक्त इत्यादेर्ग्रहणम्। अत्र हेतुं कथयन् द्वितीयश्लोकचतुर्थपादस्यावतरणिकां करोति **"अत्र"** इति। द्वितीयश्लोकस्य चतुर्थपादं व्याचष्टे **"परः"** इति। **"पर"** इत्यवयवं व्याचष्टे **"द्वितीयः"** इति। **"प्रतियोगि"** पदं व्याचष्टे **"तुल्य"** इति। प्रतियोगितासाधनार्थं विरुद्धतां साधयति **"अन्योन्य"** इति। अन्योन्यं यः परिहारः–व्यवच्छेदेन अवस्थानं

1. इत्यपोह्यत्वाभावे—K.S.S.

द्वितीयो देहादिर्घटादिश्च यः प्रतियोगी तुल्यकक्षयोऽन्योन्यपरिहाराच्च विरुद्धस्तस्य योऽवभासः—समारोपणलक्षणः, तस्माद्यतोऽसावतन्निषेधानुप्राणितोऽहमित्यवमर्शो[1] जातः 'अहं स्थूलः, न कृशः, न घटादिः' इति, शुद्धप्रकाशरूपस्य अपहस्तनैव[2] देहादेर्भेदहेतुः[3], तदपहस्तने तु परमेश्वरस्य स्वात्मप्रच्छादनेच्छारूपाऽभेदाप्रकाशनं भ्रान्तिरूपं प्रति स्वातन्त्र्यरूपा

---

तस्मात्। **"अवभास"** इत्यवयवं व्याचष्टे **"समारोपण"** इति। अन्यत्रान्यारोपणरूपं ज्ञानमित्यर्थः। अवभासपदस्य पञ्चम्यन्ततया विग्रहं करोति **"तस्मात्"** इति। अतन्निषेधेन अनुप्राणितः–उत्थापितः **"अतन्निषेधानुप्राणितः"** डप्रत्ययान्तजनिरूपस्य **"जः"** इत्यस्यार्थमाह **"जातः"** इति। एतेनास्य हेतुगर्भविशेषणत्वं द्योतितम्। एतं विकल्पमनुसृत्य दर्शयति **"अहम्"** इति। एतच्चोपलक्षणं प्राणादिपरामर्शस्य। सामान्येन व्याख्यातमपि **"देहे बुद्धौ"** इत्यादि प्रथमश्लोकोत्तरार्धं विशेषतो व्याख्यातुं प्रक्रियां करोति **"शुद्ध"** इति। **"शुद्धप्रकाशरूपस्य"** इति भावप्रधानो निर्देशः, तेन शुद्धप्रकाशरूपत्वस्येत्यर्थः। **अपहस्तनैव**–मायाकृतं प्रच्छादनमात्रम्। **"देहादेः"** इति। आदिशब्देन प्राणादेर्ग्रहणम्। **भेदहेतुः**–भेदकारणम्। **"एव"** इति, नान्यत्किञ्चिदित्यर्थः। देहादिर्हि जाड्यादेव परमप्रकाशाद् भेदेन स्फुरतीति भावः। ननु तस्यापहस्तनस्य को हेतुरित्यत आह **"तदपहस्तने"** इति। तुः व्यतिरेके। **तदपहस्तने**–प्रकाशरूपत्वस्यापहस्तने, **परमेश्वरस्य**–महास्वातन्त्र्ययुक्तस्य महेश्वरस्य, **मायाशक्तिर्हेतुर्भवति**। मायाशक्तिः कीदृशी? स्वात्मनः—प्रकाशरूपस्य, यत्प्रच्छादनम्–प्रत्युत जडदेहादिभावेन दर्शनं मितप्रमातॄन् प्रति, तस्य या इच्छा सैव रूपं यस्यास्तादृशी, न तु धरादितत्त्ववद् बहिः प्रधानतया स्थितेति भावः। पुनः कीदृशी? **भ्रान्तिरूपम्**–न तु परमार्थतया स्थितम्, **अभेदाप्रकाशनं**

---

1. तन्निषेधानुप्राणितः—K.S.S.
2. अपहस्तनमेव—K.S.S.
3. भेदे हेतुः—K.S.S.

**मायाशक्तिर्हेतुः, चिद्रूपस्य चापहस्तनं देहादेरेव अत्यक्तवेद्यभावस्य भिन्नस्यैव उपपत्तिशून्यतयैव प्रमातृत्वाभिमानः[1]। तथा च देहाभिमानभूमिकायां स्थिताश्चार्वाकाः 'चैतन्यविशिष्टः कायः पुरुषः' इति कायमेव**

---

**प्रति स्वातन्त्र्यरूपा,** स्वातन्त्र्यमिति यावत् । ननु तच्छुद्धप्रकाशस्यापहस्तनं किमुच्यत इत्यत आह **"चिद्रूपस्य"** इति । **उपपत्तिशून्यतया**–उपपत्तिराहित्येन, **प्रमातृत्वाभिमानः**–अहं प्रमातेत्यभिमानः । यद्यपि तदवच्छिन्नस्य प्रकाशांशस्यैव सः परमार्थतोऽस्ति तथापि भेदकृतां तदस्फूर्तिमपेक्ष्यैवमुक्तम् । अत्र मतभेदमाश्रित्य समर्थनं प्रक्रमते **"तथा च"** इति । देहाभिमानरूपा या भूमिका–कक्ष्या तत्र **देहाभिमानभूमिकायाम् स्थिताः चार्वाकाः**–लौकायतिकाः, **कायमेव**–पांचभौतिकं देहमेव, **प्राधान्येन**–प्रधानतया, विश्रान्तिस्थानभूत–परमात्मरूपतयेति यावत् । कथम् ? **इति**। इति किमिति ? **चैतन्यविशिष्टः**–भूम्यन्तर्गतमद्यमदशक्तिन्यायेन संयोगशक्तिप्राप्तचैतन्यभूतपंचकमयत्वेन चैतन्य–युक्तः, **कायः पुरुषः**–आत्मा भवति । तथा च श्रुतिः :—

"स वा एष पुरुषोऽन्नरसमयः"

इति । न त्वेतदन्तर्गत एतद्व्यतिरिक्तो मीमांसकाद्यभिमतः परलोकी अन्यः कोपीति भावः । तथा च कायमात्रार्थमेव यत्नं कुर्यात्, न तु परलोकशङ्कया कायस्य तपःप्रभतिना खेदो देयः । यदुक्तम् :–

"यावज्जीवं सुखं जीवेन्नास्ति मृत्युरगोचरः[2] ।
भस्मीभूतस्य शान्तस्य पुनरागमनं कुतः ॥"

---

1. प्रमातृताभिमानः— K.S.S.
2. The usual reading of this verse is नास्ति मृत्योरगोचरः ।
 It also occurs in the following form :—
 यावज्जीवेत् सुखं जीवेत् ऋणं कृत्वा घृतं पिबेत् ।
 भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥
 सर्वदर्शनसङ्ग्रह—p. 14.

इति । इत्यादि ते कथयन्ति । ननु

"प्रज्ञापौरुषहीनानां जीविकेति बृहस्पतिः"

इत्युक्तेर्ज्ञायते बृहस्पतिनैव तन्मतमुक्तम्, वेदेप्यस्य मतस्य प्रामाण्यं दृश्यत ए तथा च श्रुतिः—

"न प्रेत्य संज्ञास्ति"

इति । एतया परलोकाभाव एव फलत उक्तः । मृतस्य चेतनासंभवे परलोकः सिद्धयति नान्यथा, तत्कथमस्य मतस्य सर्व एव दुष्टत्वं कथयन्ति । सत्यम् । प्रथमं तावदन्ये कथयन्ति कलौ पापिप्रवृत्त्यर्थमेतन्मतं संपन्नमिति तत्तु नास्मन्मन आवर्जयति । यतोऽस्माकमयं निश्चयः, लौकिकास्तावद्देहोपयोगिबाह्यवस्तुनिष्ठा एव सन्तो देहमपि तत्साधनार्थं खेदयन्त्येव धनार्जनाद्यर्थं ताडनादिसहनात् । ननु देहार्थमेव ते तत्सहन्ते, सत्यम् । तद्धनमानीय लोकप्रसिद्ध्या विषय एव ते व्ययीकुर्वन्ति न तु भोगमात्रमेव साधयन्ति इति ज्ञायते तेषामयं देहोऽपि विस्मृतिमेव गत इति । ततस्ते नानापदार्थेष्वेव रताः ममतातिशयद्वारेण चात्रैवात्मभ्रान्ति सेवमानाः यथा देहमेव तेभ्यः आन्तरतया स्थितमात्मतया जानीयुः । तत्र सम्यक् स्थिताश्च शनैः शनैस्ततोप्यन्तराविशन्त्येवेति चार्वाकमतस्यापि परोपकारनिष्ठत्वमेव, अन्यथा दर्शनत्वायोगात् । सर्वाणि दर्शनानि हि परोपकारार्थमेव काञ्चित्कांचिद्भूमिकां दृढीकुर्वन्ति, अन्यथा परपददर्शिनां तेषामवान्तरनिष्ठता न युक्ता । नन्वन्ये कथयन्ति ते तत्पदं न प्रविष्टा इत्यवान्तरे एव लग्नाः, सत्यम् । यत्रातिसामान्यजनाः प्राप्तास्तत्र ते दर्शनकारा न संप्राप्ता इत्यसंभावनीयमिदम् । यथा राजा मार्गमध्ये ऽध्वगार्थं गृहादि कुर्वन् न तत्रैव विश्रान्त इति वक्तुं युक्तोऽन्यत्रोत्तमस्य स्वगृहस्य स्थितत्वात्, एवमत्रापीति यत्किंचिदेतत् । तत्र ममताविषयवस्तुमध्येऽपि पुत्रविषया ममताऽऽन्तयव, वेदे

"आत्मा वै जायते पुत्रः"

इति श्रवणात्, पुत्रार्थं च धनादि पुरुषः निर्विचारं व्ययीकरोत्येव, तत्र प्रेम्णैव तस्य तथा प्रवृत्तिरन्यत्र तु लोकप्रसिद्ध्या, प्रेम एव चान्तरताप्राप्तौ परमात्मरूपम्, आनन्दस्वरूपत्वात्, तदुक्तम् :—

"प्रेमैव परमं ब्रह्म"

**प्राधान्येनाहुः । स्त्रीबालमूर्खाणां तथाभिमानात् ततोऽपि विवेकयुक्ताः[1] पाकजोत्पत्तिपरिणामादिबलादस्थिरं शरीरं मन्वानाः प्राणशक्तिसमधिष्ठानेन च विना विकारशतावेशं शरीरस्य पश्यन्तो बुभुक्षापिपासायोगयोग्यं प्राणमेवात्मानं केचन श्रुत्यन्तविदो मन्यन्ते । ततोऽपि समधिकविवेकभाजः प्राणस्यापि अनित्यत्वादनुसंधानयोग्यतामपश्यन्तो ज्ञानसुखाद्याश्रयभूतां**

इति । यच्च शास्त्रे स्नेहस्य रागत्वमेव कथयन्ति तत् अविषयप्रवृत्तेरेव[2] न तु स्वरूपतः । अतश्च धनादिस्नेहयुक्ताश्चेदतिमूढा एव, पुत्रस्नेहयुक्ता देहस्नेहरहितास्तथा । परमार्थतस्तु इदं प्रेम यथा यथाऽऽन्तरवस्तुविषयीभवति तथा तथा शिवमेव, प्रेम्णः परनिष्ठाप्राप्तिस्तु परमानन्दीभाव एव, स एव च परमात्मलाभः। यस्तु सर्वथा स्नेहरहितः सोत्रोपदेशऽयोग्य एव। सर्वथा तद्रहितत्वं च कुत्रापि न संभवत्येव, परमपदार्थ[3]मात्रस्नेहस्यैवास्नेहकथनम्। अयमेवाशयः सर्ववादिविषये योज्यः, न पुनः पुनरायस्यते, इत्यलं प्रपंचेन। प्रकृतमनुसरामः। अतो विशिष्टस्य चार्वाकस्य मतं कथयति **"स्त्रीबाल"** इति । **तथाभिमानात्**—देहात्माभिमानात्। यद्यप्येषामयं सम्यक् नास्ति तथाप्यस्फुटतयाऽस्तीति सिद्धतया कथनम् । अस्माद्धेतोः **ततोऽपि**—तेभ्यश्चार्वाकेभ्योऽपि **विवेकयुक्ताः**, एतन्निश्चयस्य स्त्रीबालाद्यविषयत्वादिति भावः। पाकजानाम्—तार्किकोक्तपिठरपाकपीलुपाकजातानां रूपादीनां यत् उत्पत्तिपरिणामादि—मतभेदेनोत्पत्तिपरिणामादिकम्, तस्य बलात्, **शरीरमस्थिरं मन्वानाः**—ज्ञातवन्तः, प्राणशक्तेर्यत्समधिष्ठानम्—प्रेरकतयाऽन्तरवस्थानम्, तेन, **विकारशतावेशम्**—स्तम्भादिरूपविकारशतग्रस्तत्वम्, **श्रुत्यन्तविदः**—वेदान्तविदः, लक्षणया "अन्योऽन्तर आत्मा प्राणमयः" इत्यादिवेदवाक्यनिष्ठाः चार्वाकाः, **मन्यन्ते**, त एव जानते न तु तथा संभवतीति भावः। **अनुसन्धानयोग्यताम्**— परामर्शप्राणयोजनायोग्यताम्। प्राणस्य चात्र

1. विवेकवन्तः—K.S.S.
2. तदविषयप्रवृत्तेव—C.
3. परं पदार्थ—C.

**बुद्धिमेव काणादप्रभृतय आत्मानमाहुः । अपरे तु तस्या अपि योगिद-शायां वेद्यभावादपरत्वं मन्यमानाः असंवेद्यपर्वरूपं यन्न किंचिद्रूपं सक-लवेद्यराशिविनिर्मुक्तं शून्यत्वान्नभस्तुल्यं न तु महाभूताकाशस्वभावं तत्**

---

स्थूलत्वसूक्ष्मत्वभेदेन द्वैविध्यम् । तत्र प्रथमस्य भेदस्य देहादूर्ध्वमेव स्थितिः । द्वितीयस्य तु बुद्धेरूर्ध्वमिति कदाचिच्छून्यादनन्तरं कदाचिद्देहादनन्तरं स्थितः प्राणनिर्देशः न पूर्वापरविरोधावहः । **बुद्धिमेव**--विज्ञानरूपं बुद्धितत्त्वमेव । **"काणादप्रभृतयः"** इति, प्रभृतिशब्दान्नैय्यायिकविज्ञानवादिबौद्धादिग्रहणम्, तदुक्तम्:--

"आत्मा विज्ञानमयः"

इति । यद्यपि बुद्धिगुणयुक्तस्य तैरात्मत्वमुक्तं तथापि क्रियाक्रियावतोर-भेदमाश्रित्यैवमुक्तम् । शून्यवादिमतमाह **"अपरे तु"** इति । **अपरे**, कर्तारः । **तस्या अपि**--बुद्धेरपि । **योगिदशायाम्**--योग्यवस्थायाम् । योगी हि अन्तःप्रविष्टः बद्धिमपि देहवदेव पश्यति । **वेद्यभावादपरत्वम्**--न्यूनत्वम्, **मन्यमानाः** सन्तः, **तत्प्रमातृतत्त्वम्** अर्थादात्मानम् **आहुः ।** कीदृशम्? सकलो यो वेद्यराशिः तस्मान्निर्मुक्तम्, तान्प्रति वेदकत्वात्, अन्यथा प्रमातृत्वायोगात्, तथा **शून्यत्वान्नभस्तुल्यम्** आकाशसदृशं न तु महाभूताका-शस्वभावम्, तस्य शून्यवादिबौद्धैरात्मत्वाङ्गीकरणात् । तत्किम्? असंवेद्यपर्व--असंवेद्यम्,[1] रूपम्-स्वरूपं यस्य तादृशम्, **यन्न किञ्चिद्रूपम्**--अतिसूक्ष्मत्वेन ग्रहणायोगात् परिमितत्वायोगाच्च किञ्चिन्न भवति, न तु लौकिकाभावरूपं भवति जगद्भावेन स्फुरणासंभवप्रसङ्गात्, तदुक्तम्:--

"अशून्यं शून्यमित्युक्तं शून्यञ्चाभाव उच्यते ।
अभावः स समादिष्टो यत्र भावाः क्षयं गताः ॥"

इति । तथा :--

"अशून्यमिव यच्छून्यम्"

---

1. Between असंवेद्यं and रूपं the manuscript has तं which does not fit with the rest of the sentence.

**प्रमातृतत्त्वं[1] शून्यब्रह्मवादिनः सांख्यप्रभृतय आहुः। तस्मिन्नपि वेद्ये शून्यान्तरं तत्रापि शून्यान्तरम्–इति यावद्भेदः तावत्कल्पना न त्रुट्यतीति[2] तदर्थमाह 'कल्पिते' इति। न चानवस्था परमार्थप्रकाशबलेन यतः**

---

इति। एतच्चेह श्रीशैवनये शुद्धविद्यातत्त्वमेव। अत्रैव हि वेदान्तिप्रभृतयो निष्ठिताः, परमोत्कर्षस्तेषां सदाशिवदशा। **"अपरे"** इत्यस्य प्रपञ्चं करोति **"शून्य"** इति। **शून्यब्रह्मवादिनः**––विमर्शशक्तिरहितचिन्मात्राख्यब्रह्मतत्त्वनिष्ठाः वेदान्तिनः, सांख्याः–सांख्यशास्त्ररताः, प्रभृतिशब्देन पातञ्जलग्रहणम्। तत्र ब्रह्मवादिनामद्वैते विश्रान्तिः सांख्यादीनां तु द्वैते एव, ब्रह्मवाद्यद्वैतञ्चाद्वैताभास[3] एव विश्वोत्तीर्णस्यैव सर्वत्वकथनात्। अद्वैतं हि परमार्थरूपं तद् भवति यत्र सर्वं तथैव स्थितं सत् एकतया भाति द्वैतञ्चाद्वैतञ्चान्तः करोतीत्यास्तामेतदवान्तरम्। प्रकृतमनुसरामः। **"कल्पिते"** इत्यस्याभिप्रायमाह **"तस्मिन्"** इति। **तस्मिन्नपि**–देहादावपि, **वेद्ये**—परिमितत्वेन वेद्यत्वानपायात् स्वतो बाह्यं प्रति वेदकत्वेऽपि स्वत आन्तरं प्रति वेद्यत्वाख्यगुणयुक्ते सति, **शून्यान्तरम्**—न किञ्चिद्रूपं प्रमात्रन्तरम्, अपेक्षत इति शेषः, **तत्रापि शून्यान्तरम्**, समानन्यायात्, **इति**—एवम्, **यावद् भेदः**––परिमितप्रमात्रङ्गीकारकृतो भेदो भवति, **तावत्कल्पना न त्रुट्यति, इति**—अतः, **तदर्थम्**—कल्पनात्रोटनार्थम्, **आह**–कथयति, **"कल्पिते" "इति"**, एतत्पदमित्यर्थः, कल्पनात्रोटनार्थमेवायं प्रमातृप्रपञ्चः कृत इति न पुनः कल्पनायां प्रयोजनमिति भावः। एतेन **"नभसि"** इत्येतस्यैव **"कल्पिते"** इति विशेषणम्, न तु देहादेः, अस्य अज्ञं प्रति स्फुटं बहिः स्थितत्वात्, तस्य तु प्रतिभया कल्प्यमानत्वादिति सूचितम्। ननु तथाप्यनवस्था स्यादेवेत्यत आह **"न च"** इति। कुतो नानवस्थेत्यत आह **"परमार्थ"** इति। अयं भावः। देहादिद्वारेण प्रकाश एव ग्रहणं करोतीति तद्बलेनैवैषां ग्रा-

---

1. महाभूताकाशस्वभावं प्रमातृतत्त्वम्—K.S.S.
2. न त्रुटचति तदर्थमाह—K.S.S.
3. ब्रह्मवादिद्वैतं य—C.

**सर्वस्य प्रकाशो न तु देहादिवशात्, तथा त्वभिमानमात्रं[1] देहः[2] प्रमातेति, सङ्कोचमात्ररूपं चित्तत्त्वं शून्यम्, भूतलं यथा घटाभावः, सङ्कोचो[3]ऽपरि वेद्यांशच्छायाच्छुरितं तु चित्तत्त्वमेव बुद्धिप्राणदेहादि इति । अमो एव भूमि-**

---

हकत्वं सिद्धम् । तत्र च देहादीनां बहिरङ्गं प्रति स्फुटं स्थितत्वादेकस्यैवास्य प्रमातृतत्त्वस्य कल्पनात्रोटनार्थं कल्पितत्वम् । उपदेश्यस्य तावत् परमार्थप्रकाशानभिज्ञत्वात् अत्रैव च तत्कथनेऽधिकाराभावात् परप्रकाशस्थाने तावदस्यैवाभिषेको दीयते नीचजनार्थं राजस्थान इव राजभृत्यस्य । अत्र निष्ठितस्तु स्वयमेव योग्यतासादनेन तत्परप्रकाशस्वरूपं ज्ञास्यत्येवेत्यलं प्रपञ्चेन । एतेन फलितं वस्तु कथयति **"तथा"** इति । **तथा तु**–तथा च सति, देहः **प्रमाता** भवति, इति–एतत्, **अभिमानमात्रं** भवति न तु सत्यवस्तु भवति । ननु कथं नभसः प्रमातृत्वं युक्तमिति शिष्याभिप्रायमाशङ्क्याह **"सङ्कोच"** इति । सङ्कोचमात्रम्–स्वकीयाप्रसृतिमात्रम्, न त्वभावासादनम्, रूपं यस्य तादृशम्, **चित्तत्त्वम्**–चितः स्वरूपम्, **शून्यं** भवति, यथा सूर्यमण्डलात्पतितं भूमण्डलं तावदप्राप्तं तेज इति भावः । अत्र दृष्टान्तं स्फुटतयाप्याह **"भूतलम्"** इति । यथा सङ्कोचमात्ररूपं भूतलं घटाभावो भवति घटास्पृष्टस्य भूतलस्यैव तार्किकैरपि घटाभावत्वकथनात् । ननु देहादित्वमस्य कथं संभवतीत्यत आह **"सङ्कोचोऽपरि"** इति । सङ्कोचोपरि–प्रोक्तस्वरूपसङ्कोचपृष्ठे, या वेद्यांशच्छाया–स्वयंकलितबाह्यान्तरवेद्यप्रतिबिम्बम्, तयाच्छुरितम्––व्याप्तं[4] यच्चित्तत्त्वम्–चित्स्वरूपम्, बुद्धिप्राणादि भवति । आदिशब्देन छायाधारिवेद्यग्रहणम् । एतेषां देहादीनां भूमिकात्वं नानाशास्त्रेषु प्रोक्तं नामभेदादि च कथयति **"अमो"** इति । **अमो एव**—देहादयः, **उत्तरोत्तरम्**–क्रमेण, योगपुष्टतासादनेन **आरोहताम्**—पूर्वस्य पूर्वस्य वेद्यभावापादनेनोत्तर-

---

1. तथात्वाभिमानमात्रम्—K.S.S.
2. देहादिः—K.S.S.
3. संकोचः । अपरवेद्यांशच्छायाच्छुरितम्—K.S.S.
4. व्याप्तं तु चित्तत्त्वम्—C.

**काविशेषा उत्तरोत्तरमारोहतां योगिनां जाग्रदादितया पिण्डस्थादितया चागमेषु भण्यन्ते, अपहस्तनं च व्याख्यास्यते:—**

**'कलोद्वलितमेतच्च चित्तत्त्वं कर्तृतामयम्।**

**अचिद्रूपस्य शून्यादेर्मितं गुणतया स्थितम्॥'**

---

मुत्तरं स्वरूपत्वेनाश्रितवताम्, **योगिनाम्**—कोशतत्त्वविवेकाख्ययोगयुक्तानां पुरुषाणाम्, **भूमिकाविशेषाः** भवन्ति। तथा **आगमेषु**—नानाविधेषु श्रीशिवशासनेषु, **जाग्रदादितया**—अलौकिकजाग्रत्स्वप्नसुषुप्ततुर्यभावेन, तथा **पिण्डस्थादितया**—पिण्डस्थपदरूपरूपातीतभावेन च, श्रीशिवेन **भण्यन्ते**—कथ्यन्ते। तत्र देहप्रमातुः जाग्रत्त्वम् इन्द्रियैर्बाह्यार्थग्रहणात्, आरोहश्चात्र बाह्यवद्यापेक्षया ज्ञेयः। अस्यैव चापरिमितभावे शुद्धविद्यात्वं क्रियाप्रधानत्वात्। बुद्धिप्रमातुः स्वप्नत्वम्, आभासरूपवेद्यग्रहणात्, अस्यैव चापरिमितभावे ईश्वरत्वम्। प्राणप्रमातुः सवेद्यसुषुप्तित्वं परिमिते स्वरूपमात्रे स्थितत्वात्, सवेद्यत्वं चास्य सुखसंवेदनात्, अन्यथा सुखमहमस्वाप्समित्यौत्तरकालिकपरामर्शायोगात्। अपरिमितभावे तु एतदेव सदाशिवतत्त्वम्। शून्यप्रमातुश्चापवेद्यसुषुप्तत्वं नकिंचिद्रूपपरिमितप्रमातृरूपत्वात्, अपरिमितभावे त्वस्यैव शिवत्वम्। तत्र च परिमितभावे रूढिं गते योगी स्वयमेव शनैः शनैरपरिमिततामासादयत्येव। तदुक्तम्:—

"यदा त्वेकत्र संरूढस्तदा तस्य लयोद्भवौ।

नियच्छन् भोक्तृतामेति ततश्चक्रेश्वरो भवेत्"॥

इति। अयं ह्यत्राभिप्रायः। यदा योगी एकत्र-परिमिते देहादौ, संरूढः—सम्यक् प्रमातृभावेन स्थितः, तदा तस्यापि-परिमितत्वे...ादितस्य देहस्यापि, लयोद्भवौ नियच्छन्—वेद्यतापादनेन स्वनिर्मितत्वं[1] जानन् सन्, भोक्तृतामेति—तस्यापि परिमितदेहादिपदस्यापि वेदकतामासादयति, ततः—तदनन्तरं परिपुष्ट्यासादनेन, चक्रेश्वरो भवेत्—शुद्धविद्यादिरूपभेदाभेदाभेदप्रधानापरिमितत्वरूपो[2] भवेदिति।

---

1. सुनिर्मितत्वम्—C.
2. शुद्धविद्यादिरूपभेदभेदाभेदं—C.

**इति, तत्स्थितम्—अशुद्धः 'अहम्' इत्यवमर्शो विकल्प एव ॥ ५ ॥**

**द्विविधोऽपि चायम् 'अहं-प्रत्ययो' द्विधा—**

---

तत्र जाग्रदादयः प्रसिद्धाः। पिंडादेः स्वरूपन्तु :—

" पिण्डं कुण्डलिनीशक्तिः पदं हंसः प्रकीर्तितः ।
रूपं चिद्बिन्दुरित्युक्तं[1] रूपातीतः परः शिवः " ॥

इत्यादिषु प्रदेशेषु निर्णीतम् । अत्र च पिण्डं लक्षणया पिण्डरूपदेहान्तगतः भुजगाकारः अन्त्रविशेषः, कुण्डलिनीशक्तिः—कुण्डलिनीतिप्रसिद्धायाः प्राणशक्तेस्तदन्तर्गतत्वात् । हंसः—हंसेति शब्दोच्चारणेन प्राणः। तदुक्तम् :—

" षट्शतानि दिवा रात्रौ सहस्राण्येकविंशतिः ।
हंस हंसेत्यमुं मंत्रं जीवो जपति सर्वदा " ॥

इति। जीवशब्देन प्राण एवात्रेष्टः, पदत्वं चाध्वाधारत्वात्। तदुक्तम् :—

" अध्वा प्राणे प्रतिष्ठितः"

इति। चिद्बिन्दुः—विज्ञानरूपः, प्रकाशविप्रुड्रूपत्वञ्चास्य परिच्छिन्नत्वेन मूर्तत्वात्, परः शिवः—अनाश्रितः शिवः, स चात्र शून्यम्, रूपातीतत्वं चास्याग्राह्यत्वात्, परिमितत्वमनपेक्ष्यैवमुक्तम्, अपरिमितरूपातीतस्यैव शिवत्वात्, परिमिततायां तु शून्यप्रमातृत्वादित्यलं प्रपञ्चेन। नन्वपहस्तनं किमुच्यत इत्यत आह **"अपहस्तनञ्च"** इति । कुत्र व्याख्यास्यत इत्यत आह **"कलोद्दलितम्"** इति। 'इति' शब्दः श्लोकसमाप्तौ। अस्य व्याख्या तत्रैव भविष्यतीतीह नायस्तम्। फलितमर्थं सङ्क्षिप्य कथयति **"तत्"** इति। **तत्**—तस्मात्, **स्थितम्**—सिद्धम्, **अशुद्धः**— भेदाख्यमलदूषितदेहादिविषयत्वेनाशुद्धियुक्तः, **अहमित्यवमर्शः**— अहंविमर्शः, **विकल्प एव** भवति, न परः प्रत्यवमर्शो भवतीत्यर्थः।

अथ षष्ठस्य श्लोकस्यावतरणिकां करोति **"द्विविधोऽपि"** इति।

अत्र टीका :—

**द्विविधोऽपि च**, शुद्धाशुद्धात्मकतया स्थितत्वेन प्रकारद्वययुक्तोपि चेत्यर्थः । तत्रैवं सति चतुष्प्रकारत्वमस्यापद्यत इति भावः। तत्र प्रथमं शुद्धस्य रूपद्वयं कथयति—

---

1. रूपं चिद्बिन्दुरित्युक्तः—C.

अनुभवमात्ररूपश्चानुसंधानात्मा च, शिवात्मनि 'अहम्'इति सदाशिवात्मनि 'अहमिदम्'इति शुद्धो द्विधा। अशुद्धोऽपि अहं स्थूल इति, योऽहं स्थूलोऽभवं सोऽहं कृश, बालो, युवा, स्थविरः, स एव अहम् इति च अशुद्धो द्विविधः। तत्र शुद्धे विकल्परूपत्वमप्रतिष्ठमेव इत्युक्तम्, अशुद्धे तु अनुभवरूपे विकल्पत्वमुपपादितम्, अशुद्धेऽपि तु अनुसंधानात्मकतया अभेदस्य प्रस्फुरणात् कश्चिदविकल्पकत्वं शङ्केत तस्य व्यामोहं व्यपोहितुमाह[1]:—

**कादाचित्कावभासे या पूर्वाभासादियोजना।**
**संस्कारात्कल्पना प्रोक्ता सापि भिन्नावभासिनि ॥६॥**

'देहे' इत्यादि वर्तते, कादाचित्कः कदाचिद्भवो नियतदेशकालाकारो[2]

---

**"अनुभव"** इति। **अनुसन्धानात्मा**—योजनरूपः। अशुद्धस्यापि भेदद्वयं कथयति **"अहं स्थूलः"** इति। **तत्र**—शुद्धाशुद्धमध्ये। **"उक्तम्"** इति, "साक्षात्कारक्षणेऽप्यस्ति" इत्यत्र। **उपपादितम्**—समनन्तरं साधितम्। **अभेदस्य**—"योहं स्थूलोऽभूवं सोहं कृशः" इत्यादिप्रत्यभिज्ञारूपस्यैक्यस्य। **तस्य**—शङ्काग्रस्तस्य, **व्यपोहितुम्**—छेदयितुम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"कादाचित्क"** इति।

अत्र टीका:—

"देहे बुद्धावथ प्राणे कल्पिते नभसीव वा" इत्यस्य पदवृन्दस्येहाप्यनुवर्तनं करोति **"देहे"** इति। आदिशब्देन "बुद्धौ" इत्यादीनां ग्रहणम्। वर्तते, अनुवर्तते इत्यर्थः। देहाद्यन्यपदार्थविशेषणतया **"कादाचित्क"** इत्यादि समस्तपदस्य विग्रहं व्याख्यां च करोति **"कादाचित्कः"** इति।

---

1. व्यपोहयितुम्—K.S.S.
2. अनियतदेशकालाकारः—K.S.S.

ऽवभासो यस्य देहादेः स्वलक्षणरूपस्य, तत्र या पूर्वाभासेन बालादिशरीरावभासेन योजना 'योऽहं बालः' स एवाद्य 'युवा' इत्यनुसंधानम्, आदिग्रहणादुत्तरेण भाविना आभासेन सह योजना 'स्थविरो भवितास्मि' इति, सा योजना सर्वा कल्पना विकल्प एव, न तु शुद्धः प्रत्यवमर्शः। अत्र देहादेर्विशेषणं हेतुत्वाशयेन—यतो भिन्नतावभासित्वमेव[1] देहादेस्तदानीमपि

---

"**कादाचित्क**" इत्यवयवं व्याचष्टे "कदाचित्" इति। अस्यापि वाच्यमाह "नियत" इति। नियतयोः—नियत्या नियमितयोः, देशकालयोराकारो यस्य तादृशः। **अवभासः**—स्फुरणम्, **यस्य देहादेः**—देहादिरूपस्य प्रमातुः, **स्वलक्षणरूपस्य**—अननुयायिस्वरूपस्य, प्रत्येकं भिन्नतया स्थितस्येति यावत्। सप्तम्यर्थं योजयति "तत्र" इति। तादृशे देहादावित्यर्थः। "**पूर्व**" इत्यादि समस्तपदं व्याचष्टे "पूर्व" इति। "**पूर्वाभास**" इत्यवयवं व्याचष्टे "बाल" इति। "आदि" शब्देन युवशरीरादिग्रहणम्। योजनामेवानुकृत्य दर्शयति व्याचष्टे च "योऽहम्" इति। आदिशब्दग्राह्यं वस्तु वक्तुमाह "आदि" इति। योजनामनुकृत्याह "स्थविरः" इति। **भवितास्मि**—अग्रे भविता, ग्राह्यमिति शेषः। "**सा**" इति पदं व्याचष्टे "योजना" इति। "**अपि**" शब्दार्थमाह "सर्वा" इति। अपिशब्दः कात्स्न्र्ये। "**कल्पना**" इति पदं व्याचष्टे "कल्पना" इति। सर्वं वाक्यं सावधारणमिति न्यायमाश्रित्य '**एव**' शब्दप्रयोगः। 'एव' शब्दव्यावर्त्यं स्वयमेवाह "न तु" इति। **शुद्धः**—कल्पनयाऽमिश्रः, एतेन कल्पनाया अपि प्रत्यवमर्शत्वमस्त्येवेति द्योतितम्। "**भिन्न**" इत्यादि समस्तं पदं हेतुगर्भविशेषणत्वेन व्याख्यातुमाह "अत्र" इति। **अत्र**, कल्पनात्वे इत्यर्थः। **हेतुत्वाशयेन**, हेतुत्वसूचनार्थमित्यर्थः। विशेषणान्तर्गतं हेतुत्वं स्फुटीकरोति "**यतः**" इति। भिन्नतया—परस्परतः स्वविषयात् परप्रकाशाच्च व्यवच्छेदेन, अवभासित्वम्—अवभासकर्तृत्वमेव न तु शुद्धप्रकाशवत् सर्वानुस्यूतत्वेन स्फुरणम्। **तदानीम्**—

---

1. भिन्नावभासित्वम्—K.S.S.

**अविच्छिन्नम्, यदि हि तस्य देहादेः सर्वतः पूर्णत्वम् अवच्छेदहीनत्वं पश्यन् अनुसंधानम् 'अहमिदम्' इति विदध्यात् तदियं सदाशिवभूः केन विकल्पास्पदत्वेन भण्येत[1] यावता विच्छिन्ने[2] एव सोऽनुसंधिः । भिन्नेपि कथमनुसंधानम् इति चेदाह 'संस्कारात्' प्राक्तनानुभवकृतवासनाप्रबोधजस्मृतिवशात् इति यावत्, प्राणे बलाबलवशादनुसंधिः, बुद्धौ ज्ञानसुखादितारतम्यात्, शून्ये वैतत्यावैतत्ययोगात्, अयमपि विकल्प एव, एवं 'स**

---

प्रमातृभावग्रहणेऽपि । "**अपि**" शब्दः प्रमेयभावग्रहणे भिन्नावभासित्वस्याविच्छिन्नत्वे युक्ततां सूचयति । ननु प्रमातृत्वान्यथानुपपत्त्या भिन्नावभासित्वं विच्छिन्नमेव भवत्वित्यत आह "**यदि हि**" इति । "**पूर्णत्वम्**" इति, "**अवच्छेदहोनत्वम्**" इति अस्य व्याख्या । **पश्यन्**–दर्शनक्रियाकर्ता प्रमाता, "**अहमिदम्**" इति, इदं कर्तृ अहमेवास्मि, ममैवैतद्भावेन भानात्, **विदध्यात्**—कुर्यात्, **तत्**—तदा, **सदाशिवभूः**—सादाख्यतत्त्वदशा । **विकल्पास्पदत्वेन**–विकल्पाश्रयत्वेन । **केन भण्येत**, सर्वस्य स्वान्तर्निगरणात् न कोपि वक्तुं शक्नुयादित्यर्थः । तद्वक्ष्यति

" निमेषोन्तः सदाशिवः "

इति । कुतो न भण्येतेत्यत आह "**यावता**" इति । **सोऽनुसन्धिः**–सदाशिवभूः, अत्र शिष्यः प्रश्नयति "**भिन्नेपि**" इति । न हि चैत्रस्य स्वस्मिन् मैत्रतानुसन्धानं युक्तमिति भावः । गुरुरुत्तरं कथयति "**आह**" इति । किमाहेत्यपेक्षायां सूत्रस्थं "**संस्कारात्**" इति पदं योजयति । "**संस्कारात्**" इत्येतत्पदं व्याचष्टे "**प्राक्तन**" इति । उपचारमाश्रित्येयं व्याख्या । ननु देहे एवं योजना भवतु प्राणे तु सा कथं संभवतीत्यत आह "**प्राणे**" इति । **अनुसन्धिः**–योजना, प्राणस्यैव बलहेतुत्वादिति भावः । स च "योऽहं पूर्वमबलः स एवाद्य बलवान्" इत्येवंरूपो ज्ञेयः । "**वैतत्यावैतत्ययोगात्**" इति, शून्यमातृत्वमेव शनैः शनैर्वि-

---

1. केन भण्यते—K.S.S.
2. भिन्ने हि—K.S.S.

**एवायं घटः' इति घटाद्यनुसंधानेऽपि विकल्पत्वं मन्तव्यम्, किन्तु एतासु अनुसंधानभूमिषु विद्याशक्तिराधिक्येन अचिरद्युतिवद्दीप्यते[1] इति तासां परपदपरिशीलनप्रथमकल्पाभ्युपायत्वमभ्युपागमन् गुरवः ॥ ६ ॥**

ततीभवत् परशिवीभवति, तस्य च मध्ये वैतत्यावान्तरवैतत्ययोर्योजना संभवत्येवेतिभावः। ननु कथमत्र विकल्पत्वमित्यत आह **"अयम्"** इति। **अयमपि**— वैतत्यावैतत्यानुसन्धिरपि । बाह्यवस्तुप्रत्यभिज्ञास्वपि विकल्पत्वमतिदिशति **"एवम्"** इति। ननु परमार्थतः एकवस्तुविषयासु देहादिप्रमातृविषयकल्पनासु बाह्यवस्तुप्रत्यभिज्ञासु च कथमन्यवस्तुव्यवच्छेदप्राणो विकल्पो युक्त इत्यपेक्षायां पक्षान्तरमाह "**किन्तु**" इति। **आधिक्येन**—विकल्पापेक्षयाऽधिकतया देशकालादिभागभेदस्फूर्त्तावपि आकारस्यैकतया स्फुरणात्, **विद्याशक्तिः**—भेदान्निर्गता तावदप्राप्ताऽभेदा तदुन्मुखीभूता भेदबीजमायातत्त्वोर्ध्ववर्तिनी शुद्धविद्या । **"अचिरद्युतिवद्दीप्यते"** इति, तत्क्षणमेकताबुद्धिस्तत्र स्फुरितापि पुनरपि तस्य वस्तुनोऽन्यभ्यो भेदस्फूर्तेश्चिरं स्थातुं न शक्नोतीति भावः। सा चावस्था दृढीकृताभेदभूमिकानां प्रबुद्धानामेव विषयः नाप्रबुद्धानाम्, न ह्यचर्वितखण्डस्वादानां लेशतः तत्स्वादोपलब्धिरन्यत्र स्तोकं मधुरेषु वस्तुषु युज्यते, पूर्वज्ञाततत्स्वादानामेवात्रापि तदास्वादपरामर्शे शक्तत्वात्, सुप्रबुद्धानां सर्वदा सर्वत्र महाद्वैतबुद्धियुक्तानामत्रोपेक्षैवेत्यलम्। एतदवष्टम्भेन गुरुपरम्परातः आयातं संप्रदायं कथयति **"इति"** इति। **इति**—अतः कारणात्, **तासाम्**—देहादिप्रमातृविषयाणां योजनानां बाह्यवस्तुविषयाणां च, **गुरवः**, परपदस्य-परशिवाख्यस्योत्कृष्टस्थानस्य, यत् परिशीलनम्—सिद्धस्य यत्परिचयविषयीकरणं न तु साधनम्, तस्य प्रथमकल्पाभ्युपायत्वम्—प्रथमारम्भकारणत्वम्, **अभ्युपागमन्**— अङ्गीकृतवन्तः। नानाविधैरुपायैः श्रीभगवदनुग्रहेण वा लब्धं परपदं व्युत्थानकालेऽपि एवंविधास्ववस्थास्वेव परिशीलनीयम् इति गुरुभिः परम्परया प्रबुद्धेभ्यः शिष्येभ्यः शिक्षा दत्ता न तु बाहुल्येन प्रक्रियाशास्त्रेष्वेतल्लिखितम्। तेन हि मूढा अपि विषयग्रस्ताः क्लेशकारिणो नानाविधानुपायांस्त्यक्त्वात्रैव लगेयुः न च तत्प्राप्नु-

1. अचिरद्युतिवदुद्दीप्यते—K.S.S.

**न च देहादीनां पूर्वपूर्वप्रमातृवेद्यता येन प्रमातुरप्रकाशे प्रमेयं न भाति तत्प्रकाशश्च न पूर्वप्रकाशं विना, सोऽपि न प्रमात्रन्तरप्रकाशं विना इत्यनवस्था स्यात्, अपि तु शुद्धप्रकाश[1] एव विश्वस्य प्रकाश इति निरूपयन्**

---

यु रिति "गुरवः" इत्यस्याभिप्रायः। परमार्थतस्तु नानाविधोपायाश्रये नाना-विधैरुपायैराश्रितैरपि भगवच्छक्तिपातं विना न किञ्चित्सेत्स्यति, तत्र प्रवृत्तिरपि वा तत्कार्यैवेत्यलम् ॥ ६ ॥

अथ सप्तमस्य श्लोकस्यावतरणिकां करोति **"न च"** इति।

अत्र टीका :–

**देहादीनां पूर्वपूर्वप्रमातृवेद्यता**—प्राणस्य देहे वेद्यभावः बुद्धेश्च प्राणे इत्यादिरूपा, **न च** भवति, तदवच्छिन्नताभावस्य तद्वत् कल्पितत्वादिति भावः। **येन**—यया पूर्वं प्रमातारं प्रति वेद्यतया, **प्रमातुः**—परप्रकाशं प्रति प्रमातृतया कल्पितस्य नभसः, **अप्रकाशे**—बुद्धिप्रमातृकृतप्रकाशाभावे सति, **प्रमेयम्**—परप्रकाशाख्यं प्रमेयम्, **न भाति**, स्वयमसिद्धस्य परसिद्धिप्रवृत्त्ययोगात्। **तत्प्रकाशश्च**—बुद्धिप्रमातृप्रकाशश्च, **पूर्वप्रकाशं विना**—प्राणप्रमातृप्रकाशं विना न भवति **सोऽपि**—प्राणप्रमातृप्रकाशश्च, **प्रमात्रन्तरप्रकाशं विना**—देहप्रमातृप्रकाशं विना न भवति। **इति**—एवम्, **अनवस्था स्यात्**—देहप्रमातुरपि प्रमात्रन्तरापेक्षापातात् तस्याप्यन्यस्यापेक्षा तस्याप्यन्यस्येत्यादिरूपमनवस्थानं स्यात्, न च नभउपरि परप्रकाश इव देहस्याधः कोपि प्रमातास्ति येनानवस्था न स्यादिति भावः। तथा च सर्वसर्विकयाऽऽन्ध्यस्यैव साम्राज्यं स्यादिति भावः। पुनः किमस्तीत्यत आह **"अपि तु"** इति। **"अपि तु"** इति निर्णीते पक्षान्तरे, **शुद्धप्रकाश एव विश्वस्य**—सवस्य नभआदेः प्रमातृजातस्य बाह्यान्तर-तया स्थितस्य प्रमेयजातस्य च, **प्रकाशो** भवति नभआदिनिष्ठस्य पूर्वं प्रति प्रमातृ-त्वस्यापि तत्प्रमातृत्वानपायात्, न हि गृहाकाशकृतं कार्यं महाकाशकृतं न भवतीति वक्तुं युक्तमिति भावः। **इति**—एवम्, **निरूपयन्**—योग्यतया निश्चयविषयी-

---

1. विशुद्धप्रकाशः—K.S.S.

उक्तयुक्त्या सदैव सृष्ट्यादिशक्त्यवियोगो[1] भगवत उक्तो भवति, इति दर्शयति:—

**तदेवं व्यवहारेऽपि प्रभुर्देहादिमाविशन् ।**
**भान्तमेवान्तरर्थौघमिच्छया भासयेद् बहिः ॥ ७ ॥**

यत् पूर्वं दर्शितं 'देहे बुद्धौ' इत्यादि तत् एवम् उपपद्यते, कथम् ? यदि व्यवहारे मायापदे देहप्राणादिमपि प्रभुरेव प्रकाशपरमार्थ इच्छया मायाशक्तिरूपया, आविशन् देहप्राणादिप्राधान्येन स्वरूपं प्रदर्शयन्, अन्तः संविन्मात्रे, भान्तम् अहमित्येवंरूपम् अर्थौघम् इच्छयैव बहिः

---

कुर्वन्, **उक्तयुक्त्या**—"सदा सृष्टिविनोदाय" इति पूर्वमुक्तया युक्त्या, इति–एवम्, **दर्शयति**–अनुग्राह्यान् प्रति प्रकटीकरोति। इति किमिति ? **भगवतः**—स्वातन्त्र्याख्यमहाशक्तियुक्तस्य परप्रकाशस्य, **सदैव सृष्ट्यादिशक्त्यवियोगो** भवति, स च द्विप्रकारत्वेन पूर्वं दर्शित एवेति न पुनरायस्तम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"तदेवम्"** इति।

अत्र टीका :–

**पूर्वम्** –"चित्तत्वं मायया हित्वा" इत्यत्र श्लोके, **एवम्**, वक्ष्यमाणवस्तुनि सतीत्यर्थः। **"उपपद्यते"** इति शेषत्वेनाध्याहृतम्। अत्र शिष्य आह **"कथम्"** इति कथमुपपद्यत इत्यर्थः। गुरुरुत्तरं कथयति **"यदि"** इति। **"व्यवहारे"** इति पदं व्याचष्टे **"माया"** इति, व्यवहारयोग्ये भेदप्राणे मायातत्त्वविषये इत्यथः। सूत्रे **"आदि"** शब्देन प्राणादिग्रहणम्, अत्र तु 'आदि' शब्देन बुद्ध्यादेर्ग्रहणम्। **"प्रभु"** शब्दं व्याचष्टे **"प्रकाश"** इति। **"अन्तः"** इति व्याचष्टे **"संवित"** इति। **"भान्तम्"** इति व्याचष्टे **"अहमित्येवम्"** इति। अन्तर्भाने हि अहंभावे विलय एव। तदुक्तम् :–

"अहमित्यस्य विच्छिन्न"

---

1. सृष्टयादिशक्तिवियोगोऽपि—K.S.S.

**इदमिति भासयति तत एतदुपपद्यते, अन्यथा तु अनवस्था स्यात्। हेतौ लिङ्। अपिशब्द एवशब्दश्च भिन्नक्रमौ, यत् एतावत् उक्तम्, तदिति, तस्मात् हेतोः, एवं जातं वक्ष्यमाणरूपम्, किं तत्? यत् किल प्रभुः परस्परं व्यवहारकाले क्रयविक्रयप्रेक्षाव्याख्यादौ[1] चैत्रमैत्रादिसंबन्धिनो देहप्राणादीन् एकतया तावति व्यवहारे[2] आविशन् अन्तर्भान्तमेव अनुज्झितान्तःप्रकाशमेव सन्तं बहिः एकाभासतया भासयति इति**

---

इति। भावराशिवाचकस्य **"अर्थौघ"** शब्दस्य प्रसिद्धतया व्याख्या न कृता। **"बहिः"** इति पदं व्याचष्टे **"इदम्"** इति। **"भासयेत्"** इत्यस्य व्याख्यां करोति **"भासयति"** इति। **ततः**—तस्माद्धेतोः, **एतत्**—अर्थौघभानम्, **अन्यथा**—तदावेशाभावे, **अनवस्था**—अवतरणिकायां प्रोक्तमनवस्थानम्। लिङर्थमाह **"हेतौ"** इति। यतः अर्थौघं भासयति ततो ज्ञायते देहादिषु विशतीति योजना। **"भिन्नक्रमौ"** इति, देहशब्देन प्रभुशब्देन च संबन्धयोगादिति भावः। संभावनायामपि लिङः व्याख्यातुं **"तदेवम्"** शब्दयोः स्फुटतया योजनां करोति **"यत्"** इति। **यदेतावदुक्तम्**—समनन्तरं प्रोक्तम्। **"तत्"** शब्दस्योपन्यासपूर्वं व्याख्यां करोति **"तत्"** इति, तस्माद्धेतोः, **एवं जातम्**—सिद्धम्, कीदृशम्? **वक्ष्यमाणरूपम्**—शेषेण वक्ष्यमाणस्वरूपम्। शिष्यः प्रश्नयति **"किं तत्"** इति, यज्जातं तत्किं भवतीत्यर्थः। अत्रोत्तरं वक्तुं व्याख्यातमपि श्लोकं पुनः योजनापूर्वं सङ्क्षेपेण व्याचष्टे **"यत्"** इति। **"क्रयविक्रय"** इत्यनेन मलिनव्यवहारग्रहणम्, **"प्रेक्षा"** इत्यादिना शुद्धव्यवहारग्रहणम्, **एकतया**—स्वाभिन्नतया, **तावति व्यवहारे**, न तु सर्वत्र व्यवहारेषु तथा चात्रैव महाव्रतप्राप्तिप्रसङ्गात्, **एकाभासतया**, यथास्वं घटादिपदार्थाभासतया न तु

---

1. क्रयविक्रयप्रेक्षाव्याख्यादौ—K.S.S.
2. तावति आभासे—K.S.S.

संभाव्यते इत्येतज्ज्ञातम्, इति संभावनायां लिङ् । तेन तेन प्रमात्रा सह अस्मिन्काले[1] ऐक्यं सृज्यते, अन्येन प्रमात्रा ऐक्यं संह्रियते, घटादि-मात्ररूपे स्थितिः क्रियते, पूर्णस्वरूपनिमीलनात् तिरोभाव आधीयते, तावत्याभासे ऐक्यावभासपूर्णत्ववितरणात्[2] अनुग्रहः क्रियते, तेन न केवलं

---

सर्वाभासतया। "एतज्ज्ञातम्" इत्यनेन "किं तद्" इति प्रश्नस्य स्फुटतया निराकाङ्क्षीकरणम् एतेन[3] फलितम्, तस्य च सृष्ट्यादिपंचकृत्यकारित्वं कथयति "तेन" इति। **तेन**-देहाद्यावेशपूर्वमर्थौघभासनेन, प्रभुणा **तेन, प्रमात्रा सह**-देहादिप्रमात्रा सह,[4] **अस्मिन्काले**—आवेशविशेषणीभूते समये, **ऐक्यं सृज्यते,** अन्यथा तदावेशासंभवात्, **अन्येन प्रमात्रा सह**—इतः पूर्वमावेशविषयीकृतेन प्रमात्रा सह, **ऐक्यं संह्रियते**—व्यापकत्वेऽपि अनौन्मुख्यमात्रेण तद्योगात्, तथा **पूर्णस्वरूपनिमीलनात्**—तदावेशान्यथानुपपत्त्या स्वकीयपूर्णस्वभावस्य तावति भागे सङ्कोचनात्, **तिरोभाव आधीयते**—संपाद्यते, **तावत्याभासे**—तत्कालकृतार्थाविभासे, **ऐक्यावभासपूर्णत्ववितरणात्,** ऐक्यावभासस्य—अहंविमर्शरूपैक्यावभासस्य संबन्धिपूर्णत्वदानात्,[5] **अनुग्रहः**—स्वात्मनि लयीकरण-

---

1. अस्मिन् काले is omitted in the K.S.S. edition.
2. ऐक्यावभासनपूर्णत्ववितरणात्—K.S.S.
3. In view of इत्यनेन at the beginning of the sentence, एतेन seems to be unnecessary.
4. देहादिप्रमात्रा सह comes in the manuscript after आवे-शविशेषणीभूते समये। But it is evidently an explanation of प्रमात्रा सह। We have, therefore, placed it immediately after it.
5. The compounding of संबन्धि with पूर्णत्वदानात् sounds rather awkward. The text could be improved as follows :—
   संबन्धिनः पूर्णत्वस्य दानात् or संबन्धि यत् पूर्णत्वं तस्य दानात् ।

**महासृष्टिषु महास्थितिषु महाप्रलयेषु प्रकोपतिरोधानेषु दीक्षाज्ञानाद्यनुग्रहेषु भगवतः कृत्यपञ्चकयोगः यावत् सततमेव व्यवहारेपि। यदुक्तम्:—**

**'सदा सृष्टिविनोदाय सदा स्थितिसुखासिने।**

**सदा त्रिभुवनाहारतृप्ताय स्वामिने नमः॥'**

**इति।**

**'प्रतिक्षणमविश्रान्तस्त्रैलोक्यं कल्पनाशतैः।**

**कल्पयन्नपि कोऽप्येको निर्विकल्पो जयत्यजः॥'**

**इत्यादि च। तथा:—**

रूपः अनुग्रहः, क्रियते, अर्थावभासो हि अहंविमर्शे विलीयते। तदुक्तम् :—

"अहमित्यस्य विच्छिन्नविमर्शस्य"

इति। स चाहंविमर्शः प्रकाशस्वरूपभूत एवेति भावः। **प्रकोपतिरोधानेषु**—प्रकोपेन यानि तिरोधानानि तेषु, **व्यवहारेऽपि**—ग्राह्यग्राहकोद्भावनेन संपादिते शुद्धाशुद्धव्यवहारेऽपि, न केवलं महासृष्ट्यादिष्वेवेति 'अपि' शब्दाभिप्रायः। तत्र महासृष्ट्यादिषु सृष्ट्यादित्वं पूर्वं दर्शितमेव, मितप्रमातृव्यवहारेऽपि सदा सृष्ट्यादि तत्रैव सङ्क्षेपेण निर्णीतम्, इह चायं द्वितीयः प्रकारः स्वयमपि ग्रन्थकारेण स्फुटं निर्णीत इति अत्रापि[1] योजनीयः, अस्माभिस्तु विस्तरभिया प्रपंचो न कृतः। अत्र वृद्धसम्मतिमाह **"यदुक्तम्"** इति, किमुक्तमित्यपेक्षायामाह **"सदा"** इति। अस्य श्लोकस्य पूर्वमर्थनिर्णयः कृत इति न पुनरायस्तम्, वक्तव्यशेषं यद्वर्तते तदिहोच्यते। अत्र "आहार" शब्देनैव तिरोधानानुग्रहयोरपि ग्रहणम्, तत्र व्यवहारे तिरोधानानुग्रहौ ग्रंथकृता इह दर्शितौ, महासृष्ट्यादित्रयानन्तरभाविनौ तु संहृतसृष्ट्यादेः स्वात्मनि संस्कारभावेन तावदवस्थापनं ततश्च स्वात्मनि लयीकरणमित्येवंरूपौ ज्ञेयौ, एतौ च तत्र योजनीयावेवेत्यलम्। अन्यदपि वाक्यद्वयमुदाहरति **"प्रतिक्षणम्"** इति **"प्राकाम्यम्"** इति च, इत्येतस्मिन् वाक्य-

1. न तत्रापि—C.

'............प्राकाम्यमात्मनि यदा प्रकटीकरोषि ।

व्यक्तो:............................................. ॥'

इति च ॥ ७ ॥

इह अन्तरर्थाभावभासः स्थित एव, तत् किं तत्र कारणान्तरचिन्तया इति प्रकृतं प्रमेयम्, तत्सिद्धये उपपत्तिः उक्ता, तेन विना इच्छारूपः प्रत्यवमर्शो न स्यात् इति, तत्प्रसङ्गात् प्रत्यवमर्शविकल्पादिस्वरूपम् उपपादितम्, इति शिष्याणां धियं समाधातुं प्रकृतं प्रमेयम् उपपादयन् उपसंहरति :—

**एवं स्मृतौ विकल्पे वाप्यपोहनपरायणे ।**

**ज्ञाने वाप्यन्तराभासः स्थित एवेति निश्चितम् ॥८॥**

---

द्वयेऽपि सर्वदा सृष्ट्यादिकारित्वमेव प्रोक्तमिति नात्र प्रपंचः कृत इत्यलम् ॥ ७ ॥

अथाऽष्टमस्य श्लोकस्यावतरणिकां करोति "इह" इति।

अत्र टीका :–

**अन्तः**–पूर्णप्रकाशान्तः, "**स्थित एव**" इति, अन्यथा प्रागिवेत्यत्रोक्तन्यायेन प्रकाशासंभवात्, **प्रकृतम्**–आरब्धम्, **प्रमेयम्**–निर्णेयं वस्तु, कीदृशी असावुपपत्तिरित्यत आह "**तेन**" इति। एतच्च "न विना तस्मादिच्छामर्शः प्रवर्तते" इति श्लोकखण्डेनोक्तम्, "**समाधातुम्**" इति, अन्यथा तद्धियः निक्षिप्ते[1] अत्र वस्तुजाते समाधानं न संभवेत् इति। **उपपादयन्**–उपपत्त्या स्थापयन् ।

एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**एवम्**" इति ।

अत्र टीका :–

"**एवम्**" शब्दस्य निमित्तवाचकत्वमभिप्रेत्य व्याख्यां करोति "**प्रकाश**" इति। **प्रकाशात्मा**–शुद्धप्रकाशरूपः, **वस्तुतः**, न त्वापाततः, तेन हि देहादेरेव निजनिजविषयं प्रति यथास्वं प्रमातृत्वम्। "**अपि**" शब्दः देहादिप्रमातृताभिमाननिरासे शुद्धप्रकाशस्य निःसंशयां प्रमातृतां द्योतयति। एवंशब्दापेक्षितं

---

1. अन्यथा तद्धियः विक्षिप्तेऽत्र वस्तुजाते—C.

**प्रकाशात्मा परमेश्वर एव यतो देहादिप्रमातृताभिमानदशायामपि वस्तुतः प्रमाता, "एवम्" इति, अतो हेतोः इदं सिद्धं भवति—स्मरणे अपोहनजीविते च विकल्पे अनुभवज्ञाने च अन्तराभासः प्रकाशविश्रान्तः स्थित एव, नात्र संशयः कश्चित्, यदि हि देहादिरेव परमार्थप्रमाता स्यात् तत् शरीरस्य प्राणस्य धियः शून्यस्य वा अन्तर्घटादि इति न किंचित् एतत्–घटादिपरिहारेण देहादेः स्थितत्वात्। परमार्थप्रकाशस्तु सर्वसहः**

---

वस्तूकृत्वा **"एवम्"** शब्दमुपन्यस्य व्याचष्टे। **"एवम्"** इत्येतेन "एवम्" शब्दस्य एवं सति इत्ये व्याख्या कार्या इति सूचितम्। किं सिद्धं भवति इत्यपेक्षायाम् **"स्मृतौ"** इत्यादिश्लोकं व्याचष्टे **"स्मरणे"** इत्येतेन **"स्मृतौ"** इत्यस्य व्याख्या। **"अपोहनजीविते"** इत्यनेन **"अपोहनपरायणे"** इत्यस्य व्याख्या। **"अन्तराभासः"** इति,[1] **"प्रकाशविश्रान्तः"** इति **"अन्तः"** इत्यस्य व्याख्या, **"आभासः"** इति अर्थाभासवाचकम् कर्तृतया स्थितम् प्रसिद्धत्वेन न व्याख्यातम्। एवं स्मृत्यादावपि आभासः अन्तःस्थित एव भवतीति योजना। एवञ्च सर्वत्र प्रकाश एव प्रमाता इति भावः। **"इति"** शब्दः पूर्ववाक्योक्तसमस्तार्थाक्षेपपरः। **"निश्चितम्"** इति पदं व्याचष्टे **"नात्र"** इति। अत्र समर्थनं स्वयमेव करोति **"यदि"** इति, **"अन्तर्घटादि"** इति, "प्रागिवार्थः" इति न्यायेन घटादि अन्तर्भवेदिति योजना। भवतु ततः किम् इत्यत आह **"न किंचित्"** इति। कथं न किंचित् इत्यत आह **"घटादि"** इति। न हि देहान्तः कोपि घटं लभते इति भावः। ननु तर्हि प्रकाशान्तरपि कथं घटादि स्यादित्यत आह **"परमार्थ"** इति, **"सर्वसहः"** इति सर्वशक्तियुक्तत्वात् अन्यथा सर्वप्रा-

---

1. After अन्तराभासः इति, the manuscript has उपन्यस्य अन्तः इति। It does not fit in well with the rest of the sentence, which yields a good meaning without it. Hence it has been omitted.

इति तत्रान्तर्विश्वम्, इति अनायाससिद्धमेतत् ॥ ८ ॥

ननु अन्तराभासवर्गस्य बहिराभासनं यदि सर्वत्रास्ति कस्तर्हि स्मरणादौ आभासभेदः, न च असौ न संवेद्यते—स्फुटतास्फुटतादि[1]प्रस्फुरणस्य अनपह्नवनीयत्वात् इत्याशङ्क्याह :—

**किन्तु नैसर्गिको ज्ञाने बहिराभासनात्मनि।**
**पूर्वानुभवरूपस्तु स्थितः स स्मरणादिषु ॥ ९ ॥**

---

दुर्भावासंभवः। ननु शून्यप्रमातुरपि कथमेवंभावो न कल्प्यते ? सत्यम्, एवं कल्पिते तु स एव परः प्रकाशः स्यात्। अस्तु का हानिः, स्थलाद्बुद्धिप्रमातृभावान्निर्गत्य न हि सद्य एव प्रमाता व्यापकीभवति किन्तु क्षणं लेशतः संस्कारभावेन स्थितं परिमितत्वम् अवश्यमनुभवत्येव स एव च शून्यप्रमाता, ततः स्वयं स्फुरणशीलायाः अपरिमितताया: स्फुरणे तस्यैव शुद्धप्रकाशभावः। यद्यपि अत्रापि शुद्धविद्यादितत्त्वारोहणरूपः क्रमोस्त्येव तथापि तत्र तादृशो यत्नो नास्ति इत्येवमुक्तमित्यलम्। **तत्रान्तः**–परमार्थप्रकाशमध्ये ॥ ८ ॥

अथ नवमश्लोकस्यावतरणिकां करोति **"ननु"** इति।

अत्र टीका :–

**अन्तराभासवर्गस्य**–प्रकाशान्तर्गतस्य अहन्तया ग्रहणयोग्यस्य घटाद्याभाससमूहस्य, **बहिराभासनम्**–बहिर्देशत्वेन स्फुरणम्, "इदम्" इति ग्रहणमिति यावत्। **"स्मरणादौ"** इति। आदिशब्देन सङ्कल्पादेर्ग्रहणम्, **आभासभेदः**, अनुभवादिति शेषः, उभयत्राप्यान्तरत्वाविशेषादिति भावः। ननु भास्त्वाभासभेद इत्यत आह **"न च"** इति। **न च न संवेद्यते,** अपि तु संवेद्यत एवेति भावः। कथं संवेद्यत इत्यत आह **"स्फुट"** इति। तत्र सर्वधर्माक्षेपेण "इदम्" इति ग्रहणम् स्फुटताग्रहणम्, तदनाक्षेपेण "तत्" इति ग्रहणम् अस्फुटताग्रहणम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"किन्तु"** इति।

---

1. स्फुटास्फुटतां—K.S.S.

अनुभवज्ञानस्य 'इदं नीलम्' इति अन्तरवभासं[1] बहिराभासयतः स्वा-ऽन्तर्भावाभासो[2] नैसर्गिकः—निसृष्टः स्वातन्त्र्यात् आयातो न तु स्मरणा-देरिव अन्यज्ञानकृतवासनादिबलात्। स्मरणे उत्प्रेक्षणे प्रत्यक्षपृष्ठभाविनि अध्यवसाये च योऽन्तर्नीलाद्यवभासो बाह्यतया अध्यवसायितव्यः[3] नासौ स्वात्मोयः अपि तु पूर्वानुभवसंस्कारजोऽसौ, तत्र संस्कारो नाम अनुभवस्य

अत्र टीका :—

**अन्तरवभासम्**—अन्तःस्थितं नीलाभासम्, "अहम्" इति ग्रहणयोग्यं नीलाभा-समिति यावत्, **बहिराभासयतः**—बाह्ये प्रकाशयतः, बहिरवभासनमनुकृत्याह "**इदम् नीलम् इति**" इति। **स्वान्तर्भावाभासः**—स्वान्तःस्थितभावाभासः। "**नैसर्गिकः**" इति पदं व्याचष्टे "**निसृष्टेः**" इति, तत्रापि प्रकृत्यर्थमाह "**स्वातन्त्र्यात्**" इति, निसर्गो हि स्वभावः स च परमार्थतः स्वस्वातन्त्र्यमेव, स्वरूपभूता निजा शक्तिरेवेति यावत्। ठञ्प्रत्ययार्थमाह "**आयातः**" इति। अत्र व्यतिरेकदृष्टान्तमाह "**न तु**" इति, अन्यस्य-पूर्वानुभूतस्य यज्ज्ञानम्—अनुभवः तेन कृतं यद्वासनादि-संस्कारादि तस्य बलात्, आयात इति पूर्वेण संबन्धः। एतेन पूर्वार्धव्याख्या कृता। एवमत्र योजना। उत्तरार्धे स्थितम् "स" इति इहापि योजनीयम्। किन्तु—पक्षान्तरे, सः—अन्तराभासः, बहिराभासनात्मनि—इदन्ताग्रहण-स्वभावे ज्ञाने निर्विकल्पानुभवे, नैसर्गिकः भवति न तु स्मृत्यादाविव संस्कारकृतो भवति इति। अथोत्तरार्धं व्याचष्टे। "**स्मरणे**" इति "**स्मरण**" पदव्याख्या "**आदि**" शब्दगृहीतस्य "**उत्प्रेक्षणे**" इत्यस्य उल्लेखनमर्थः, "**अध्यवसाये**" इत्यस्य सविकल्पानुभवः, **बाह्यतयाऽध्यवसायितव्यः**—"तत्" इत्य-ध्यवसायविषयः कार्यः[4], **स्वात्मोयः**—नैसर्गिकः। पुनः कीदृशोऽसावित्यत आह

1. अन्तराभासम्—K.S.S.
2. सोऽन्तर्भावाभासः—K.S.S.
3. बाह्यतया अवभासयितव्यः—K.S.S.
4. कार्यः is not found in the manuscript, but some such word is necessary to complete the sense.

कालान्तरेऽपि अनुवर्तमानता, अतोऽसावनुवर्तमानोऽनुभवो यतो नीलाद्याभाससंभिन्नः ततः तत्तादात्म्यापन्नं स्मरणाद्यपि तथा निर्भासते, तत एव स्मरणकालासंभवी आभासः तदनुभवपूर्वकालकलित एवेति स्वयं स्मरणादेर्निर्विषयत्वं गृहीतग्राहित्वं च उद्घोष्यते । एतदेव अस्फुटत्वम्, इति सिद्धोऽनुभवस्मरणादौ आभासभेदः अन्तराभासवर्गस्य बहिराभासनम् अन्याव्यवधानेन[1] स्फुटता, व्यवधानेन तु तात्कालिकत्वाभावात् अस्फुटता इति ॥ ८ ॥

ननु अनुभवज्ञानात् ऐन्द्रियकात् अन्यत् सर्वं ज्ञानं व्यवधानेन बहिराभासनरूपं प्राप्तम् इत्याशङ्क्य प्रविभागमाह :—

---

"**अपि तु**" इति। ननु कथं "**पूर्वानुभवरूपः**" इति पदस्य संस्कारजत्वमर्थः इत्यत आह "**तत्र**" इति। एतत्समर्थयितुं संस्कारपदस्य प्रथममर्थमाह "**संस्कारो नाम**" इति। कालान्तरेऽपि विषयग्रहणकालादुत्तरस्मिन्कालेऽपि, **नीलाद्याभाससंभिन्नः**—ग्रहणकाले नीलादिविषयोपरक्तः, **तत्तादात्म्यापन्नम्**—"तन्नीलम्" इति नीलतादात्म्ययुक्तम्, **तथा**—पूर्वानुभववत्। फलितमाह "**ततः**" इति। तस्य अनुभवस्य यः पूर्वः कालः तेन कलितः—विशिष्टीकृतः एव, न तु इदानीन्तनतायुक्त इत्यर्थः। एतेन पूर्वानुभवरूपत्वं स्मरणस्य सिद्धम् तदेव च संस्कारजत्वमिति भावः। लोकप्रसिद्धं निर्विषयत्वं गृहीतग्राहित्वं चास्यैतदवष्टंभेन सिद्धतया कथयति "**इति**" इति। **इति**, अतः कारणात् इत्यर्थः। अस्यैवास्फुटत्वमपि कथयति "**एतद्**" इति। ननु स्फुटत्वं कीदृगस्ति इत्यपेक्षायामाह "**अन्तराभास**" इति। **अन्याव्यवधानेन**—संस्कारव्यवधानरहितत्वेन। पुनरपि एतत्प्रसङ्गेन अस्फुटत्वं निर्णीयते "**व्यवधानेन**" इति, **व्यवधानेन,** संस्कारकृतेनेत्यर्थः। सर्वधर्माक्षेपित्वेन तदनाक्षेपित्वेन च ग्रहणमत्रैव विश्राम्यतीति न पूर्वापरविरोधः शङ्कनीयः इति ॥ ९ ॥

---

1. बहिराभासनम् अव्यवधानेन––K.S.S.

**स नैसर्गिक एवास्ति विकल्पे स्वैरचारिणि।**
**यथाभिमतसंस्थानाभासनाद्बुद्धिगोचरे ॥ १० ॥**

यः प्रत्यक्षव्यापारम् अनुपजीवन् व्याक्षेपसारतया मनोराज्यसङ्कल्पादिविकल्पः स स्वैरं कृत्वा स्वप्रेरणेन परप्रेरणानैरपेक्ष्येण स्वातन्त्र्येण चरति उदेति व्ययते च, तत्र यो बहिराभासो[1] नीलादेः अन्तराभासमयस्य स

---

अथ दशमस्य श्लोकस्यावतरणिकां करोति "ननु" इति।

अत्र टीका :–

**सर्वम्**–मनोराज्यं भ्रान्तिज्ञानादि च समस्तम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"स नैसर्गिकः"** इति।

अत्र टीका :–

तच्छब्दस्य यच्छब्दाविष्टत्वेन **"विकल्पे"** इति पदस्य व्याख्यां करोति "यः" इति, **प्रत्यक्षव्यापारम्**–प्रत्यक्षप्रमाणव्यापारम्, **अनुपजीवन्**–अनपेक्षमाणः, **व्याक्षेपसारतया**–चित्तव्याकुलतामात्रसारत्वेन, "आदि" शब्देन भ्रान्तिग्रहणम्। **"विकल्पे"** इत्यस्य विशेषणीभूतं **"स्वैरचारिणि"** इति कृदन्तपदं व्याचष्टे विग्रहपूर्वं **"स्वैरम्"** इति। **"स्वैर"** इति व्याचष्टे **"स्वप्रेरण"** इति, मनोराज्यादि हि पुरुषस्य स्वयमेवोत्पद्यते विलीयते च न तु पुरुषप्रेरणामपेक्षते परस्य तु कथैवात्र नास्ति। अत्रापि पर्यायमाह **"स्वातन्त्र्येण"** इति, एतत् स्वातन्त्र्यं च मनोराज्यादेरेव ज्ञेयं न पुरुषस्य अन्यथा विरोधापातात्। **"चरति"** इति पदं व्याचष्टे **"उदेति"** इति, चरणं ह्यत्र उदयव्ययावेव, यत्तु जितचित्तानामत्र स्तोकं स्वातन्त्र्यं वर्तते तदनपेक्ष्यैवमुक्तम्। सामान्यजनमनोराज्यादेरेवात्र वक्तुमिष्टत्वात्। सप्तम्यर्थमाह **"तत्र"** इति, **तत्र**, एवंविधे विकल्पे इत्यर्थः। **"सः"** इत्यस्यार्थमाह "यः" इति। **बहिराभासः**–इदन्तया तत्तया वा आभासः। **अन्तराभासमयस्य**––परमार्थतः स्वान्तर्गतत्वेन "अहम्" इति ग्रहणयोग्यस्य। यच्छब्दाकाङ्क्षां पूरयति **"सः"** इति। **सः**––

---

1. बहिरवभासः––K.S.S.

**नैसर्गिक एव, तथा हि अपरिदृष्टपूर्वमपि श्वेतं दशनशतकलितकरयुगल-युक्तं दन्तिनम् अन्तः प्रमातृभूमौ स्थितं बहिः अन्तःकरणभूमौ स्वच्छ-धीदर्पणात्मिकायां स विकल्पः तात्कालिकमेव भासयति[1] ॥ १० ॥**

---

आभासः, बाह्यवस्तुनिरपेक्षमेव मनोमात्रसंपादित आभास इति यावत्। **नैसर्गिक एव** भवति, संस्कारजस्तु न भवति। कथं नैसर्गिक इत्यपेक्षायां समर्थनं प्रक्रमते **"तथा हि"** इति। **अपरिदृष्टपूर्वम्**—कदाचिदपि पूर्वं न दृष्टम्, न हि वक्ष्यमाणगुणो हस्ती कदापि दृश्यते इति भावः। **श्वेतम्**—सितम्, दशनशत-कलितम्, न तु दन्तद्वयकलितम्, करयोर्युगलम्–द्वयं तेन युक्तम्, नत्वेककरयुक्तम्, **दन्तिनम्**—हस्तिनम्, **प्रमातृभूमौ**—बुद्धिप्रमात्रवच्छिन्नपरप्रमातृरूपपरप्रका-शभित्तौ, **स्थितम्**–शक्तिभावेन तिष्ठत्, अन्यथा निर्गमासंभवात्। **बहिः अन्तःकरणभूमौ**—प्रकाशापेक्षया बाह्यत्वेन स्थितायामन्तःकरणभित्तौ, की-दृश्याम्? स्वच्छा या धीः सैव दर्पणम्-बाह्यप्रतिबिंबयोग्यत्वेन मुकुरः तदेव आत्मा यस्याः तादृश्याम्, **स विकल्पः**—मनोराज्यादिरूपः विकल्पः, **तात्का-लिकमेव,** न त्वन्यकालावस्थायि, **भासयति**। अत्र च बुद्धिप्रमातुः स्वतो बाह्यग्रहणमपेक्ष्य प्रमातृत्वम्, स्वापेक्षयाऽऽन्तरं नभःप्रमातारं प्रति ग्राह्यत्वेन अन्तःकरणत्वमिति न किंचिद्विरुद्धम्। ननु य एवंविधो हस्ती प्रोक्तः सोऽपि संस्का-रज एव, न हि सद्योजातस्य बालस्य कदाप्येवंविधस्य हस्तिनः चित्ते स्फुरणं युक्तम्, पुरुषो हि मनोराज्यादौ स्वयमेव कल्पनया अन्यत्र दृष्टानि विशेषणानि अन्यत्र योजयति, संस्कारवशेन यद्यपि भिन्नतया स्थितानि तानि विशेषणानि एकत्र न दृष्टानि तथापि भिन्नतया व्यस्तत्वेन यत्र तत्र दृष्टान्येव तानि, न चैतावता एषाम् असंस्कारजत्वं वक्तुं युक्तम्, सत्यम्, परमार्थस्त्वयमेव, किन्तु स्थूलबुद्धीन् प्रत्येव-मुक्तम्, ते हि परमार्थविचारे अनधिकृता एव। ननु तर्हि असौ परमार्थः स्वा–

---

1. आभासयति—K.S.S.

[1]नुगदयया स्फुटीकार्य एवेति चेच्छृणु, नैसर्गिकः परामर्शः स एव, यः पूर्वं सद्यो-जातबालादिष्वपि स्तन्याद्यभिलाषप्राणतया दर्शितः। अभिलाषो हि योजनाप्राण एव, योजना चानुसंधानम्, स एव प्रत्यवमर्शः। बहिरपि हि वस्तुविषयोऽभिलाषः तत्सुखकारित्वानुसंधानरूप एव। बालस्य वस्तुविषयोऽभिलाषः तत्सुखकारि-त्वानुसन्धानरूप एव तावद्, बालस्य वस्तुग्रहणं न संभवतीति असौ ओष्ठगतमङ्गुल्यादिकमपि स्तनत्वेन अनुसंदधाति येन तत्रापि चयनं करोति। अतोऽपि परमार्थविचारे स्तन्यमसौ न काङ्क्षति स्तन्यज्ञानाभावात्, परं तृप्ति-मात्रं काङ्क्षमाणः यत्र तत्र भ्रमति, मुखद्वारचांचल्यं तु अस्य स्वभावभतमेव, तृप्त्यर्थं तच्चंचलीकरणेन ज्ञायते अस्य स्वात्मनि शक्तिभावेन स्थितो योजनारूपः परामर्शोऽस्ति। यत्तु तस्य पूर्वजन्मसंबन्धित्वं कथयन्ति तदपि फलतः तदेव, पर-मार्थविचारे हि सर्वेषां पूर्वजन्म सर्वशक्तियुक्तं प्रकाशतत्त्वमेव, स्थावरा अपि हि निजं स्वभावमादाय तत एवोत्तिष्ठन्ति, तेषामप्यन्तः सः प्रत्यवमर्शो विद्यत एव अन्यथा तन्तूनां स्वं प्रति रसाकर्षणासंभवात्। एवं सः सूक्ष्मः प्रत्यवमर्शः सर्वेषु ज्ञानेष्वस्त्येव, तत्र अनुभवे साक्षादेव स्थितः तत्पृष्ठभाविनि विकल्पे पूर्वानुभूत–वस्तुविषयायां स्मृतौ च, स्वैरचारिषु मनोराज्यादिषु तु केवलसंस्कारजत्वभ्रमेण स्थलबुद्धीन् प्रति केवलसंस्कारजत्वमस्याचार्येण साधितम्, न च तद्युक्तम्, यत्र स्थाव-रेष्वपि तस्य सत्ता युक्तत्वेन दर्शिता का तत्र मनोराज्यादिषु तदसत्त्वकल्पना,[2] परमार्थविचारे हि यस्य यस्य सत्ता तस्य तस्य नैसर्गिकः प्रत्यवमर्शो विद्यते एव तदव्यभिचारिचिन्मात्ररूपसन्मात्रेणैव सर्वपूरणात्, अतोऽपि परमार्थविचारे असत्ता-यामपि तेनैव पूरणमसत्त्वभावेनैव पूरणात्, तथा हि भैरवशब्दस्य सर्वभावाभाव-भरणकर्तृत्वमेवार्थः, तदुक्तम् :–

"स एव भैरवो देवो जगद्भरणलक्षणः"

---

1. सा (स्वा) न गदयया–C.
2. The manuscript has अपि after असत्त्वकल्पना, but it seems unnecessary.

अस्माच्च अन्तराभाससंभवसमर्थनप्रसङ्गागतात् आभासभेदविचारात् शास्त्रे यत् प्रयोजनं मुख्यतया अभिसंहितं स्वात्मनि ईश्वरप्रत्यभिज्ञानरूपं तदधिकरणसिद्धान्तनीत्या अनायाससिद्धम् इति दर्शयति :—

**अत एव यथाभीष्टसमुल्लेखावभासनात् ।**
**ज्ञानक्रिये स्फुटे एव सिद्धे सर्वस्य जीवतः ॥ ११ ॥**

यदिदं यथाभीष्टं[1] बहिरसत्त्वात् अननुभूतस्यापि सम्यक् उल्लेखनम्

---

इति। एतेन सर्वेषां जगद्गतानां जडाऽजडानां सतामसतां च प्रत्यवमर्शयुक्तत्वं साधितम्। यस्य च प्रत्यवमर्शयुक्तत्वं तस्य कथाकरणेऽपि योग्यत्वमिति सर्वे भावाः भगवत्स्तुतिपरा एवेति यत् कैश्चिदुच्यते तदपि युक्तमेव। अतोऽपि परमार्थविचारे सर्वे स्वयं स एवेति कः कं स्तूयात्, स्वातन्त्र्यरूपाहंपरामर्शमयत्वमेव सर्वत्र सिद्धमित्यलं स्वप्रतिभामात्रगम्ये वस्तुनि दोषापादकेन वाक्प्रपंचेन ॥ १० ॥

अथैकादशस्य श्लोकस्यावतरणिकां करोति "**अस्माच्च**" इति।

अत्र टीका :–

**शास्त्रे**–अस्मिन् प्रत्यभिज्ञाशास्त्रे, **अभिसंहितम्**–ग्रन्थकारेण मनसि कृतम्, **तत्**–प्रयोजनम्, **अधिकरणसिद्धान्तनीत्या**, यत्रैकाश्रयेणान्यद्वस्तु सिद्ध्यति सोऽधिकरणसिद्धान्तः यथा शब्दानित्यत्वाश्रयणेन तद्गुणत्वसिद्धिः, तस्य या नीतिः तया। **अनायाससिद्धम्**, अयत्नसिद्धमित्यर्थः । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**अत एव**" इति।

अत्र टीका :–

"**अत एव**" इति व्याचष्टे "**यदिदम्**" इति। **यथाभीष्टम्**–बाह्यवस्तुनैरपेक्ष्येण स्वेच्छानुगुणतया, **यत् अननुभूतस्य**–कदाप्यनुभवविषयतामनीतस्य

---

1. यथाभीष्टस्य—K.S.S.

**अवभासनं च विकल्पस्य प्रसङ्गात् दर्शितम् अस्मादेव हेतोः इदमपि सिद्ध्यति—यः कश्चित् कीटो वा ब्रह्मा वा जीवनक्रियाविष्टः तस्य अवभासनरूपा ज्ञानशक्तिः उल्लेखनरूपा च क्रियाशक्तिः नैसर्गिकी, ततः तस्यां भूमौ व्यतिरिक्तेश्वरकल्पितपूर्वसिद्धसृष्ट्युपजीवनसंभावनापि[1] नास्ति,**

सितहस्त्यादेः, **उल्लेखनम्**–मनसि कल्पनम्, **अवभासनञ्च**–विकल्पघनीभावेन पुरः स्फुरणम्। तदुक्तम् :–

"स्वप्नचौराद्युपद्रुताः।
अभूतानपि पश्यन्ति पुरतोऽवस्थितानिव"।

इति। **प्रसङ्गात्**–प्रत्यवमर्शविवेकप्रसङ्गेन। ननु ततः किमित्यत आह "**अस्मादेव**" इति। "**इदम्**" इत्यस्याकाङ्क्षां पूरयति "**यः**" इति। **जीवनक्रियाविष्टः**—जीवन्, सर्वं जङ्गमजातमिति यावत्। **तस्य**–कीटस्य ब्रह्मणो वा, सर्वस्य जीवजातस्य इति यावत्। **नैसर्गिकी**–स्वाभाविकी। ननु किं सा स्थावराणां नास्ति, सत्यम्। तेषामप्यस्फुटाऽसावस्त्येव परन्तु स्फुटत्वापेक्षया एवमुक्तम्। नन्वस्तु ततः किम् इत्यत आह "**ततः**" इति। **ततः**—तस्मात्कारणात्, पुरुषेण **तस्यां भूमौ**–स्वैरविचारिमनोराज्यादिभूमौ, **स्वमैश्वर्यमेव**–निजं सहजं स्वातन्त्र्यमेव, **स्फुटं प्रत्यभिज्ञेयम्**–तत् ईश्वरविषयम् ऐश्वर्यम् ममैवेदमैश्वर्यमिति प्रत्यभिज्ञाविषयीकार्यम्, फलतः स ईश्वरः अयमहमेवेति प्रत्यभिज्ञा कार्या इति भावः। स्वमैश्वर्यं कीदृशम्? "जानाति" "करोति" च इत्येवंरूपम् यत् ज्ञानक्रियास्वातन्त्र्यम्–ज्ञाने क्रियायाञ्च कर्तृत्वं तदेव लक्षणं स्वरूपं यस्य तादृशम्, कुतः स्वमेव प्रत्यभिज्ञेयम्? **इति**, इति कुतः? **तस्यां भूमौ**, व्यतिरिक्तः–स्वात्मनो भिन्नः य ईश्वरः तेन कल्पिता या पूर्वसिद्धा–बाह्यसृष्टिवत् मनोराज्यादेः पूर्वं सिद्धतया स्थिता या सृष्टिः–श्वेतादिगुणयुक्तहस्तिरूपं सर्ज-

1. व्यतिरिक्तेश्वरोपकल्पित—K.S.S.

**इति स्वमैश्वर्यमेव[1] स्फुटं प्रत्यभिज्ञेयं "जानाति" "करोति" चेतिज्ञानक्रियास्वातन्त्र्यलक्षणम्। एकवचनेन सर्वस्य जीवजातस्य वस्तुत एकेश्वररूपतां सूचयति। इति शिवम् ॥ ११ ॥ आदितः ॥ ६३ ॥**

---

नीयं वस्तु, तस्य यदुपजीवनम्-संस्कारद्वारेण अपेक्षणं तस्य संभावनापि–तर्कोण ऊहनमपि, **नास्ति**, स्फुटं स्वयं कल्पितत्वात् बहिः कदाप्यदृष्टत्वात्। "**अपि**" शब्द सद्भावस्य तु का कथेति द्योतयति, "तस्यां भूमौ" इत्यस्य पदद्वयस्य काकाक्षिवदुभयत्र योजनम्। अयमुपदेशोऽपि प्रबुद्धं प्रत्येव अप्रबुद्धस्य अनधिकारित्वात्, सुप्रबुद्धस्य तु सर्वदा सर्वमात्मत्वेन पश्यतः तदपेक्षाया असंभवात्, न चाप्रबुद्धैरपि एतच्छ्रुत्वा सङ्कल्पविवशतया स्फुरिते मनोराज्यादावयं भ्रमः कार्यः सर्वथा जितसङ्कल्पानां कदापि देहस्वभाववशेनास्फुरितमनोराज्यानां[2] प्रबुद्धानां भातात्मतत्त्वानां व्युत्थाने तत्प्रत्यभिज्ञाकरणे तावदसमर्थानामर्थे अस्योपदेशस्य स्थितत्वात्। कुर्वन्तु वा का नो हानिः इत्यलम्। "**जीवतः**" इत्यत्र स्थितस्यैकवचनस्याभिप्रायं वक्तुमाह "**एकवचन**" इति। **सूचयति**–सूचनया कथयति न तु साक्षात्, सूचनं च

"द्व्येकयोर्द्विवचनैकवचने"

इति सूत्रसामर्थ्यादिति भावः। ननु तर्हि सर्वपदं किमर्थं स्थापितम्? तद् विस्फुटमेव कथयति, भिन्नानाम् एकत्र बुद्ध्या मेलनं हि सर्वपदप्रवृत्तिनिमित्तम्, सत्यम्, भेदग्रस्तबुद्धीन् प्रत्येवमुक्तम्, ते हि "जीवतः" इति श्रुत्वा कमप्येकं जीवं प्रत्येतदुक्तमिति जानीयुः, तानेव च प्रति ग्रन्थकरणमिति न किंचिद्विरुद्धम्। "**इति**" शब्द आन्हिकसमाप्तौ, "**शिवम्**" इति पदं मङ्गलवाचकं परतत्त्वसूचनपरञ्चेति शिवम्॥ ११॥

---

1. स्वमेवैश्वर्यम्—K.S.S.
2. देहस्वभाववशेन स्फुरित—C.

**इति श्रीमदाचार्याभिनवगुप्तविरचितायामीश्वरप्रत्यभिज्ञा-**
**सूत्रविमर्शिन्यां प्रथमे ज्ञानाधिकारे ज्ञानशक्तिनिरूपणं**
**नाम षष्ठमाह्निकम् ॥ ६ ॥**

---

इति श्रीभास्करकण्ठविरचितायां श्रीप्रत्यभिज्ञाविमर्शिनीटीकायां भास्कर्याख्यायां ज्ञानाधिकारे षष्ठमान्हिकं समाप्तम् ॥ ६ ॥

## अथ ज्ञानाधिकारे एकाश्रयनिरूपणाख्यं सप्तममाह्निकमारभ्यते ।

अनन्तशक्तिरत्नानां यदेकाश्रयसंश्रयात् ।

विचित्रचन्द्रिकोल्लाससंसिद्धिस्तं स्तुमः शिवम् ॥

---

अथ सप्तमाह्निकप्रारम्भः ।

यदेकाश्रययोगेन नानाशक्तिचयः स्फुटम् ।

शक्योद्भावनसामर्थ्यं लभते तं स्तुमः शिवम् ॥

अथ ज्ञानाधिकारे सप्तमस्याह्निकस्य निर्विघ्नव्याख्यासमाप्तये प्रचयगमनाय च तत्त्वानुस्मरणरूपं मङ्गलं शिष्यशिक्षायै समस्ताह्निकतात्पर्यसूचकश्लोकेनोपनिबध्नाति **"अनन्त"** इति ।

वयं **तम्**–यच्छब्दाविष्टे पूर्ववाक्ये प्रोक्तम्, **शिवम्**—शक्तिपिण्डात्मकं प्रकाशपरमार्थं स्वात्मदेवतारूपं शिवतत्त्वम्, **स्तुमः**—स्तुतिद्वारेण परामृशामः, तं कम् ? अनन्तानि-अपरिच्छिन्नानि यानि शक्तिरत्नानि–उत्तमवस्तुत्वेन रत्नरूपाः ज्ञानस्मृत्यादिशक्तिसमूहाः तेषाम्, **"यदेकाश्रयसंश्रयात्"** यश्चासौ एक आश्रयः-शक्तिमत्त्वेन असाधारणं स्थानम् तस्य संश्रयात्-अवष्टंभेन, हेतौ इयं पंचमी । विचित्रा ये चन्द्रिकोल्लासाः–स्वविषयद्योतकाः प्रमादिरूपाः चन्द्रिकास्फूर्तयः तेषां संसिद्धिर्भवति, ज्ञानादयः शक्तयो हि परप्रकाशे स्थिताः तत एव बलं लब्ध्वा स्वविषयद्योतनं कुर्वन्ति । यद्यपि

"शक्तयोऽस्य जगत् कृत्स्नं शक्तिमांस्तु महेश्वरः।"

इति नीत्या सर्वे पदार्थाः शक्तिरूपा एव, तथापि प्रस्तावापेक्षया ज्ञानादिशक्तीना–मेवेह ग्रहणं कृतम्, यतो ज्ञानादिशक्तिभिरेवात्मसिद्धिः तावन्मात्रमेव च ईश्वरत्वेन प्रत्यभिज्ञेयत्वेन इहेष्टम्, तन्मात्रपरत्वादस्य शास्त्रस्य। एतेन ज्ञानादिशक्तीना-मेकाधारस्य निर्णयोऽत्राह्निके क्रियते इति सूचितम् ।

**एवं स्मृत्यादिशक्तीनां वितत्य स्वरूपमियता दर्शितम्, यत्तु अत्र प्रमातुरपि स्वरूपम् उन्मीलितम् तत्तासामेव शक्तित्वं समर्थयितुम्, न हि स्वतन्त्रं शक्तिस्वरूपं भवितुमर्हति इति । अधुना तु तासां शक्तीनाम् एक आश्रयः, स च तच्छक्तिसंयोजनवियोजनादिस्वाच्छन्द्ययोगात् महेश्वरः न तु जडस्वरूपवह्न्यादिवत् दाहकपाचकादिशक्त्याश्रयमात्रम् इति यत् उभयम् उपक्षिप्तम्**

**'न चेदन्तःकृतानन्तविश्वरूपः··· ।'**

**इत्यत्र सूत्रे, तत् वितत्य निर्णेतव्यम् । तत्र एकमाश्रयं निर्णेतुम्**

**'या चैषा प्रतिभा······························ ।'**

**इत्यादि**

**'························· व्यवहारोऽनुभूयते ॥'**

---

एवं मङ्गलं संपाद्य समस्ताह्निकतात्पर्यं समस्तव्यस्तत्वाभ्यां कथयति **"एवम्"** इति ।

अत्र टीका :–

ननु प्रमातुरपि निर्णयो वर्तते एव तत्कथमुक्तं "शक्तीनां स्वरूपम् दर्शितम्" इत्यत आह **"यत्तु अत्र"** इति । **उन्मीलितम्**—प्रकटीकृतम्, न तु निर्णीतम्, **समर्थयितम्**–साधयितुम् । कुत इत्यपेक्षायामाह **"न ह"** इति । नन्विदानीं किं कथयति इत्यत आह **"अधुना"** इति । तासां शक्तीनां यत् संयोजन–वियोजनादि, आदिशब्देन स्वस्मिन् लयीकरणम्, तत्र यत् स्वाच्छन्द्यम्-स्वातन्त्र्यम् तस्य योगा त, **उभयम्**—शक्त्याश्रयस्यैकत्वं महेश्वरत्वञ्च, **उपक्षिप्तम्**—समर्पितम्, कथितमिति यावत् । कुत्रेत्यपेक्षायामाह **"न चेत्"** इति । **तत्**–युगलम्, **निर्णतव्यम्**—अवश्यं निर्णेयम्, अन्यथा महेश्वरत्वनिर्णयासंभवा-दिति भावः । **तत्र**–तस्य युगलस्य निर्णेतव्यत्वे सति, **एकम् आश्रयम्**—ज्ञानादि-शक्तीनां परप्रमातृरूपमहेश्वररूपमेकं स्थानम् । एवं सामस्त्येनाभिप्रायमुक्त्वा

इत्यन्तं चतुर्दशभिः श्लोकैः आह्निकं प्रस्तूयते। तत्र श्लोकेन एक आश्रयः स्वरूपत उपक्षिप्यते। ततोऽपि द्वयेन व्यवहारः सर्वः सति एकस्मिन् आश्रये युज्यते न असतीति अन्वयव्यतिरेकात्मा युक्तिरुच्यते। ततो व्यवहारस्वरूपं कार्यकारणभावतः, स्मरणतः, सत्यासत्यप्रविभागतश्च इति सङ्क्षिप्य[1] श्लोकेन श्लोकेन श्लोकाष्टकेन च प्रतिपाद्यते। ततः श्लोकेन सर्वोऽर्थो नियम्यते इत्याह्निकार्थसङ्क्षेपः।

अथ श्लोकार्थो व्याख्यायते। यदुक्तम् 'सर्वस्य सिद्धे ज्ञानक्रिये जीवतः' इति तत् कथम्? यावता ज्ञानादिव्यतिरिक्तः कोऽसौ अन्यो यस्य ते स्याताम्, काणाददिशा हि दूषितः तदाश्रयः

---

व्यस्तत्वेनापि कथयति "**तत्र**" इति। **तत्र,** श्लोकचतुर्दशकमध्य इत्यर्थः। **स्वरूपतः**-स्वरूपमात्रेण, न तु समस्तधर्माक्षेपेणेत्यर्थः, **उपक्षिप्यते**—कथ्यते, **अन्वयव्यतिरेकात्मा**—अन्वयव्यतिरेकरूपः, **श्लोकेन श्लोकेन श्लोकाष्टकेन च,** दशभिः श्लोकैरित्यर्थः। तत्र एकेन कार्यकारणभावनिर्णयः, पुनरेकेन स्मृतिनिर्णयः, अष्टकेन सत्यासत्यप्रविभागनिर्णय इति क्रमः। **निगम्यते**—निगमनविषयतां नीयते। व्यस्तत्वकथनमुपसंहरति "**इति**" इति। श्लोकार्थकथनं प्रतिजानीते "**अथ**" इति। तत्र प्रथमश्लोकस्यावतरणिकां करोति "**यदुक्तम्**" इति।

अत्र टीका :–

**तत् कथम्,** तन्न संभवतीत्यर्थः, कुत इत्यपेक्षायामाह "**यावता**" इति। **यावता,** यस्मात् कारणादित्यर्थः। **ते**–ज्ञानक्रिये। ननु पूर्वं ज्ञानादिगुणाश्रयस्ततो व्यतिरिक्तः साधित एवेत्यत आह "**काणाद**" इति। **स्वदर्शनदृशा**–शैवमतदृष्ट्या, **तमेकम्**–आश्रयम्। **स्वरूपतः**–स्वरूपमात्रेण, **उपन्यस्यति**— समर्पयति, कथयतीति यावत्। एवम् अवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**या चैषा**" इति।

---

1. सङ्क्षिप्य श्लोकेन श्लोकाष्टकेन—K.S.S.

'ततो भिन्नेषु धर्मेषु ......................... ।'

इत्यादिना, तत् एतत् आशङ्क्य स्वदर्शनदृशा[1] तमेकं स्वरूपत उपन्यस्यति[2]:—

**या चैषा प्रतिभा तत्तत्पदार्थक्रमरूषिता ।**

**अक्रमानन्तचिद्रूपः प्रमाता स महेश्वरः ॥ १ ॥**

'प्रतिभाति घटः' इति यद्यपि विषयोपश्लिष्टमेव प्रतिभानं भाति तथापि न तद्विषयस्य स्वकं वपुः, अपि तु संवेदनमेव तत् तथा चकास्ति 'मां प्रति भाति' इति प्रमातृलग्नत्वात् । तथा च वेदः—

अत्र टीका :–

**"अक्रमा"** इत्यन्तं श्लोकखण्डं व्याख्यातुं प्रक्रियां करोति **"प्रतिभाति"** इति । **विषयोपश्लिष्टमेव**—कर्तृभूतघटादिसंबद्धमेव, **प्रतिभानम्**— "प्रतिभाति" इतिक्रियास्वरूपम्, **भाति**-प्रमातॄन् प्रति स्फुरति, **तत्**–प्रतिभानम्, **विषयस्य**—घटस्य, **स्वकं वपुः**—अर्थात् स्वं[3] निजं स्वरूपम्, पुनस्तत् किम् इत्यत आह **"अपि तु"** इति। **संवेदनमेव**–प्रमातृनिष्ठा घटविषया संवेदनाख्या क्रियैव, **तत्**—प्रतिभानम्, **तथा**—विषयोपश्लेषेण, **चकास्ति**—स्फुरति। अत्र हेतुमाह **"मां प्रति"** इति । **प्रमातृलग्नत्वात्**–आपाततः कर्तृभूतघटनिष्ठत्वभागेऽपि परमार्थतः "मां प्रति भाति" इति एवं प्रमातुरेव तद्भित्तित्वात् । अयमत्र भावः । प्रमाता प्रथमम् अर्थितादिवशेन स्वस्य घटसंवेदने प्रोद्योगं करोति अन्यथा घटप्रस्तावस्यैवायोग्यत्वात्, तत्र तस्य यदि कोपि घटवार्त्तां पृच्छति तदां तं प्रति कथयति "घटः प्रतिभाति" इति, पुनः पृष्टः सन् "कं प्रति भाति" इति पुनरसौ कथयति "मां प्रति" इति । "प्रति" शब्दो हि घटस्य भानं प्रति कर्तृत्व-निवारकः प्रमातरि तद्योग्यतासाधकश्च, अन्यथा "भाति" इति ब्रूयात् "मां प्रति"

1. स्वदर्शनदिशा—K.S.S.
2. उपक्षिपति—K.S.S.
3. अर्थाख्यं निजम्—C.

इति प्रयोगरहिते "भाति" इति कथने तु प्रमाता भित्तिभूतं स्वात्मानं विस्मार्य घटमेव उद्धुरीकरोति तदर्थितातिशयेन विवशीकृतत्वात्, न च तावता घटस्यैव कर्तृत्वं वक्तुमुचितम् स्वात्मनो वा उदासीनत्वम्, जडस्य घटस्य कर्तृत्वायोगात् स्वात्मन एव सर्वत्र स्वतन्त्रतायोगेन सर्वकर्तृत्वयोगात्, यदुक्तम् "स्वतन्त्रः कर्ता" इति । ततश्च स्फुटमेव "प्रतिभाति[१] घटः" इत्यत्र भानस्य "प्रति" उपसर्ग-सूचितं प्रमातृलग्नत्वं प्रमातृलग्नत्वे च बाह्यतानुपपत्तिः, तदनुपपत्तौ च विषयत्वानुपपत्तिरेव इति । अत्र श्रुतिं प्रमाणीकर्तुमाह **"तथा च"** इति, वेदवाक्यमेव कथयति **"तमेव[२]"** इति । इयं श्रुतिश्चैवम् ।

"न तत्र सूर्यो भाति न चन्द्रतारका[३]: नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥"

इति । अत्रायमर्थः, तत्र–तस्मिन् परप्रकाशे, तत्सन्निधौ इति यावत्,सूर्यः–बाह्यप्रकाशश्रेष्ठः आदित्यः, न भाति–स्वप्राधान्येन भानं प्रति कर्तृत्वं न भजति, चिदाख्यं तं प्रति भानेन तल्लग्नत्वेन भानात्, न हि प्रमातारं विना घटादिवत् सूर्योऽपि सिद्धिं लभते, तत्सन्निधौ भानं तु परमार्थतः तन्निष्ठमेव, शिलादौ पादन्यासो हि परमार्थतः भुवि एव । तदुक्तम्:––

"कथमन्यथा भवन्ति भुविदत्तपादा[४]नि नृणाम्"

---

1. ततश्च स्फुटमेव प्रतिभाति इति घटः इत्यत्र––C. इति coming between प्रतिभाति and घटः makes the sentence a little obscure. Without it the text yields a good meaning. Hence it has been omitted.
2. Bhāskara's text of the Vimarśinī seems to have had only the latter half of the verse beginning with तमेव, as indicated by the प्रतीक occurring in the commentary.
3. The usual reading is चन्द्रतारकम् ।
4. The reading as given in the manuscript is apparently wrong. The metre requires one syllable less.

**'तमेव भान्तमनु भाति सर्वं**

**तस्य भासा सर्वमिदं विभाति।'**

**इति। अत्रा अविरतस्फुरणत्वं कर्मप्रवचनीयेन तदीयस्वातन्त्र्योपकल्पित-निर्माणक्रियाजनितो वेद्यवेदकभावरूपो लक्षणात्मा संबन्धो द्योतितः,**

---

इति। "कुतोऽयमग्निः" इति, अग्नेर्भाने कथैव नास्तीति भावः। प्रकाशव्यतिरिक्तानां वस्तूनामभानं तु दण्डापूपिकान्यायेन स्फुटतरमेवेति न गृहीतम्, विद्युदनन्तरं सूर्याभानकथनस्य योग्यत्वेऽपि प्रथमं सूर्याभानकथनं तस्य तत्समीपे विद्युदादेरपि अतिन्यूनत्वसूचनपरम्, अन्यथा तु श्रेष्ठस्य सूर्यस्याभाने कस्तद्भानप्रसङ्गः, तद-प्रसक्तौ कस्तन्निषेधः। ननु तर्हि कथमेते भान्ति इत्यत आह **"तमेव"** इति। **भान्तम्**––स्वप्रकाशत्वेन "अहम्" इति सततमेव स्फुरन्तम्, **तमेवानु**––तं परप्रमातृरूपं प्रकाशं प्रति, **सर्वम्**––सूर्यादिप्रकाशजातम्, **भाति**,[1] अन्यथा "अहं सूर्यं पश्यामि" इत्यादिप्रयोगासंभवात्। "भाति" इति प्रयोगस्तु अर्थि-तादिवशेन तदुद्धुरीकरणप्रमातृप्रयोजनत्वेन, अन्यथा असिद्धत्वात् इति भावः। फलितमाह **"तस्य"** इति, अतः इति शेषः। अतः कारणात् **इदं सर्वम्**—इदन्ताग्राह्यं सूर्यादिरूपं बाह्यं प्रकाशजातम्, **तस्य भासा**— तदाश्रयेण एतद्विषयेण च प्रकाशेन, **विभाति**, स्वतन्त्रतया विशिष्टं भानं प्रति कर्तृत्वमिव भजति इत्यर्थः, यथा सूर्यादिभासा घटादिकं सर्वं वस्तुजातमिति भावः। अत्र स्वयमपि लेशतोऽभिप्रायकथनं करोति **"अत्रा"** इति। **अत्रा**—"भान्तम्" इत्यत्र स्थितेन शतृप्रत्ययेन, **अविरतस्फुरणत्वं** द्योतितम् इति संबन्धः, अन्यथा "भातम्" इति ब्रूयात् इति भावः। **"अनु"** शब्दस्याभिप्रायमाह **"कर्म"** इति। **कर्मप्रवचनीयेन**—लक्षणक्रियावाचकेन "अनु" शब्देन, **लक्षणात्मा**–"वृक्षमनु द्योतते विद्युत्" इतिवत् लक्षणक्रियारूपः, **संबन्धो द्योतितः**, यथा हि वृक्षेण विद्युतो द्योतनं लक्ष्यते–प्रेक्षकान् प्रति दर्श्यते, तथा परप्रमातृभानेन सूर्यादिभानं प्रमातॄन् प्रति लक्ष्यते। ननु तत्र वृक्षः स्फुटमेव दृश्यते तेन च युक्तमेव विद्युद्

---

1. प्रयोगस्य तु––C.

**केवलं विषयोल्लेखनबलात् बहिः क्रमावभासः समर्थितः, स स**

---

दर्शनम्, अत्र तु परप्रमातुर्भानं न स्फुटम् इति कथं तेन एतल्लक्षणम् इति चेत् स एव कः? देहादिः इति चेत् अहो परोपदेशाधिकारित्वम्। परप्रमाता इति चेत्, सः भातो न वा? न चेत्, तत् कथम् "मया" इति प्रयोगः? अर्थदर्शनानन्तर–मेव तद्वाचकशब्दस्फूर्तियोगात्, भासते चेत्, अद्यैव सदा वा? अद्यैव इति चेत् तर्हि अद्यैव "अहम्" इति प्रयोगः कृतः इति पूर्वस्मृतिर्न युक्ता "ह्यो मयेदं भुक्तम्" इति। अद्य तावद् भातः इतः परन्तु न जानामि भास्यति न वा इति चेत्, सत्यम्, परदेहावच्छिन्नो योहंप्रत्ययः स किं त्वदहमः भिन्नः अभिन्नो वा, यदि भिन्नः तर्हि देहप्रमातृत्वाभिमानस्तथैव स्थितः इत्यत उपदेशानधिकारिता तथैव, यदि तु अभिन्नः तर्हि आकारकृतस्य विच्छेदस्य अनङ्गीकारे का देशकालकृतं विच्छेदं प्रति शङ्का, इति परप्रमातुः सदा भानं स्फुटतरमेव तेनैव च सूर्यादिभानं लक्ष्यते इति न काप्यनुपपत्तिः। लक्षणात्मा संबन्धः कीदृशः इत्यपेक्षायां विशेषणान्याह **"तदीय"** इति। तदीयम्–परप्रमातृसंबन्धि यत् स्वातन्त्र्यम्–सर्वकार्येषु अनन्य-मुखप्रेक्षित्वम्, तेन उपकल्पिता–तद्भाविता या निर्माणक्रिया, तया जनितः, अन्यथा स्वातन्त्र्यायोगात्, तथा, **वेद्यवेदकभावरूपः**—परमार्थतः घटगतवे-द्यत्वपरप्रमातृगतवेदकत्वतदुभयविषयविषयीभावकारणरूपः, आपाततस्तु घट-देहादिनिष्ठवेद्यवेदकभावरूपः। ननु यदि परप्रमातुः संवेदनमेव घटादिभानं तर्हि तत् संवेदनरूपमेव, न हि घटादेस्तद्व्यतिरेकेण कापि सिद्धिः, तथा च परप्रमातुः एकत्वेन संवेदनस्याप्येकत्वमेवेति घटादेरपि तद्वशेन एकत्वमेवायातम् इति क्रमस्य तिलाञ्जलिरेव देय इत्यत आह **"केवलम्"** इति। **केवलम्**—परम्, विष-याणाम्–वेद्यवस्तूनां यत् उल्लेखनम्–बहिरसत्त्वेऽपि क्रीडार्थं स्वातन्त्र्येण विमर्श-नम्, तस्य बलात्–वशेन। **बहिः क्रमावभासः**–भिन्नभिन्नपदार्थविषयं क्रमाव-भासनम्, **समर्थितः**—आपातेन तावत् समर्थनविषयीकृतः, अन्यथा उपदेष्टृ प–देश्यभावाद्यनुपपत्तेः शास्त्रकरणस्याप्यसंभवप्रसङ्गात् इति भावः। उक्त-प्रक्रियावष्टंभेन **"तत्तत्पदार्थ"** इति समस्तं पदं व्याचष्टे विगृह्णाति च **स सः"** इति। **"तत्तद्"** इत्येतयोः प्रथमैकवचनान्तं रूपम् **"स सः"** इति,

[1]क्रमयौगपद्यादिविचित्ररूपो यः पदार्थानां वक्ष्यमाणेश्वरस्वातन्त्र्यरूपदेशकालशक्त्युपकल्पितः क्रमः देशकालपरिपाटी, तेन रूषिता प्रतिबिम्बकल्पतया उपरक्ता, या प्रतिभा उक्ता

'केवलं भिन्नसंवेद्य ............... ..........।'

इत्यादिना। एषा इति च सर्वस्य स्वप्रकाशरूपा, परमार्थतश्च अन्तर्मुखत्वेन प्रकाशमात्रपरमार्थतया भेदाभावात् अक्रमा, सैव महेश्वरः,

अनयोर्व्याख्यां करोति "क्रम" इति, आदिशब्देन दूरादूरादिग्रहणम्। वक्ष्यमाणे-क्रियाधिकारे कथयिष्यमाणे, ईश्वरस्वातन्त्र्यरूपे–परमेश्वरसंबन्धिमूर्तिवैचित्र्य–क्रियावैचित्र्यग्रहणाख्यस्वतन्त्रभावस्वरूपे ये देशकालशक्ती ताभ्याम् उपकल्पितः–स्वावच्छिन्नतावभासनेन संपादितः। "क्रम" इति पदं व्याचष्टे "देश" इति। देशकालपरिपाटी—"एतद्देशस्थोयम् एतत्कालगतश्च" इत्यादिरूपः सन्निवेशः, तेन–देशकालपरिपाटीरूपेण क्रमेण। "रूषिता" इति पदं व्याचष्टे "प्रतिबिम्ब" इति। प्रतिबिंबकल्पतया—प्रतिबिंबसदृशत्वेन, उपरक्ता—स्फटिकादीव नीलादिना उपरागविषयतां नीता, या प्रतिभा, "उक्ता" इत्यस्य पदस्य शेषत्वेन अध्याहारः। केनोक्ता इत्यपेक्षायामाह "केवलम्" इति, अनेन श्लोकेन इत्यर्थः। "एषा" इति व्याचष्टे "सर्वस्य" इति। सर्वस्य—समस्तचेतनवर्गस्य, स्वप्रकाशरूपा, स्वप्रकाशत्वेन स्वसंवेदनसिद्धेत्यर्थः। "अक्रम" इति पदं व्याचष्टे "परमार्थतश्च" इति। आपाततः देशकालोपरागेण सक्रमत्वेऽपि परमार्थतः–सत्यदृष्ट्या, "च" शब्दः "तु" शब्दार्थे, परमार्थतस्तु, अन्तर्मुखत्वेन—"अहंजानामि" इति प्रमातृलग्नत्वेन, स्फुरणात्, तद्वत् "अहम्" इति ग्रहणयोग्यत्वेन प्रकाशमात्रपरमार्थतया—शुद्धप्रकाशसारत्वेन, भेदाभावात्—देशकालावच्छिन्नताकृतभेदासंभवात्, अक्रमा—देशकालपरिपाट्या अस्पृष्टा, न हि नीलादिभिरुपरक्तमपि निर्मलं स्फटिकादि तत्स्पर्शभाग्

1. स सक्रमयौगपद्य—K.S.S.

**अविद्यमानोऽन्तः परिच्छेदो देशतः कालतः स्वरूपतश्च यस्याः चितः संविदः तदेव रूपं यस्य इति, अत एव बहिर्मुखप्रकाशात्मकविज्ञानस्व-भावस्य प्रमाणवर्गस्य योऽन्तः प्रत्याभासम् 'इदम् इदम्' इति अनन्त[1]—**

---

भवति इति का कथा अतिनिर्मलायाः प्रतिभायाः देशकालकृतस्पर्शे इति भावः। अथ **"अनन्तचिद्रूपः"** इत्यादि श्लोकखण्डं व्याचष्टे **"सैव"** इति। सर्वनाम्नां परामर्शनीयपरामर्शकलिङ्गसहत्वेन सूत्रे पुल्लिंगतया निर्दिष्टस्यापि तच्छब्दस्य इह स्त्रीलिंगेन निर्देशो न अयुक्तः, **सैव**—प्रोक्तस्वरूपा प्रतिभैव, **महेश्वरः,** एवकारो मूढशङ्कितस्य बाह्यस्य देवविशेषस्य महेश्वरत्वव्यावर्तनपरः । कीदृशः महेश्वरः इत्यपेक्षायां महेश्वरविशेषणानि सूत्रोक्तानि योजयति **"अविद्यमानः"** इति। **"अनन्त"** इत्यादिसमस्तपदं व्याचष्टे विगृह्णाति च **"अविद्यमानः"** इति। **"अन्त"**[2] पदं व्याचष्टे **"परिच्छेदः"** इति, **तदेव**—सा चिदेव, "इति" शब्देन विगृहीतपदस्य पुनः समस्तत्वेन आक्षेपः । अस्य समस्तस्य पदस्य "प्रमाता" इति पदं प्रति हेतुत्वं द्योतयितुमाह **"अत एव"** इति, यतः अनन्तरूपः ततः कारणादित्यर्थः। **"प्रमाता"** इति विशेषणं व्याचष्टे **"बहिर्मुख"** इति। बहिर्मुखम्—"अयं घटः" इति इदन्तया ग्राहकम्, प्रकाशात्मकम्—भासकत्वेन परप्रकाशं बिन्दुरूपं यत् विज्ञानं तदेव स्वभावः—स्वरूपं यस्य तादृशस्य, **प्रमाणवर्गस्य यः अन्तः**—सारभूतः, **प्रत्याभासम्**—समस्तेषु अनन्तेषु पदार्थरूपेषु आभासेषु, **"इदम् इदम्" इति**—अनेन प्रकारेण, **अनन्तकल्पः**—परमार्थतः शान्तत्वेऽपि मितप्रमातॄन् प्रति अनन्त इव भासमानः, **विकल्पमयः**—प्रतियोगिव्यवच्छेदलब्धसत्ताकत्वेन विकल्परूपः, **विमर्शात्मा**—संस्कारजस्मृति—विषयशब्दनरूपः, **प्रमासमूहः**—फलभूतः प्रमावर्गः, **तत्र**—तस्मिन् प्रमासमूहे, यत् संयोजनवियोजनविश्रमणादि—एकविषयतया स्थापनम्, भिन्नविषयीकरणम्, "अहम्" इति परामर्शेन स्वभित्तौ आरोहणम्, आदिशब्देन अपोहन-

---

1. इति अनन्तविकल्पमयः—K.S.S.
2. अनन्तपदं व्याचष्टे—C.

**कल्पः विकल्पमयो विमर्शात्मा प्रमासमूहः, तत्र संयोजनवियोजनविश्रम[1]-णादिरूपानेकप्रकारस्वातन्त्र्यपरिपूर्णः शुद्धाहंप्रत्यवमर्शमयः[2] प्रमाता स भण्यते, अतश्च बहिर्घटप्रकाशः 'अयं घटः' इति अन्तर्विकल्पः स्वीकृत-**

ग्रहणम्, तद्रूपञ्च तत् अनेकप्रकारं स्वातन्त्र्यं तेन पूर्णः, तथापि शुद्धः— विकल्पामिश्रः यः "अहम्" प्रत्यवमर्शः तस्य विकारः, तत्स्वरूपः इति यावत्, **प्रमाता**। व्याख्यातस्य प्रमातुः "**सः**" इति पुनः परामर्शः, **भण्यते**—कथ्यते, "भण्यते" इति शेषत्वेन अध्याहृतम्, एतेन "प्रमातृ" शब्दस्य कर्तृ तृजन्तता सूचिता।

अत्रैवं योजना, आचार्येण कर्त्रा यैषा प्रतिभा पूर्वम् उक्ता, स महेश्वरः प्रमाता— महेश्वररूपः प्रमाता, परमात्मेति यावत्, भण्यते इति विशेषेण योजना तु स्फुटैवति नायस्तम्, तदुक्तम् :—

शब्दस्पर्शादयो वेद्याः वैचित्र्याज्जागरे पृथक्।
ततो विविक्ता तत्संविदेकरूपा न भिद्यते॥

इत्यारभ्य

अयमात्मा परानन्दः परप्रेमास्पदं यतः।

इत्यन्तम्, तथा :—

एवं स चित् परानन्द आत्मायुश्च तथाविधम्।
परं ब्रम्ह तयोश्चैक्यं श्रुत्यन्तेषूपदिश्यते॥

इति। परन्तु वेदान्तेषु निष्कृष्टस्य संवित्तत्त्वस्य परमेश्वरत्वम् इह तु रूषितस्यापि इत्यास्ताम्।

एतेन फलितं सिद्धान्तं कथयति "**अतश्च**" इति, यत एतत् श्लोकोक्तं वस्तु भवति ततः कारणात्, **इतीयत्**—इत्येतन्मात्रम् यत् **प्रकाशस्य**—शुद्धप्रकाशस्य **पूर्णं स्वरूपं** भवति, एतावन्मात्रस्यैव परप्रकाशरूपप्रमातृत्वसाधनात् इति भावः।

1. विश्रमणाद्यनेक—K.S.S.
2. शुद्धः अहंप्रत्यवमर्शमयः—K.S.S.

पूर्वरूपः 'अहम्' इति तदुभयविश्रान्तिस्थानम्, इतीयत्[1] पूर्णं प्रकाशस्य स्वरूपम् ॥ १ ॥

अत्रैव उपपत्तिं प्रदर्शयितुमन्वयं तावदाह:—

**तत्तद्विभिन्नसंवित्तिमुखैरेकप्रमातरि ।**
**प्रतितिष्ठत्सु भावेषु ज्ञातेयमुपपद्यते ॥ २ ॥**

---

इतीयत् किम् ? **बहिः**–बाह्यदेशे "अयं घटः" इति, **घटप्रकाशः**– घटदर्शनम् । तथा **अन्तः**–हृद्देशे, **स्वीकृतपूर्वरूपः**— गृहीतप्राक्कालीन– घटस्वरूपः, **विकल्पः**, तथा **"अहम्" इति,** तदुभयस्य-घटप्रकाशघटविकल्परूप– युगलकस्य, विश्रान्तिस्थानम्–लयस्थानम्। एतेन "घटमहं पश्यामि" इति लौकिकव्यवहारस्यैव पूर्णप्रकाशभासकत्वं द्योतितम् । एतच्च देहादिप्रमातृभा-वान्निर्गतानां प्राप्तपरप्रकाशगन्धानां देहस्थितिं तावत् अवश्याश्रयणीयशुद्धव्यवहार-काले परप्रकाशस्पर्शसमर्थानां[2] प्रबुद्धानां वर्गं प्रत्येवोक्तम्, अप्रबुद्धानां देहादिप्रमातृ–भावनिश्चितानां सर्वदा तन्मयानां सुप्रबुद्धानां च अत्र अनधिकारात् । देहादिप्रमातृभावान्निर्गमे च स्वमन एव साक्षितया ग्राह्यम्, अन्यथा स्ववंचकत्वा-पत्तेः इत्यलम् ॥ १ ॥

अथ द्वितीयस्य श्लोकस्यावतरणिकां करोति **"अत्रैव"** इति ।

अत्र टीका :–

**अत्रैव**–प्रतिभायाः प्रमातृत्वे एव, **उपपत्तिम्**–युक्तिम्, **अन्वयम्**–योजना-मात्रम्, **"तावत्"** इति, तदनन्तरं स्फुटतया उपपत्तिं कथयिष्याम इति भावः। एवम् अवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"तत्तत्"** इति।

---

1. इति–इयत्—K.S.S.
2. परप्रकाशस्पर्शासमर्थानाम्—C.

**"संविन्निष्ठा हि विषयव्यवस्थितयः" इति यत् उच्यते तत् न भिन्नरूप-प्रमात्मकसंविन्मात्रविश्रान्त्या सिद्ध्यति अपि तु तास्ता विभिन्नाः संविदो निश्चयरूपाः प्रमात्मानो याः तानि एव मुखानि द्वाराणि उपाया मार्गाः तैः मुखैः नदीस्रोतःस्थानीयैः यदि अमी भावा नीलसुखादय उह्यमाना एकस्मिन् 'अहम्' इति प्रमातृरूपे महासंवित्समुद्रे प्रतितिष्ठन्ति आभि-**

---

अत्र टीका :–

श्लोकं व्याख्यातुं प्रक्रियां करोति **"संवित्"** इति। **संविन्निष्ठाः**–संविद्-भित्तित्वेन स्थिताः, **विषयव्यवस्थितयः**–नीलसुखादिभावमर्यादाः, भिन्न-रूपम्–प्रतिक्षणं भिन्नरूपम्, तथा प्रमात्मकम्–प्रोक्तप्रमास्वरूपम् यत् संविन्मात्रम् बौद्धैरात्मत्वेन मतं विज्ञानम्, तत्र विश्रान्त्या––विश्रमणेन, **न सिध्यति,** नीलग्रहणकाले हि पीतग्रहणं न सिध्यति, तद्ग्रहणकाले च तस्य, प्रमाता चोभयत्र भिन्न एवेति कस्तयोः स्वरूपं भेदेन व्यवस्थापयेत् उभयग्राहकस्यैकस्य प्रमातुरेव तद्योगात् इति भावः। **पुनः** कथं सिध्यतीत्यपेक्षायां पक्षान्तरं कथयति **"तत्तत्"** इति समस्तपदस्य योजनां च करोति **"अपि तु"** इति । एतत्पदं व्याचष्टे विगृह्णाति च **"तास्ताः"** इति। **"संवित्"** शब्दं व्याचष्टे **"निश्चय"** इति। **"निश्चयरूपाः"** नीलसुखादिनिश्चयरूपाः, **तानि एव**––संविद एव, **"मुख"** पदं व्याचष्टे **"द्वार"** इति । अस्यैव पुनः पर्यायद्वयमाह **"उपायाः" "मार्गाः"** इति, तृतीयाविभक्तेर्योजनां करोति "तैः" इति। **नदीस्रोतःस्थानीयैः**-नदीस्रोतःसदृशैः, तैर्हि उह्यमानं तृणादि समुद्रान्तः प्रविशति इति आर्थोपमान-त्वेन गृहीतानि सूत्रेऽनुक्तान्यपि । **"भाव"** पदं व्याचष्टे **"नील"** इति । **उह्यमानाः**– जले तृणादिवत् विवशतः भ्राम्यन्तः, स्थितस्य प्रतितिष्ठत्त्वमयुक्तं ज्ञात्वा "उह्यमानाः" इति अध्याहृतम् । **"एक"**इत्यादि पदं व्याचष्टे विगृह्-णाति च **"एकस्मिन्"** इति । उह्यमानानां स्रोतोद्वारेण समुद्रप्रवेशयोग्यत्वं ज्ञात्वा समुद्रग्रहणम्, **महासंवित्समुद्रे**-महाप्रकाशरूपे समद्रे, **"प्रतितिष्ठत्सु"**

**मुख्येन विश्रान्तिं भजन्ते, तत एषु परस्परं समन्वयरूपं यत् ज्ञातेयं तत् उपपत्त्या घटते, ज्ञातीनां भावः तच्छब्दप्रवृत्तिनिमित्तं परस्परं जानीयुः इति, कर्म च अन्योन्ययोगक्षेमोद्वहनात्मकं ज्ञातेयम्, तच्च समन्वयाभिप्रायेण इह दर्शितम्, न जडानां स्वतः समन्वयः कदाचिदपि इति प्रतिपादयितुम् ॥ २ ॥**

---

इति पदं व्याचष्टे **"प्रति"** इति। **"प्रति"** इत्यवयवं व्याचष्टे **"आभिमुख्येन"** इति, **"तिष्ठत्"** इति शत्रन्तां धातुप्रकृतिं व्याचष्टे **"विश्रान्तिं भजन्ते"** इति, लडादेशत्वसामान्यमाश्रित्यैवं विग्रहः, "अहं घटं पश्यामि" इत्यत्र हि घटः दर्शनाख्यसंविद्द्वारेण अहंवाच्ये परप्रमातरि एव स्फुटं विश्रान्तिं भजति, ततः परम् "अहम्" स्वरूपे एव त्रुडितत्वात्। यत्तु कालान्तरे तस्य पुनर्दर्शनं तत् पुनर्विच्छिन्नस्य तस्य पुनस्तत्र विश्रमणमेवेति न विरोधः। प्रतितिष्ठतिरूपेण भावेन ज्ञातेयोपपत्तिरूपभावलक्षणं सप्तम्यर्थीभूतं कथयति **"ततः"** इति । ततः–तद्भावाद्धेतोः **एषु**—भावेषु, **यज्ज्ञातेयम्**—सम्बन्धः, **तत्**, **"उपपद्यते"** इत्यस्य व्याख्यां करोति **"उपपत्त्या"** इति । **घटते,** युज्यते इत्यर्थः। **"ज्ञातेयम्"** इति भावकर्मणि व्युत्पादयितुमाह **"ज्ञातीनाम्"** इति । तद्धितप्रत्ययवाच्यस्य भावस्यार्थमाह **"तच्छब्द"** इति, **तच्छब्दप्रवृत्तिनिमित्तम्**–ज्ञातिशब्दप्रवृत्तिनिमित्तम्, येन धर्मेण ज्ञातिशब्दः प्रयुज्यते स एवात्र भाव इत्यर्थः । किं तत्प्रवृत्तिनिमित्तमित्यपेक्षायां तदेवानुकृत्य आह **"परस्परम्"** इति । परस्परं प्रति ज्ञानमेव "ज्ञाति" शब्दप्रवृत्तिनिमित्तम् इति भावः । भावार्थमुक्त्वा कर्मार्थमाह **"कर्म च"** इति । बान्धवा हि न केवलं परस्परं जानन्त्येव किन्तु उपकारपरा अपि भवन्ति इति भावः । नन्विह किमस्तीत्यत आह **"तच्च"** इति । **तच्च**–ज्ञातेयञ्च, **इह**–अस्मिन् श्लोके, **"दर्शितम्"** इति, लक्षणयेति भावः । न हि भावानामचेतनत्वेन मुख्यार्थद्वयसंभवः इति परमार्थः । कुतो न मुख्यमेवार्थं स्वीकरिष्याम इत्यत आह **"न"** इति। **इति प्रतिपादयितुम्,** एतत्सूचयितुम् इत्यर्थः ॥ २ ॥

तथा च व्यतिरेकमुखेन एतदेवाह:—

**देशकालक्रमजुषामर्थानां स्वसमापिनाम् ।**

**सकृदाभाससाध्योऽसावन्यथा कः समन्वयः ॥ ३ ॥**

अर्थानां जडानाम्, तज्ज्ञानानां तद्विकल्पानां तन्निश्चयानां च देशक्रमं कालक्रमं चात्यजताम्, स्वसमापिनाम्–स्वरूपमात्रप्रतिष्ठानाम्, कः समन्वयः, न कश्चित् इत्यर्थः, यतो हि असौ समन्वयः सकृदाभासेन देशकालाकारमिश्रीकरणात्मना योजनाभासेन साधयितुं शक्यः नान्यथा, न हि पृथक्पृथक् परिक्षीणेषु स्रोतःसु तदुह्यमानाः तृणोलपादयः समन्वयं कंचित् यान्ति इति । अनेकत्वेन देशकालादिभेद[1] इत्याशयेन सकृच्छब्दः तन्निषेधतात्पर्येण प्रयुक्तः ॥ ३ ॥

---

अथ तृतीयस्य श्लोकस्यावतरणिकां करोति "**तथा च**" इति। स्पष्टम्। एवम् अवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । "**देश**" इति ।

अत्र टीका:—

"**अर्थानाम्**" इति व्याचष्टे "**जडानाम्**" इति । **जडानाम्**–नील–सुखादिरूपाणाम्, **तज्ज्ञानानाम्**–नीलसुखाद्यनुभवानाम्, "**विकल्प**" पदेन स्मृत्यादीनामपि ग्रहणम्, अर्थत्वञ्चैषां परप्रकाशं प्रति वेद्यत्वकृतमेव ज्ञेयम् । "**स्वसमापिनाम्**" इति व्याचष्टे "**स्वरूप**" इति । कुतो न इत्यपेक्षायामाह "**यतो हि**" इति । "**सकृदाभास**" इति पदं व्याचष्टे विगृह्णाति च "**देश**" इति । **योजनाभासेन**, परमार्थतः भेदस्य तथैव स्थितत्वादिति भावः, "**साधयितुं शक्यः**" इति, देशकालाकारैः भिन्नतया स्थितानाम् नीलादीनां केनापि सामान्येन योजनं हि संबन्ध इति भावः । "**अन्यथा**" इत्यस्य विस्तारं करोति "**न हि**" इति । **समन्वयम्**–परस्पर-

---

1. देशादिभेदः—K.S.S.

तत्र कोऽसौ समन्वय इत्याशङ्क्य बहुतरव्यापकं कार्यकारणभावं तावत् दर्शयति:—

**प्रत्यक्षानुपलम्भानां तत्तद्भिन्नांशपातिनाम् ।**
**कार्यकारणतासिद्धिहेतुतैकप्रमातृजा ॥ ४ ॥**

इह अग्नौ प्रत्यक्षे धूमं नोपलभते, ततो धूमं प्रत्यक्षेण पश्यति, अग्निं तु यदि न उपलभते धूममपि न उपलभते—इति प्रत्यक्षाभ्याम् अनुपलम्भैश्च इति पञ्चकात् कार्यकारणभावो धूमाग्न्योः सिद्ध्यति इति यदुक्तं तत् कथम् ? अग्निप्रत्यक्षेण[1] हि धूमे न किंचित् उद्व्यूढम् अग्नि-

मेलनम् । "इति" शब्दः अन्यथाशब्दप्रपञ्चसमाप्तौ, **"सकृत्"** शब्दस्य भावमाह "अनेकत्वेन" इति । **अनेकत्वेन**—आभासानेकतया, **देशकालादि-भेदः** भवति, **इत्याशयेन**—अभिप्रायेण, **तन्निषेधतात्पर्येण**—देशकालादिभेदनिषेध-तात्पर्येण. **"सकृत्" शब्दः प्रयुक्तः**; सूत्रे इति भावः ॥ ३ ॥

अथ चतुर्थश्लोकस्यावतरणिकां करोति "तत्र" इति । स्पष्टम् । एवम् अवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । **"प्रत्यक्ष"** इति ।

अत्र टीका :–

**इह**—अस्मिन् व्यवहारविषये जगति । "**नोपलभते**" इति, आर्द्रेन्धनसंयोगा-भावात्, **ततः**—अग्निप्रत्यक्षानन्तरमार्द्रेन्धनप्रक्षेपात्, **इति पंचकात्**—एवंरूपात् पंचकाद्धेतोः। अन्वयव्यतिरेकाभ्यां व्याप्तेरिति यावत् । तत्र अन्वये अग्निप्रत्यक्षम्, धूमानुपलम्भः, धूमप्रत्यक्षम्, इति त्रयम्, व्यतिरेके अग्न्यनुपलंभः, धूमानुपलंभ इति द्वयम्, **यदुक्तम्,** तार्किकादिभिरिति भावः, **तत् कथम्,** तन्न सिध्यति इत्यर्थः, कुतो न सिध्यति इत्यत आह **"अग्नि"** इति, **न किंचित् उद्व्यूढम्**—लेशतोपि सिद्धिर्न दत्ता, कुतो न उद्व्यूढम् इत्याशङ्क्य **"सिद्धिहेतुता"** इत्यादि पदं व्याचष्टे **"अग्निलक्षणे"** इति । **अग्निलक्षणे**—अग्निस्वरूपमात्रे,

1. धूमेन किंचिद् उद्व्यूढम्—K.S.S.

**लक्षणे धूमात् भिन्ने अंशे तस्य अवगमहेतुत्वात्, स्वस्वभावरूपे भिन्ने अंशे विश्रान्तत्वाच्च, परविषयानवगाहनात् ज्ञानान्तरस्वरूपानावेशाच्च इति । पातिः ज्ञापनवाची पतिश्च विश्रान्तिवाची प्रयुक्तस्तन्त्रेण । एवं धूमानुपलम्भादौ चतुष्टये वाच्यम् ।**

**ततश्च अग्निः धूमाभावः धूमः, अग्न्यभावः[1] धूमाभावः इति एतानि**

---

**अंशे**—समस्तकार्यकारणभावविषयभागभूते, **तस्य**—अग्निप्रत्यक्षस्य, **अवगमहेतुत्वात्**—ज्ञानकारणत्वात् । अस्यैव पदस्य द्वितीयमर्थमाह **"स्व"** इति । **विश्रान्तत्वात्**, पातित्वादित्यर्थः । कुत एतदित्यपेक्षायाम् अत्र हेतुद्वये क्रमेण हेतुद्वयमाह **"पर"** इति । **परविषयानवगाहनात्**—धूमज्ञानविषयधूमानवगाहनात्, तथा ज्ञानान्तरस्य—धूमज्ञानस्य यत्स्वरूपं तत्र अनावेशात्—आवेशासंभवात् । 'च' शब्दोऽत्र क्रमद्योतकः न समुच्चयपरः । "इति" शब्दः **"तत्तत्"** इति समस्तपदविग्रहव्याख्यासमाप्तौ । ननु **"पातिनाम्"** इत्यस्यावयवस्य कथं ज्ञापकत्वविश्रान्तत्वरूपमर्थद्वयं संभवतीत्यत आह **"पातिः"** इति । **पातिः**—णिजन्तः "पत्लृ गतौ" इति धातुः । **ज्ञापनवाची**, गत्यर्थानां ज्ञानवाचकत्वेन तत्र च णिच्प्रयोगे ज्ञापनवाचकत्वात्, **पतिः**—केवलोयं धातुः, **विश्रान्तिवाची**, श्रान्तो हि यदा विश्राम्यति तदा पतत्येव, **तन्त्रेण**—प्रोक्तरूपेण, **प्रयुक्तः**, कर्तरि णिन्प्रत्ययान्तत्वेन प्रयोगविषयीकृत इत्यर्थः । इममेव न्यायमन्यत्र चतुष्टयेऽप्यतिदिशति **"एवम्"** इति, समानन्यायत्वादिति शेषः । अत एव सूत्रे "ततत्" इति वीप्सा इति भावः ।

द्वितीयार्धं व्याख्यातुं प्रक्रियां करोति **"ततश्च"** इति । **ततश्च**—यतः एवं ततः कारणाच्च, यथा **अग्निः**, **धूमाभावः**, **धूमः**, **अग्न्यभावः**, **धूमाभावः**,

---

1. ततश्च अग्निः धूमः अग्न्यभावो धूमाभावः, इति एतानि वस्तूनि—K.S.S. Two 'pratyakṣas' and three 'anupalambhas' as stated by Bhāskara, are referred to here: One more धूमाभाव, therefore, is needed in the K.S.S. edition.

**वस्तूनि यथा पृथक्प्रमातृसंवेद्यानि धूमाग्न्योः कार्यकारणतां न गमयन्ति तथा एकप्रमातृवेद्यान्यपि, विकल्पोऽपि अनुभवातिरिक्तं ज्ञापयन् न प्रमाणमेव। यदा तु प्रत्यक्षानुपलम्भस्रोतःपञ्चकेन तानि पञ्च वस्तूनि एकसंवित्समुद्रविश्रान्तानि कृतानि तदा एकीभूतानि प्रमात्रा स्वतन्त्रतया अन्योन्यसापेक्षाणि न तु घटपटादिवत् भास्यन्ते, स एक[1] आभासः कार्यकारणभावावभास इति न किञ्चित् अवद्यम् ॥ ४॥**

---

**इत्येतानि वस्तूनि**-प्रत्यक्षद्वयानुपलंभत्रयविषयीभूतं वस्तुपंचकम्, पृथग् यः प्रमाता तस्य वेद्यानि–वेद्यतां गतानि सन्ति, **धूमाग्न्योः कार्यकारणतां न गमयन्ति**, न हि परेण गृहीतमग्निं परो धूमकारणतया गृह्णाति सोपि वा धूममग्निकार्यतया इति भावः । एकप्रमातर्यपि वेद्यान्येव न तु विश्रान्तान्यपि न तां गमयन्ति इत्याह **'तथा'** इति । ननु विकल्पेनैव भिन्नप्रमातृवेद्येषु अग्न्यादिषु कार्यकारणताग्रहणमस्तु, न हि विकल्पस्य कुत्राप्यशक्तिः असंभवोपहतेऽपि वस्तुनि प्रवृत्तेः इत्यत आह **"विकल्पोऽपि"** इति । अत्र उपयोगित्वेन बौद्धमतस्याश्रयणम् । ननु तर्हि प्रत्यक्षदृष्टा कार्यकारणता कथं सिध्यति इत्यत आह **"यदा तु"** इति। **यदा तु प्रत्यक्षानुपलंभस्रोतः-पंचकेन**–नदीप्रवाहस्थानीयेन प्रत्यक्षादिपंचकेन, **तानि पंच वस्तूनि** भावादिवत् **एकसंवित्समुद्रविश्रान्तानि कृतानि तदा एकीभूतानि** सन्ति, चलितानि सन्तीति यावत्, **प्रमात्रा**–सर्वाधारभूतेन ग्राहकेण, **स्वतन्त्रतया**–स्वस्मिन् स्थितया अप्रतिहतया स्वातन्त्र्यशक्त्या, परस्परं युक्तत्वेन **अन्योन्यसापेक्षाणि भास्यन्ते, न तु घटपटादिवत्** निरपेक्षत्वेन भास्यन्ते, **स एक आभासः**—द्वयोर्मेलनरूप आभासः, **कार्यकारणभावावभासः**—कार्यकारणतारूपः आभासः भवति, इति–एवम्, **न किंचिदवद्यम्,** किंचिद्दोषोपहतं न भवतीत्यर्थः ॥ ४॥

---

1. स एव एकः आभासः—K.S.S.

ननु प्रत्यक्षानुपलम्भैः यत् कृतं तत् स्मरणबलात् एकीकरिष्यते[1] उक्तं तावद् अत्र-स्मृतिरपि अनुभूतातिरिक्तेऽर्थे न व्याप्रियते । सापि च विज्ञानसमन्वयरूपा एकप्रमातृसद्भावं विना कथं स्यादिति दर्शयतिः—

**स्मृतौ यैव स्वसंवित्तिः प्रमाणं स्वात्मसंभवे ।**
**पूर्वानुभवसद्भावे साधनं सैव नापरम् ॥ ५ ॥**

इह अनुभूतो विषयः प्रकाशते स्मृतौ, तत्र विषयस्यासौ[2] स्मृतिः न नूतनः प्रकाशः अपि तु अस्य स प्रकाशः प्राच्योऽनुभव[3] एव, स चानु-

---

अथ पंचमस्य श्लोकस्यावतरणिकां करोति **"ननु"** इति।

अत्र टीका :–

**यत् कृतम्**–अग्न्यादिपंचकस्य यः उपलंभः कृतः, **एकीकरिष्यते,** प्रमात्रा इति शेषः। गुरुः अत्रोत्तरमाह **"उक्तम्"** इति, **अत्र**–अस्मिन् विषये, पूर्वमिति शेषः, **अनुभूतातिरिक्ते**–पूर्वानुभूतव्यतिरिक्ते, **सापि**–स्मृतिरपि, विज्ञानयो :–स्मृतिकालीनानुभवकालीनयोः ज्ञानयोः, यः समन्वयः–योजनम्, एकविषयीकरणम् इति यावत्, सः रूपं यस्याः तादृशी। **इति दर्शयति,** एतदेव दर्शयतीत्यर्थः।

एवम् अवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"स्मृतौ"** इति।

अत्र टीका :–

**अनुभूतः**—पूर्वानुभूतः, **विषयः**—घटादिः, **"तत्र"** इति, तत्र सतीत्यर्थः, **असौ स्मृतिः विषयस्य नूतनः प्रकाशो न** भवति, अपि तु **अस्य**–विषयस्य **स प्रकाश :**—स्मृतिरूपः प्रकाशः, **प्राच्योऽनुभव एव** भवति, एकविषयत्वात्,

---

1. एकीकरिष्यति—K.S.S.
2. सा स्मृतिः—K.S.S.
3. स प्राच्य एवानुभवप्रकाशः—K.S.S.

भवो ज्ञानरूपत्वेन ज्ञेयरूपत्वाभावात् न ज्ञानान्तरसंवेद्यः अपि तु स्वप्रकाशः, स च स्मृतिकाले यदि असन् तत् कथं प्रकाशताम्, भवतु वा असौ तथापि स्मृतिप्रकाशोऽनुभवप्रकाश इति अन्योन्यभिन्नं युगलम् इति न कदाचित् स्मृतिः स्यात, तस्मात् एतत् एवमुपपद्यते, यदेव स्मृतिस्वसंवेदनम्, तदेव अनुभवस्य स्वसंवेदनम्, न तु अपरं स्वसंवेदनव्यतिरिक्तं प्रत्यक्षम् अनुमानादिकं वा तत्र क्रमते, ततश्च तावत्कालव्यापि अविच्छिन्नमेकं यत् स्वसंवेदनं तदेव 'प्रमातृतत्त्वम्' इति सिद्धम्। अन्यत्र अनुभवितरि

---

**स चानुभवः**–स्मृतिरूपतां गतः प्राच्योऽनुभवः, **ज्ञानरूपत्वेन ज्ञेयरूपत्वाभावात् ज्ञानान्तरसंवेद्यो न** भवति, "दृक् स्वाभासा" इत्युक्तन्यायेनेति भावः, **अपि तु स्वप्रकाशः**– स्वेन स्वं प्रति भासनशीलः भवति, **स च**–अनुभवः, **स्मृतिकाले यदि असन्** भवति, **तत्**–तदा, **कथं प्रकाशताम्**, न हि शशशृङ्गस्य प्रकाशो दृष्ट इति भावः। **भवतु वा असौ**, सन् वा भवत्वित्यर्थः, **तथापि**–नूतनप्रकाशत्वेऽपि सति, स्मृतिरूपः प्रकाशः **स्मृतिप्रकाशः**, अनुभवरूपः प्रकाशः **अनुभवप्रकाशः**, **अन्योन्यभिन्नम्**–परस्परनिरपेक्षम्। **"न स्यात्"** इति, योजकाभावादिति भावः। फलितमाह **"तस्मात्"** इति। ततः **एवम्**–अनेन प्रकारेण, **एतत्**–स्मृतिसंभवः। एवं कथम् इत्यपेक्षायाम् सूत्रं व्याचष्टे एतदुत्तरत्वेन **"यदेव"** इति। **"स्मृतौ स्वसंवित्तिः"** इति पदद्वयं व्याचष्टे **"स्मृति"** इति। स्मृतौ स्वसंवेदनम्–स्वरूपभूतं संवेदनम् **स्मृतिस्वसंवेदनम्**, एवशब्दव्यावर्त्यमाह **"न तु"** इति, **स्वसंवेदनव्यतिरिक्तम्**–स्वरूपभूतसंवेदनव्यतिरिक्तम्, **तत्र**–तस्यां स्मृतौ, **क्रमते**–प्रगल्भते। तावन्तं कालम्–स्मृत्यवधि कालम् व्याप्नोतीति **तावत्कालव्यापि**, **स्वसंवेदनम्** स्मृत्यनुभवयोः संवेदनम्, भावदायिसंवेदनमिति[1] यावत्। ननु पूर्वं स्मृत्या प्रमातृसाधनं कृतमेव इति किमयं पिष्टपेषणसहोदरः पुनः प्रयत्न आरब्ध इत्यत आह **"अन्यत्र"** इति। अनुभवि-

---

1. सावदायिसंवेदनम्—C.

**स्मर्ता अन्यो न उपपद्यते, इत्यनया छायया स्मृत्या प्रमातृसिद्धिः पूर्वमुक्ता, इदानीं तु स्वसंवेदनैकीभावेन भङ्ग्यन्तरेण इति विशेषः ॥ ५ ॥**

**नन्वनुभवातिरिक्तेऽपि अर्थे सन्तु विकल्पाः प्रमाणम्, अप्रामाण्यं हि बाधबलात् भवति, बाधाभावे तत् कथं स्याद् इत्याशङ्क्य सोऽपि अयं बाध्यबाधकभावः सत्यासत्यप्रविभाजनया[1] विश्वेषां व्यवहाराणां जीवितभूतो न एकेन प्रमातृतत्त्वेन विना घटत इति वितत्य दर्शयतिः—**

**बाध्यबाधकभावोऽपि स्वात्मनिष्ठाविरोधिनाम् ।**
**ज्ञानानामुदियादेकप्रमातृपरिनिष्ठितेः ॥ ६ ॥**

---

तरि, अन्यस्मिन् सति **अन्यः स्मर्ता न उपपद्यते**–उपपत्त्या न घटते, न हि अन्यदृष्टे अन्यस्य स्मृतिर्दृष्टेति भावः। **इत्यनया छायया**–रचनया, **पूर्वं स्मृत्या**–करणभूतया, **प्रमातृसिद्धिरुक्ता**–कथिता, **इदानीन्तु**–अस्मिन् श्लोके तु, **स्वसंवेदनैकीभावेन भङ्ग्यन्तरेण**–सारभूतस्वसंवेदनैकत्वेन रचनान्तरेण, स्मृत्या प्रमातृसिद्धिरुक्ता, **इति**–एवम्, **विशेषः** भवति, तथा च न पौनरुक्त्याशङ्का इति भावः।

एवमत्र सङ्क्षेपः, स्मृतौ यैव स्वसंवित्तिः–सारभूतं स्वसंवेदनम्, स्वात्मसंभवेस्मृत्याख्यनिजस्वरूपस्य प्रकाशने भरणे च प्रमाणं भवति, सैव स्वसंवित्तिः पूर्वानुभवस्य सद्भावे पूर्वानुभवस्य प्रकाशने भरणे च साधनम् प्रमाणम् आसीत्, अपरम्-अन्यत् प्रत्यक्षादिकं नासीत् तस्य तत्राशक्तत्वात्, तथा च स्वसंवेदनाख्यैकप्रमातृसिद्धिरिति भावः ॥ ५ ॥

अथ षष्ठस्य श्लोकस्यावतरणिकां करोति **"नन्वनुभव"** इति।

अत्र टीका :–

सत्यासत्ययोः या प्रविभाजना–विभागविषयीकरणं तया।

एवम् अवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"बाध्यबाधक"** इति।

---

1. सत्यासत्यप्रविभाजनाय—K.S.S.

'बाधाभावे प्रामाण्यम्' इत्येतदर्थम् अवश्यसमर्थ्यो यो बाधव्यवहारः सोऽपि कथम् इति "अपि" शब्दस्यार्थः । इह शुक्त्या तावत् रजतस्य न काचित् बाधा नाम क्रियमाणा दृश्यते, शुक्तिज्ञानेन रजतज्ञानं बाध्यते इत्यपि न युक्तम्, स्वस्मिन् विषये आत्मनि च स्वरूपे द्वयोः ज्ञानयोः परिनिष्ठितयोः विश्रान्तयोः अन्योन्यं विरोधस्य अभावात् । अथ[1] अयं परस्परपरिहार एव विरोधः तर्हि सर्वेषां ज्ञानानां विरोधात् बाध्यबाधक-

अत्र टीका :–

प्रथमम् **"अपि"** शब्दस्यार्थमाह "बाधाभावे" इति । **एतदर्थम्**–ज्ञान-प्रामाण्यार्थम्, **अवश्यसमर्थ्यः**–अवश्यं साधनीयः, **सोऽपि कथम्**, एकप्रमातृ-परिनिष्ठितिं विना स्यादित्यर्थः । **अर्थः**, समुच्चयरूप इत्यर्थः । एवम् **अपि** शब्दार्थमुक्त्वा श्लोकं व्याख्यातुं प्रक्रियां करोति **"इह"** इति । **"न दृश्यते"** इति, अत एव सूत्रे ज्ञानानामेव बाध्यबाधकभावो निर्दिष्ट इति भावः । **इत्यपि**-सूत्रे उपात्तो ज्ञानानां बाध्यबाधकभावोऽपि, न **युक्तम्**, न युक्तो भवतीत्यर्थः । कुत इत्यपेक्षायाम्, **"स्वात्मनिष्ठा"** इति पदं हेतुगर्भविशेषणत्वेन योजयति विग्रहपूर्वं व्याचष्टे च "**स्वस्मिन**"इति । **"स्व"** इत्यवयवस्यार्थमाह **"विषये"** इति, स्वकीये विषये इत्यर्थः । **"आत्म"** इत्यवयवं व्याचष्टे **"स्वरूपे"** इति, आत्मशब्दस्य स्वरूपवाचकत्वात् । **"निष्ठा"** इति पदं व्याचष्टे **"विश्रान्तयोः"** इति, एतेन स्वात्मनिष्ठानि च तानि अविरोधीनि चेति विग्रहः, द्वयोरेव विरोधाभावविवक्षया बहुवचनस्यात्र तंत्रत्वं सूचितम् । अथास्यैव वाक्यस्य द्वितीयमर्थमाह **"अथ"** इति । **अथ**––यदि, **अयं परस्परपरिहार एव**–अन्योन्याभाव एव, ज्ञानानां **विरोधो** भवति, न हि शुक्तिकाज्ञानं रजतज्ञानं भवतीति भावः ; **तर्हि**–तदा, **सर्वेषां ज्ञानानां विरोधात्**–अन्यो-न्याभावाऽव्यभिचारेण सिद्धात् विरोधात्, प्रकृतत्वात् **बाध्यबाधकभावस्य,**

1. अथ अयमेव विरोधः परस्परपरिहाररूपः—K.S.S.

**भावस्य[1] स्वात्मनि परिनिष्ठैव न लभ्येति सुतरां विघटेत सत्येतरप्रविभागः । नञपि अत्र तन्त्रेण व्याख्येयः । एतदुक्तं भवति—यदि ज्ञानं स्वयं नश्यति तदा किं ज्ञानान्तरेण अस्य कृतम्, न हि तेन तत्कालेऽसंभवता तस्य विषया-**

**स्वात्मनि परिनिष्ठा**—नियतावस्थितिः, **"एव न लभ्या"** इत्यस्य शेषत्वेन अध्याहारः, लभ्या न भवति, अत्र बहुवचनं प्रधानमेव । ननु कथमत्रायमर्थो युक्त इत्यत आह **"नञपि"** इति । **अत्र**—अस्मिन् विषये, **तन्त्रेण**—दीपवत् स्थितया युगपत् सर्वोपकारिरूपया तन्त्रवृत्त्या, **व्याख्येयः**, न केवलं **"ज्ञानानाम्"** इत्यन्तः श्लोकखण्ड एव तन्त्रेण व्याख्येयः अपि तु बुद्धया निष्कृष्य "नञ्" अपि इति **"अपि"** शब्दार्थः । तत्र पूर्वार्थे विरोधिपदसमस्ततया व्याख्येयः **"अविरोधिनाम्"** इति, द्वितीये तु अर्थे बुद्ध्या ततो निष्कृष्य "न विरोधिनाम्" इति व्याख्येयः । अन्यथा **"लभ्या"** इत्यध्याहृतेन सह संबन्धायोगात् । तथा चैवमत्र योजना । ज्ञानानां बाध्यबाधकभावोऽपि एकप्रमातृपरिनिष्ठितेः—एकप्रमातृविश्रान्तेरेव हेतोरुदियात् । कुत इत्यपेक्षायां "स्वात्मनिष्ठाविरोधिनाम्" इति हेतुगर्भं विशेषणम् । यतः एतानि ज्ञानानि स्वविषये स्वरूपमात्रे च विश्रान्तानि न तु अन्यविषये स्वरूपे च व्यभिचरणशीलानि भवन्ति तत इत्यर्थः । न च अविरोधिनां परस्परं बाध्यबाधकभावो युक्तः, एकप्रमातृविश्रान्तत्वे तु तत्कृतस्य तस्य युक्ततैव इति बाध्यबाधकभावस्य स्वरूपलाभ इति भावः । अथ च अस्यामेवापेक्षायां "यतः" इति शेषः, यतः विरोधिनां परस्परं तादात्म्याभावाव्यभिचारेण स्वभावेन अविशेषेण विरोधयुक्तानां समस्तज्ञानानां संबन्धिनः, अर्थवशेन विभक्तिपरिणामः, बाध्यबाधकभावस्य स्वात्मनिष्ठा—यथास्वं बाध्यबाधकयोर्व्यवस्था इदं बाध्यम् इदं बाधकमित्येवंरूपा, लभ्या इति शेषः । लभ्या न भवति ततः स बाध्यबाधकभावः एकप्रमातृपरिनिष्ठितः उदियात्—एकप्रमातरि प्रतितिष्ठत्त्वे सति तु तत्स्वातन्त्र्यवशेन बाध्यबाधकभावस्य स्वात्मनिष्ठा युक्तेति बाध्यबाधकभावोऽपि स्वरूपं लभते एवेति भावः । व्याख्यातस्य **"ज्ञानानाम्"** इत्यन्तस्य श्लोकखण्डस्य

1. बाध्यबाधकभावस्य परिनिष्ठैव—K.S.S.

**पहार: कर्तुं शक्यः, न रजतम् इत्यपि ज्ञानं स्वं रजताभावं विषयीकुर्वत् न विषयम् अपहरेत् रजतज्ञानस्य। अथापि ज्ञानान्तरेण नाश्यते इत्यपि पक्षः, तत्रापि सर्वेषां ज्ञानानाम् इयमेव सरणिरिति किंचिदेव बाध्यम् इति कथं स्यात् ? यदा तु रजतज्ञानं शुक्तिज्ञानं च एकत्र स्वसंवेदने विश्राम्यतः तदा एतत् उपपद्यते, तथा हि—एकत्रापि प्रमातृतत्त्वे विश्राम्यतां ज्ञानानां**

अतिदुर्बोधतया पुनः सङ्क्षेपेण अर्थकथनं प्रतिजानीते **"एतत्"** इति। किमुक्तं भवतीति शिष्यप्रश्नमाशङ्क्याह **"यदि"** इति । **ज्ञानम्**—रजतज्ञानम्, **नश्यति,** एकक्षणावस्थायित्वादिति भावः, **ज्ञानान्तरेण**—"शुक्तिकेयम्" इति "न रजतमिदम्"[1] इति वा अन्येन ज्ञानेन। ननु तत्तदर्थस्य विषयापहारं करोति इत्यत आह **"न हि"** इति। **तेन**—ज्ञानान्तरेण, **तत्काले**—रजतज्ञान-समये। ननु "शुक्तिकेयम्" इति ज्ञानं शुक्तिकामात्रग्रहणमात्रनिष्ठत्वेन अस्य विषयं मा अपहरतु "न रजतम्" इति ज्ञानन्तु अपहरत्येव इत्यत आह **"न रजतम्"** इति। "न रजतम्" इति ज्ञानं हि रजताभावविषयमेव न रजतविषयम्, तथा च कथमपहरणमिति भावः। नाशनम् अभ्युपेत्यापि कथयति **"अथापि"** इति। **तत्रापि**—तस्मिन्नपि पक्षे, **किंचिदेव**—रजतज्ञानमेव, **कथं स्यात्**, न हि सर्वाणि ज्ञानानि युगपत् संभवन्ति इति उत्तरज्ञानेन पूर्वं ज्ञानं नाश्यते एव इति सर्वज्ञानानां बाध्यत्वं स्यान्न केवलं शुक्तिविषयस्य रजतज्ञानस्यैवेति भावः। एवं सङ्क्षेपेण अर्थकथनं कृत्वा **"उदियात्"** इत्यादि अवशिष्टं श्लोकखण्डं व्याचष्टे **"यदा तु"** इति। **स्वसंवेदने**—स्वसंवित्तिरूपे प्रमातरि, **एतत्**—ज्ञानानां बाध्यबाधकभावः। कथमित्यपेक्षायाम् समर्थनमुपक्रमते **"तथा हि"** इति। **सा-**विश्रान्तिः, **संवेद्यते**—अनुभूयते, **ज्ञाने**—विशेषणे विशेष्ये च निष्ठां गतं ज्ञान-द्वयम्, **विश्राम्यन्ती** "अहं पश्यामि" इति विश्रामं भजमाने, परस्परं यः उपरागाभासः—स्वविशिष्टबुद्धिजननरूपः, तेन, **विश्राम्यतः**—विश्रामं भजतः, अन्यथा विशेषणविशेष्यभावज्ञानासंभवादिति भावः। **परस्परानाश्लेषेण—**

1. रजतमिदम्—C.

**नैकप्रकारैव विश्रान्तिः अपि तु विचित्रतयैव सा संवेद्यते, तथा हि—नीलम् इति उत्पलम् इति ज्ञाने प्रमातरि विश्राम्यन्ती परस्परोपरागाभासेन विश्राम्यतः । घट इति पट इति परस्परानाश्लेषेण, शुक्तिका इति न रजतम् इति वा ज्ञानं रजतम् इति ज्ञानस्य उन्मूलनं तदीयविमर्शात्मक-प्रमारूपव्यापारानुवर्तनविध्वंसं कुर्वत् प्रमातरि प्रतिष्ठां भजते । एवं कार्य-कारणभावादौ विश्रान्तिवैचित्र्यं प्रमेयासंभवि प्रमात्रा स्वातन्त्र्येण निर्मितं तत एव अस्य प्रमास्वतन्त्रतादायि वाच्यम् । एवमेकत्र प्रमातरि पूर्वज्ञानस्य**

---

परस्परानपेक्षया, न हि घटपटयोः कापि परस्परमपेक्षा दृश्यते, विश्राम्यत इत्यने-नैवात्रापि संबन्धः, कदाचिद्धि शुक्तिकायां रजतज्ञाने "शुक्तिकेयम्" इति बाधोत्पादः कदाचित्तु "न रजतम्" इति, इति **"वा"** शब्दप्रयोगः । **"रजतम्" इति ज्ञानस्य,** शुक्तिकाविषये स्फुरितस्येति भावः, **उन्मूलनम्**—नाशनम्, अस्यैव स्वयं व्याख्यां करोति **"तदीय"** इति । तदीया—रजतसंबन्धिनी या विमर्शात्मकप्रमा—परामर्शरूपा प्रमा, तद्रूपो यो व्यापारः तत्र यदनुवर्तनम्—पश्चाल्लगनम्, तस्य विध्वंसम्—नाशम्, **कुर्वत्**—प्रत्युत तद्विरुद्धशुक्तिकासंबन्धि-विमर्शात्मकप्रमारूपव्यापारानुवर्तनं कुर्वत्, **प्रतिष्ठाम्**—प्रोक्तरूपां विश्रान्तिम् । एनमेव न्यायं कार्यकारणभावादौ संबन्धनिवहे अतिदिशति **"एवम्"** इति । **प्रमेयासंभवि**—आपाततः अचेतनेषु प्रमेयेषु असंभवोपहतम् । **तत एव**—निर्मितेर्हेतोरेव, **अस्य**—प्रमातुः, **स्वतन्त्रतादायि**—स्वतन्त्रतोद्भावकम् । **वाच्यम्**—अवश्यं वक्तव्यम्, एतेन सर्वेषां संबन्धानाम् प्रमातृस्वातन्त्र्यप्राणत्व-मेवोक्तम्, अन्यथा आपाततः अचेतनेषु परमार्थतः शुद्धचैतन्यरूपेषु भावेषु यथास्वं स्वगृहे स्थितेषु का संबन्धकलना । तदुक्तम् :—

" भावानां स्वगृहे रूपं तत्सत्यमितरन्मृषा "

इति । अत्र च पूर्ववाक्यस्थस्य यच्छब्दस्यापेक्षा, तथा च भावानां स्वगृहे-शुद्धप्रका-शान्तदशरूपे निजगृहे यद्रूपं भवति तत्सत्यम्—परमार्थसत् भवति, इतरत्—प्रमात्रा स्व-कल्पनया कृते यद् भवति तत्, मृषा भवति, अत्र च यद्यपि प्रमातुरपि स्वगृहे एव सत्य-

**परिवर्जनेन यतो निश्चिता स्थितिः, इति बाध्यबाधकव्यवहार[1] उपपन्नः, नीलादिवत् किल तानपि व्यवहारान् स एव परमेश्वरः स्वातन्त्र्यात् आभासयति तत् तेऽपि सत्या एवेति ॥ ६ ॥**

---

त्वम् तथापि तद् दण्डापूपिकान्यायसिद्धमेव न यत्नापेक्षम्, इत्यलम्। उपसंहारं करोति **"एवम्"** इति। **पूर्वज्ञानस्य**—पूर्वं भातस्य शुक्तिकायां रजतज्ञानस्य, **परिवर्जनेन**—प्रमातृस्वातन्त्र्यकृतेन उन्मूलनेन, **निश्चिता**—निश्चय-विषयतां गता, **स्थितिः**—शुक्तिकाज्ञानस्वरूपम्, **इति**—अतः कारणात्, **उपपन्नः**, उपपत्त्या सिद्ध इत्यर्थः। ननु कथमनया इह[2] भ्रमज्ञानं दर्श्यते इत्यत आह **"नीलादिवत्"** इति। **तान् व्यवहारानपि**—भ्रमज्ञानादिरूपान् व्यवहारानपि, **स एव**—सत्यज्ञानादिनिर्मातृत्वेनाभिमत एव। **तत्**—ततः कारणात्, **ते अपि**—भ्रमज्ञानादिरूपा व्यवहारा अपि। **"इति"** शब्दो व्याख्या-समाप्तौ। अयं भावः। सत्यासत्यतया मतं सर्वं भाववृन्दं यदि प्रकाशात्मतया दृश्यते तदा सर्वम् अविशेषेण परमार्थसदेव, यदि तु भावतया तदा सर्वमपरमार्थ-मेवेति का भ्रमज्ञानं प्रति असत्यत्वाशङ्का इति॥ ६॥

अथ सप्तमस्य श्लोकस्यावतरणिकां करोति **"अत्र"** इति।

---

1. अतः बाध्यबाधकव्यवहारः—K.S.S.

2. The manuscript itself gives an alternative reading for this sentence: ननु कृतमनया इह भ्रमज्ञान-दर्शया, but both the readings are unsatisfactory, because, if we adopt the printed reading, it is not clear what, in the text, अनया stands for and 'कथम्' has to be so interpreted as to fit in with what follows. The second reading has the word 'दर्शया' which is ungrammatical. Could the text have been : ननु कृतमनेन भ्रमज्ञानदर्शनेन ?

**अत्र परकीयं मतम् आशङ्कते दूषयिष्यामीतिः—**

**विविक्तभूतलज्ञानं घटाभावमतिर्यथा।**
**तथा चेच्छुक्तिकाज्ञानं रूप्यज्ञानाप्रमात्ववित् ॥७॥**

**इह शुक्तिकाज्ञानं स्वात्मानं संविदत् स्वात्माभि[1] प्रमाणत्वं बुध्यते, 'तत्परिच्छिनत्ति' इति न्यायात्, तत्परिच्छेदनान्तरीयकश्च अन्यव्यवच्छेद इत्यशुक्तिज्ञानरूपस्य रजतज्ञानस्य अप्रमाणत्ववेदनं तदेव उच्यते यत् एतत् शुक्तिकासंवेदनाभिन्नप्रमाणत्ववेदनम्, न च एतत् अपूर्वं यत्**

---

अत्र टीका :–

**अत्र**–अस्मिन् विषये, **परकीयं मतम्**–बौद्धमतम्। किमर्थमाशङ्कते इत्यत आह **'दूषयिष्यामि'** इति, दूषणधियेत्यर्थः।

एवम् अवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"विविक्त"** इति।

अत्र टीका :–

**इह**–अत्र लोके, **शुक्तिकाज्ञानम्**–पूर्वं रजतज्ञानविषयीकृतशुक्तिकाविषयं "शुक्तिकेयम्" इति ज्ञानम्, **स्वात्मानम्**–शुक्तिकाज्ञानरूपं निजं स्वरूपम्, **संविदत्**–स्वप्रकाशत्वेन स्वसंवेदनविषयतां नयत्, **स्वात्माभिन्नम्**–स्वरूपत्वेन स्थितम्, **प्रमाणत्वम्**–निजं प्रमाणभावम्, **बुध्यते**–स्वात्मवत् अनुभयते। कुतः? **"तत्परिच्छिनत्ति" इति न्यायात्,** बौद्धैरुच्यमानादस्मान्न्यायाद्धेतोरित्यर्थः। **तत्परिच्छेदनान्तरीयकश्च**–तद्रूपस्वात्मपरिच्छेदाव्यभिचारी च, **अन्यव्यवच्छेदः**–अतद्रूपरजतज्ञानव्यवच्छेदः भवति। तदुक्तम् :–

"तत्परिच्छिन्नवर्ति अन्यबुद्धचवच्छिन्नवर्ति"

इति। **इति**—अतः कारणात्। **अशुक्तिज्ञानरूपस्य**—शुक्तिज्ञानापेक्षयाऽतद्रूपस्य, **अप्रमाणत्ववेदनम्**–अप्रमाणत्वज्ञानम्, पण्डितैः **तदेवोच्यते यदेतत् शुक्तिकासंवेदनाभिन्नप्रमाणत्वसंवेदनम्**–शुक्तिकाज्ञानाभिन्नं तत्प्रमाण-

---

1. प्रमाणम्—K.S.S.

वस्त्वन्तरज्ञानमेव वस्त्वन्तराभावज्ञानम् इति, शुद्धभूभागग्रहणमेव हि घटाभावग्रहणम्[1] इति प्रसिद्धमेतत् । एवम् अप्रमाणत्वसंवेदनमेव[2] रजतज्ञानस्य बाध्यत्वम् उच्यते, अतश्च बाध्यबाधकत्वम् एवं सिद्धम् इति चेत् अस्माभिः उच्यते—तत् किं प्रमात्रैक्येनेति ॥ ७ ॥

अत्र प्रसङ्गात् अभावव्यवहारस्य सिद्धौ तत्त्वमुपपादयिष्यन् दृष्टान्तमेव तावत् परदर्शने दूषयतिः—

**नैवं शुद्धस्थलज्ञानात्सिद्ध्येत्तस्याघटात्मता ।**
**न तूपलब्धियोग्यस्याप्यत्राभावो घटात्मनः ॥ ८ ॥**

---

त्वज्ञानं भवति, **एतदपूर्वम्**—नवीनमुल्लिखितं वस्तु, **यत्**—यतः कारणात्, **वस्त्वन्तरज्ञानमेव वस्त्वन्तराभावज्ञानं** भवति, अतद्व्यवच्छेदेनैव तद्व्यवस्थासंभवात् । **"इति"** शब्दो दार्ष्टान्तिकोक्तिपर उत्तरार्धव्याख्यासमाप्तौ । समर्थकं दृष्टान्तं वक्तुं तद्वाचकं पूर्वार्धं व्याचष्टे **"शुद्ध"** इति । हि—यस्मात् **शुद्धभूभागग्रहणमेव**—घटरहितभूभागग्रहणमेव, **घटाभावग्रहणं** भवति, न तु अभावाख्यस्य स्वतन्त्रस्य ग्रहणं घटाभावग्रहणं भवति, **इति**—एवम्, **एतत् प्रसिद्धं** भवति, दृष्टान्तस्य सूत्रे यथातथाशब्दाभ्यां द्योतितं दार्ष्टान्तिके योजनमिह हेतुहेतुमद्भावेनैव कृतम् । ननु एतेन बाध्यबाधकभावस्य किमायातमित्यत आह **"एवम्"** इति । **अप्रमाणत्वसंवेदनम्**—अप्रमाणत्वज्ञानमेव । फलितमाह **"अतश्च"** इति । **एवम्**—अनेन प्रकारेण, **सिद्धम्**—सिद्धिं गतम्, **इति**—एवम्, **चेत्**—यदि, **अस्माभिः**—बौद्धप्रख्यैः **उच्यते**, चेच्छब्दापेक्षितं वस्तु सूत्रेऽनुक्तमपि शेषत्वेन व्याचष्टे **"तत्"** इति । तदा **प्रमात्रैक्येन किं** भवति बाध्यबाधकभावस्य तद्विनैव सिद्धत्वात् न किंचिद् भवतीत्यर्थः ॥ ७ ॥

अथाष्टमस्य श्लोकस्यावतरणिकां करोति **"अत्र"** इति ।

---

1. घटाभावज्ञानं भवति—K.S.S.
2. अप्रमाणतासंवेदनम्—K.S.S.

**यो दृष्टान्त उक्तः स एव न, कुत इति चेत् उच्यते "इह भूतलं न घटः" इति तादात्म्येन अभावो व्यवहर्तव्यः कदाचित्, कदाचित् व्यतिरेकेण 'इह भूतले घटो न' इति । तत्र शुद्धभूतलज्ञानात् आद्योऽयं व्यवहारः सिध्यति, यत्र दृश्यत्वं न उपयोगि, उपलब्धिलक्षणप्राप्तिरपि हि यस्य नास्ति पिशाचादेः स्वभावबलात्, यस्य वा शब्दादेः तद्ग्राहक-**

---

अत्र टीका :–

प्रसङ्गात्–दृष्टान्तीकरणरूपात्, **तत्त्वम्**–परमार्थम्, **परदर्शने**–बौद्धमते। एवम् अवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"नैवम्"** इति।

अत्र टीका :–

**"नैवम्"** इति व्याचष्टे "यः" इति। **"उच्यते"**इति प्रतिज्ञां सफलीकर्तुं **"शुद्ध"** इत्यादि पूर्वार्धं व्याचष्टे "इह" इति। **तादात्म्येन**–सामानाधिकरण्येन, **कदाचिद्**, भूतलस्वरूपव्यवस्थाकरणार्थं तादात्म्याभावग्रहे इत्यर्थः। **कदाचित्**–भूतले घटाभावग्रहणकाले, **व्यतिरेकेण**–वैय्यधिकरण्येन, अभावो व्यवहर्तव्य इति पूर्वेण संवन्धः। **"तत्र"** इति, द्वयोर्व्यवहारयोर्मध्य इत्यर्थः। **शुद्धभूतलज्ञानात्**––घटरहितभूतलज्ञानात्, **आद्यः**––तादात्म्याभावरूपः, **व्यवहारः**––अभावव्यवहारः, **यत्र**––यस्मिन् आद्ये तादात्म्याभावव्यवहारे, **दृश्यत्वम्**––अभावप्रतियोगिनः अवश्यं द्रष्टुं योग्यत्वम्, **नोपयोगि**–उपयुक्तं न भवति, भूतलस्वरूपव्यवस्थायां हि तद्व्यतिरिक्तस्य सर्वस्य दृश्यस्य घटादेः स्वभावविप्रकृष्टत्वादिबलेन अदृश्यस्य वा पिशाचादेरविशेषेण तदात्मताया अभावो गृह्यते, न तु परमते संसर्गाभावे इह भूतले नास्तीत्येवंरूपे दृश्यस्य घटादेरेव न त्वदृश्यस्य[1] पिशाचादेरपीत्यभिप्रायः। अत्र स्वयमपि समर्थनं करोति **"उपलब्धि"** इति। हि–यस्मात् कारणात्, उपलब्धिरेव लक्षणम्-असाधारणो धर्मः तस्य प्राप्तिः–आसादनम्, सत्त्वे उपलम्भयोग्यत्वमिति यावत्। सा, **स्वभावबलात्**–तादृक्स्वभावतावशेन, **यस्य पिशाचादेर्नास्ति**

---

1. नत्वदृश्यस्य वा पिशाचादेरपि—C.

**श्रोत्रादिसामग्रीसाकल्यस्य तत्र एकज्ञानसंसर्गिवस्त्वन्तरप्रतिपत्त्यभावेना-निश्चयात्[1] तस्यापि तादात्म्येनायमभावो[2] गृह्यते "भूतलं न पिशाचो न**

न हि सन्नपि पिशाचादिरुपलभ्यते तादृक्स्वरूपत्वात्, **वा**–पक्षान्तरे, तद्ग्राह-कम्–शब्दग्राहकं यत् श्रोत्रादिसामग्रीसाकल्यं तस्य। **तत्र**- तस्मिन् शुद्धभूतल-ग्रहणसमये। एकज्ञानेन–साकल्यकार्येणान्यदा सकलाभावप्रतियोगिग्राहकेण तेनैव ज्ञानेन, संसर्गि—संसृज्यमानम्, तस्य विषयीभवदिति यावत्, यद् वस्त्वन्तरम्–आन्तरप्राणस्पन्दादिजनितशब्दादिरूपं किमपि वस्तु, तस्य या प्रतिपत्तिः तस्या अभावेन–अभावात् हेतोः, **अनिश्चयात्** हेतोः, यस्य शब्दादेरुपलब्धिलक्षणप्राप्तिर्नास्ति, तस्मिन्समये ग्रहणोपायाभावात् यस्य वस्तुनः उपलम्भयोग्यत्वं नास्तीति यावत्, आदिशब्दद्वयेन श्रोत्रेतरेन्द्रियग्रहणं तद्ग्राह्य-शब्देतरविषयग्रहणञ्च। **तस्यापि**–स्वभावविप्रकृष्टस्य पिशाचादेः ग्राहककारण-सामग्रीविप्रकृष्टस्य शब्दादेश्च, "अपि" शब्दात् उपलब्धिलक्षणप्राप्तस्य वस्तुजात-स्यापि ग्रहणम्, **तादात्म्येन**—तदात्मतया, सामानाधिकरण्येनेति यावत्, **अयमभावो गृह्यते**। कुत्रेत्यपेक्षायामुदाहरणमाह **"भूतलम्"** इति, एतेन भूत-लस्य पिशाचाद्यभावरूपत्वमेव सामानाधिकरण्येनोक्तम्। अयं भावः। पुरुषः वस्तु गृह्णन् तदितरसर्वव्यतिरिक्तमेव गृह्णाति, अन्यथा सङ्कीर्णतापत्तिः, तदितरसर्वव्यतिरेकेण ग्रहणमेव च फलतः तदितरसर्वाभावग्रहणम्, तदितरसर्वं च द्विविधम्, उपलब्धुं योग्यमयोग्यञ्चेति। तत्र किञ्चित् स्वभावविप्रकृष्टम्, यथा पिशाचादि परमाण्वादि च, किञ्चित्तु ग्रहणोपायविप्रकृष्टं यद् गृह्यमाणवस्तु-ग्राहकसामग्र्या विषयतां न याति इति उपलब्धुमयोग्यमपि द्विविधम्। उपलब्धुं योग्यन्तु एकप्रकारमेव, तत्र द्वयोरपि स्वभावविप्रकर्षोपायविप्रकर्षयोरभावात्, अन्यथोपलभ्यत्वायोगात्, इति स्फुटमेव शुद्धस्थलज्ञानात्–केवलस्थलज्ञानात् तस्य स्थलस्याघटात्मतासिद्धिः–समस्तघटादिपदार्थाभावतासिद्धिरिति।

1. °प्रतिपत्त्यभावेनापि निश्चयात्—K.S.S.
2. अभावः व्यवहार्यः—K.S.S.

**शब्दः" इति, यत्र तु दृश्यत्वं विशेषणम् अवश्यम् उपयोगि तत्र व्यतिरेकेण अभावे व्यवहर्तव्ये न एषोऽभ्युपायः ॥ ८ ॥**

**कुत इति चेत्–अतिप्रसङ्गादिति ब्रूमः । तमेव दर्शयति:—**

**विविक्तं भूतलं शश्वद् भावानां स्वात्मनिष्ठितेः ।**
**तत्कथं जातु तज्ज्ञानं भिन्नस्याभावसाधनम् ॥ ९ ॥**

---

एवं पूर्वार्धं व्याख्याय कदाचिद् व्यतिरेकेणेत्यस्य विस्तारं कर्तुं द्वितीयमर्धं व्याख्यातुमाह **"यत्र तु"** इति । **यत्र तु**—यस्मिन् द्वितीये व्यतिरेकेणाभावव्यवहारे, संसर्गाभावव्यवहारे इति यावत्। अभावो हि सङ्क्षेपेण द्विधैव, तादात्म्याभावः संसर्गाभावश्चेति । **दृश्यत्वं विशेषणम्**—उपलब्धिलक्षणप्राप्तिरूपं विशेषणम्, **उपयोगि**, भवति, अन्यथा तत्र स्थितस्यापि स्वभावविप्रकृष्टस्य पिशाचादेः ग्राहकसामग्रीविप्रकृष्टस्यापि शब्दादेरभावविषयत्वापातादिति भावः । **तत्र**—तस्मिन्, **व्यतिरेकेण**—भूतलाधेयत्वरूपेण भूतलाद् भेदेन, **व्यवहर्तव्ये**—व्यवहारविषये अभावे, **एषः**–केवलभूप्रदेशदर्शनरूपः, **अभ्युपायः**—तदितरसर्वाभावग्रहणोपायः न भवति, तत्र भूतलमात्रग्रहणेन तद्गतस्य कस्याप्यभावो न वक्तुं शक्यः, तत्र स्थितस्यादृश्यस्य पिशाचादेरपि अभावव्यवहारविषयत्वप्रसङ्गादिति भावः ।

एवमत्र योजना, उपलब्धियोग्यस्यापि-उपलब्धिलक्षणं प्राप्तस्यापि, घटात्मनः–घटस्वरूपस्य, अत्र भूतले शुद्धस्थलज्ञानात् अभावः सिध्येत्, उपलब्धिलक्षणं प्राप्तस्य पिशाचादेरभावसिद्धौ का कथेत्यपिशब्दाभिप्रायः, अन्ये हि वादिनः उपलब्धियोग्यस्य शुद्धभूतलज्ञानेनाभावं साधयन्त्येव, अस्माकं तदपि नेष्टम् ॥ ८ ॥

अथ नवमस्य श्लोकस्यावतरणिकां करोति **"कुतः"** इति।

अत्र टीका :–

**कुतः**–घटात्मनः अभावः कुतः कारणात् न सिद्ध्येत्, **इति चेत्**–एवं यद्यवोचः, तदा **अतिप्रसङ्गादिति ब्रूमः**, अतिप्रसङ्ग एवात्र हेतुरिति भावः । ननु किंरूपोऽसावतिप्रसङ्ग इति शिष्यप्रश्नमाशङ्क्याह **"तमेव"** इति । सूत्रकार एव दर्शयतीति वयं किमर्थं यतामह इति भावः ।

**विद्यमानेऽपि घटे भूतलं शुद्धमेव, न हि भावा मिश्रीभवन्ति, ततश्च तदापि शुद्धभूतलज्ञानम् अस्ति, इति सत्यपि घटे कथम् अभावो व्यतिरेकेण न व्यवह्रियते "अत्र भूतले घटो नास्ति" इति, 'तज्ज्ञानम्' इति विविक्तभूतलभागज्ञानम्, 'जातु' इति कस्यांचिदेव दशायां घटासंनिधानरूपायाम्, भिन्नस्य घटस्य अभावं साधयति न तु सर्वदा इति केन प्रकारेण**

---

एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"विविक्तम्"** इति।

अत्र टीका :–

**"शश्वत्"** इति पदं व्याचष्टे **"विद्यमानेपि"** इति। "अपि" शब्दादविद्यमाने तु तराम्, तथा च **"शश्वत्"** नित्यमित्यर्थः, **"विविक्तम्"** इति व्याचष्टे **"शुद्धम्"** इति। **शुद्धमेव**–स्वरूपमात्रे स्थितमेव। कुत इत्यपेक्षायाम **"भावानां स्वात्मनिष्ठितेः"** इति पदं व्याचष्टे **"न हि"** इति। **मिश्रीभवन्ति,** सङ्कीर्णीभवन्तीत्यर्थः, तथा चोदकाहरणार्थं पटस्यापि ग्रहणमापद्येतेति भावः। **ततश्च**–तस्माद्धेतोश्च, **तदापि**–घटावस्थानेऽपि। पूर्वार्धाविष्टम्भेनोत्तरार्धं व्यतिरेकरीत्या व्याचष्टे **"इति"** इति। **इति**–अतः कारणात्, **सत्यपि घटे कथम्**–केन प्रकारेण, **अभावो व्यतिरेकेण न व्यवह्रियते**–व्यवहारविषयतां न नीयते। व्यतिरेकमेवानुकृत्याह **"अत्र भूतले घटो नास्ति"** इति। व्यतिरेकरीत्योत्तरार्धस्य वाक्यार्थमुक्त्वा तस्यैवान्वयरीत्या पदार्थमाह **"तज्ज्ञानम्"** **"इति विविक्तभूतलज्ञानम्"** इति। **"जातु"** इति व्याचष्टे **"कस्यांचिदेव दशायाम्"** इत्यादि। दशामेव स्फुटयति **"घट"** इति। **"भिन्न"** पदस्य वाच्यमाह **"घटस्य"** ति। **"अभाव"** इत्यादि पदं व्याचष्टे **"अभावम्"** इति। **"साधयति"** इत्यनेन कर्तर्यत्र ल्युट् इति द्योतितम्। 'जातु' शब्दस्य व्यावर्त्यमाह **"न तु"** इति। **केन प्रकारेण भवेत्,** न केनापीत्यर्थः। अवतरणिकायां हेतुत्वेनोक्तमतिप्रसङ्गं सूच्यत्वेनाह **"एतेन"** इति। **आपतितम्**–

भवेत्, एतेन अत्र भूतले पिशाचो नास्ति इत्यपि स्यादिति आपतितं मन्तव्यम् ॥ ९ ॥

नन्वेवं व्यतिरेकाभावनिष्ठो व्यवहारो लोके तावत् अविगीतः कस्यांचिदेव दशायां दृष्टः, तत्र का गतिरित्याशङ्क्य चिरन्तनैरपरिदृष्टं तत्सिद्धिप्रकारं दर्शयति:—

**किं त्वालोकचयोऽन्धस्य स्पर्शो वोष्णादिको मृदुः।**
**तत्रास्ति साधयेत्तस्य स्वज्ञानमघटात्मताम् ॥ १० ॥**

इह भाव एव भावान्तरस्य अभाव इति व्यवहर्तव्यः इति अयं तावत् अपरित्याज्यः प्रातीतिकः पन्थाः, तत्र भावस्य भावान्तरेण य

---

प्रसङ्गादायातम्, **मन्तव्यम्**—ज्ञातव्यम्, **"निष्ठितेः"** इत्यत्र "नेर्गदनद"[1] इति षत्वम्, तेन स्वात्मस्थितेरित्यर्थः ॥ ९ ॥

अथ दशमस्य श्लोकस्यावतरणिकां करोति **"नन्वेवम्"** इति।

अत्र टीका :—

**व्यवहारः**—भूतले घटो नास्तीत्येवंरूपः, **अविगीतः**—अदूषितः, स्फुट इति यावत्, **कस्यांचिदेव दशायाम्**—घटादिसन्निधिरूपायाम्, **गतिः**—उपायः, **"०परिदृष्टम्"** इति, कथनस्य तु का कथेति भावः, चिरन्तनैर्हि शुद्धभूतलदृष्टेरेवाभावसाधकत्वमुक्तम् न चैतद्युक्तम्, उक्तयुक्तेः। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"किन्तु"** इति।

अत्र टीका :—

श्लोकं व्याख्यातु प्रक्रियां करोति **"इह"** इति। **प्रातीतिकः**—प्रतीतिसिद्धः, **पन्थाः**—मार्गः, **तत्र**—तस्मिन् पथि, अपरित्याज्ये सति, **भावतदभावयोः**—भावाभावयोः। ननु ततः किमित्यत आह **"ततश्च"** इति। वस्त्वन्तरमेव विशेषतः

---

1. The Sūtra नेर्गदनद (P. VIII—4—17) teaches णत्व and not षत्व।

आधार्याधारभाव: स एव भावतदभावयो:, ततश्च भूतले घटव्यतिरिक्तं वस्त्वन्तरं शिलादिकम् आलोकपुञ्जादिकं वा यत् चाक्षुषे ज्ञाने भाति तदेव व्यवह्रियते "भूतले घटाभाव:, भूतले घटो नास्ति" इति वा, यत्रापि नास्ति चक्षुर्व्यापारो नेत्रनिमीलनसंतमसादौ तत्रापि भूतले घटोचितकठिनस्पर्शविविक्तं मृदुम् उष्णं शीतम् अनुष्णाशीतं वा गृह्णन् तमेव अत्र घटाभाव इति व्यवहरति वायुस्पर्शस्य सर्वगस्य अवश्यंभावात्, इति वाक्यार्थ:। पदार्थस्तु—'किं तु' इति स्वमतोपक्षेपाय स्वप्रतिभाप्रश्नपरामर्श:[1], किं पुनरत्र न्याय्यमिति तत्राह 'तत्र' भूतले 'आलोकचय:' तावत् अस्ति ज्ञेय:, 'अन्धस्य उष्णादिक: स्पर्श:' अस्ति, 'तस्य' आलोकचयस्य

---

कथयति "**शिलादिकम्**" इति। **चाक्षुषे**—चक्षुषा कृते, **ज्ञाने**—प्रत्यक्षज्ञाने, **तदेव**—शिलादिकम् आलोकपुञ्जादिकं[2] वा। "**यत्रापि**" इति। "**आदि**" शब्देन नेत्रोपहत्यादेर्ग्रहणम्, अन्धस्य हि नेत्रोपहतिरेव चक्षुर्व्यापाराभावे कारणम्, **विविक्तम्**—भिन्नम्, **तमेव**—स्पर्शमेव। ननु यदि स्पर्शो न भवेत्तदा किं कार्यमित्यत आह "**वायु**" इति।

पदार्थकथनं प्रतिजानीते "**पदार्थस्तु**" इति। "**किन्तु**" शब्दस्य सूचनीयमर्थमाह "**स्वमत**" इति। स्वप्रतिभया कृत: प्रश्न: स्वप्रतिभाप्रश्न:, तस्य परामर्श: **स्वप्रतिभाप्रश्नपरामर्श:**। प्रश्नमेवानुकृत्याह "**किम**" इति। "**इति**" शब्द: प्रश्नानुकृतिसमाप्तौ। **तत्र**—तस्मिन् प्रश्ने। किमाहेत्यपेक्षायां श्लोकार्थं कर्मत्वेन व्याचष्टे "**तत्र**" इति। "**तत्र**" इति पदं व्याचष्टे "**भूतले**" इति। **आलोकचय:**—आलोकपुञ्ज:, **ज्ञेय:**—दृश्य:। यद्यपि नेत्रसहितस्यापि स्पर्शोऽस्ति तथापि तस्य तदपेक्षाभावादेवमुक्तम्। एतेन "**तत्रास्ति**" इत्यन्तं कृतव्याख्यम्। "**साधयेत्**"

---

1. प्रतिभाप्रश्नपरामर्श:—K.S.S.
2. आलोकपुंजादिकं चैव—C.

**स्पर्शस्य वा यत् 'स्वज्ञानम्' अन्यघटादिविविक्तेन स्वेन रूपेण ज्ञानम् तत् कर्तृ, 'तस्य' आलोकादेः अघटरूपतां घटाभावरूपतां 'तत्र' भूतले साधयति इति शक्योऽयमर्थः। 'शकि लिङ् च' (पा० सू० ३-३-१७२) इति लिङ्। आन्तरप्राणस्पन्दनजनितसूक्ष्मशब्दाकर्णनाच्च श्रोत्रादिसाकल्यं संभवायमानः तमेव शब्दम् एकज्ञानसंसर्गिणं शृण्वन् शब्दान्तरं निषेधयति 'न इह अन्यः शब्दः' इति। तत्सूक्ष्मशब्दाभावमपि**[1]

---

इत्याद्यवशिष्टं श्लोकखण्डं व्याचष्टे **"तस्य"** इति। **"तस्य"** इति पदं व्याचष्टे **"आलोक"** इति। तत्र नेत्रसहितापेक्षया **"आलोक"** इति, अन्धापेक्षया तु **"स्पर्शस्य वा"** इति, सम्वन्धि इति शेषः। **"स्वज्ञानम्"** इति व्याचष्टे **"अन्य"** इति। एतेन "स्वज्ञानम्" इत्यस्य तृतीयासमासत्वं द्योतितम्। **तत्**-ज्ञानम्। **"अघटात्मताम्"** इति व्याचष्टे **"अघट"** इति, अस्यापि पर्यायमाह **"घटाभाव"** इति। लिङर्थमाह **"शक्योयम्"** इति। ननु कथं लिङोऽयमर्थ इत्यत आह **"शकि"** इति। नन्वालोकचयदर्शनेन नेत्रादिसाकल्यनिश्चययुक्तस्य भूतले समस्तालोकचयव्यतिरिक्तनेत्रदृश्यवस्त्वभावज्ञानं भवतु, शब्दादेरभावज्ञानं कथं तत्र स्यात्, न हि तदा तत्र कस्यापि शब्दस्य श्रवणेन शब्दग्राहकश्रोत्रादिसामग्री-साकल्यज्ञानमस्त्येवेत्यत आह **"आन्तर"** इति। बहिः शब्दाभावेपि हि पिहितकर्णः प्राणजनितमान्तरं सततमच्चरन्तमनाहताख्यं शब्दं शृणोत्येवेत्येवमुक्तम्। एक-ज्ञानेन—समस्तशब्दग्रहणयोग्येन श्रोत्रकृतेन ज्ञानेन, संसर्गिणम्—संसृज्यमानम्। नन्वत्यवहितत्वे तमपि न श्रृणोत्येवेत्यत आह **"तत्"** इति। तस्य सूक्ष्मतमस्य शब्दस्याभावः तम्, सूक्ष्मतमः यः अन्तर्नादः तत्रावहिते श्रोत्रे यस्य सः, **वेदयते**—

---

1. तत् सूक्ष्मशब्दाभावमपि—K.S.S.
The editors of the K.S.S. seem to have taken तत् as a separate word, as is seen in the printed text.

**सूक्ष्मतमान्तर्नादावहितश्रोत्रो वेदयते, रसगन्धस्पर्शाभावोऽपि दन्तोदकरसं त्रिपुटिकागन्धं कायीयं च स्पर्शं संवेदयमानेनैव[1] रसाभावो वेद्यः, न हि एकज्ञानसंसर्गयोग्यवस्त्वन्तरोपलम्भेन विना उपलब्धिकारणसाकल्यनिश्चयोऽस्ति, इति एकान्त एषः । अचिरप्रवृत्ततत्तद्विषयानुभवकल्पितस्य[2]**

अनुभूयते[3], आन्तरशब्दानां दशधा भिन्नत्वात् । तदुक्तम् :–

"घोषादिदशधा शब्द भजतिताय शंभवे[4]"

इति । समाधौ लीनस्य समस्तान्तरशब्दाभावबोधः सततोच्चरदपरिमिताहंपरामर्शाविधानकृतो ज्ञेयः, तदभावस्त्वसंभवोपहत एवेत्यलम् । रसाद्यभावग्रहणं साधयति **"दन्तोदक"** इति । **दन्तोदकरसम्**–रसनेन्द्रियस्थिते लालारूपे जले मधुरादिवस्तुदर्शनेन प्रोद्भवनशीलं शक्तितया सर्वदा स्थितं रसविशेषम्, **संवेदयमानेन**–अनुभवता, अत एव रसनेन्द्रियावैकल्यं संभावयमानेन, **रसाभावः**–आस्वादाभावः, **वेद्यः** भवति । एवमन्यत्रापि योजनीयम् । **त्रिपुटिका**—नासान्तर्वर्तिनी सर्वदा गन्धयुक्ता, तदुक्तम् :–

"एवं घ्राणान्तरे गन्धो रसो दन्तोदके स्फुटः"

इति । **कायीयम्**–कायसंबन्धिनम्, कायस्य पार्थिवत्वेन स्फुटं स्पर्शवत्त्वात् । आन्तरस्य तेजसः नेत्रनिमीलनेनैव दृश्यत्वात् न नेत्रसाकल्यज्ञानहेतुत्वमस्ति इति तस्य नेह ग्रहणम् । पूर्वं स्पर्शेन अन्धस्य तदाधारघटाभावज्ञानमुक्तम्, इह तु कायीयस्पर्शेनान्यस्पर्शाभाव इति न पौनरुक्त्यम् । ननु कुत एतदित्यत आह **"न हि"** इति । **हि**—यस्मात् कारणात् । **इति**–एषः, **एकान्तः**–निश्चयः भवति । इत्येष

1. संवेदयमानेनैव संवेद्यः—K.S.S.
2. अचिरप्रवृत्तितत्तद्विषय–K.S.S.
3. अनुभूयते । The active formation seems to be wanted here.
4. The text here is corrupt and we have not taken the liberty of correcting it, as it is a quotation which we have not been able to trace.

**तदैव ध्वंसानाशङ्कनात् करणस्य कारणसाकल्यनिश्चयः किम् एकज्ञानसंसर्गितया इति चेत् न, तत्तदभावोपलिप्सुर्हि प्रयत्नेन तत्तदिन्द्रियाधिष्ठानं व्यापारयन्नेव लक्ष्यते ॥ १० ॥**

---

कः ? एकज्ञानसंसर्गयोग्यानां मध्ये यद्वस्त्वन्तरं तस्य उपलंभेन विना उपलब्धिकारणसाकल्यस्य निश्चयः नास्ति । अयमत्राभिप्रायः । पुरुषस्य तावदभावग्रहणे निजेन्द्रियसाकल्यतापि[1] निर्णेया, अन्यथा इन्द्रियवैकल्यदोषकृततद्वस्तुग्रहणाभावेन तदभावं वदन् उपहासविषयतामेव भजते, तन्निजेन्द्रियसाकल्यज्ञानञ्च न समस्ततद्ग्राह्यग्रहणापेक्षं किन्तु तद्ग्राह्यमध्ये यद्येकमेव कंचिदर्थं गृह्णाति तेनैव तत्साकल्यं जानाति ममेन्द्रियं पुष्टमेव वर्तत इति, ततश्चागृहीतानामन्येषामभावं निश्चिनोति, ते इह न सन्तीति । तत्र तदिन्द्रियकार्यं सर्वग्राह्यज्ञानम् एकज्ञानम्, तद्विषयभूतं यदेकं वस्तु-संसर्गयोग्यवस्त्वन्तरम्, तस्य यज्ज्ञानं तेन ग्राहकसामग्रीसाकल्यज्ञानम्, अन्यथोपायविप्रकर्षेणागृहीतमपि वस्तु नाऽभावव्यवहारयोग्यं पिशाच इव स्वभावविप्रकर्षेणेत्यलम् । अत्र शिष्यप्रश्नं शङ्कते "**अचिर**" इति। अचिरप्रवृत्तः—समनन्तरसंपन्नः यः तत्तद्विषयानुभवः तेन कल्पितस्य—अस्तित्वेन कल्प्यमानस्य, **करणस्य**—ग्राहकसाकल्यरूपस्य प्रमाणस्य, **तदैव**—समनन्तरमेव, क्रियमाणवस्तुग्रहणसमय एव, **ध्वंसनाशङ्कनात्**—नाशशङ्काकरणायोगात्, **कारणसाकल्यनिश्चयः** भवति । अतः **एकज्ञानसंसर्गितया** किं भवति, व्यवतत्वान्न किंचिद् भवतीत्यर्थः । उत्तरमाह "**न**" इति । अत्र हेतुमाह "**तत्तत्**" इति । तेषां तेषां वस्तूनामभावमुपलब्धुमिच्छुः **तत्तदभावोपलिप्सुः**, तेषां तेषाम्—**तत्तदर्थ**ग्राहकाणाम, चक्षुरादीनामिन्द्रियाणाम् अधिष्ठानम्—गोलकादिरूपम्, **व्यापारयन्नेव**—सन्ति वा न वेति ज्ञानार्थं ग्रहणव्यापारं प्रति योजयन्नेव न तूदासीनतया स्थापयन्, **लक्ष्यते**—दृश्यते । तथा चैकज्ञानसंसर्गिवस्त्वन्तरज्ञानेन ग्राहकसामग्रीसाकल्यज्ञानमवश्योपयोग्येवेति भावः ॥१०॥

अथैकादशस्य श्लोकस्यावतरणिकां करोति "**नन्वेवम्**" इति ।

---

1. साकल्यता । The use of two भावप्रत्ययs is rather strange.

नन्वेवम् अदृश्यस्यापि पिशाचादेः निषेधव्यवहारो व्यतिरेकेणापि प्राप्नोति, स हि आलोकपुञ्जो यथा घटात् अन्यः तद्वत् पिशाचादेरपि। तदेतत् आशङ्क्याह: —

**पिशाचः स्यादनालोकोऽप्यालोकाभ्यन्तरे यथा।**
**अदृश्यो भूतलस्यान्तर्न निषेध्यः स सर्वथा॥ ११॥**

आलोकपुञ्जो यद्यपि पिशाचाद् व्यतिरिक्तो यद्यपि च आलोकोऽस्ति अपिशाचात्मा इत्येतावत् सिद्ध्यति तथापि अत्र 'पिशाचो नास्ति' इत्येतत् अशक्यम् अध्यवसातुम्, घटो हि आलोकपूरमध्येऽपि[1] असंभाव्यः, घट-

अत्र टीका :–

**एवम्**—तादात्म्याभाववद्व्यतिरेकाभावव्यवहारेऽपि वस्त्वन्तरदर्शनस्यैव न तु शुद्धभूप्रदेशदर्शनस्य साधकत्वे सति, **अदृश्यस्य**—सत्त्वेपि द्रष्टुमयोग्यस्य, "**अपि**" शब्देन तादात्म्याभावव्यवहारे पिशाचनिषेधस्य युक्ततामेव सूचयति, इह त्व-युक्तताम्। **व्यतिरेकेणापि**, "भूतले नास्ति" एवंरूपे व्यतिरेकेण निषेधव्य-वहारेऽपीत्यर्थः। कुत इत्यपेक्षायामाह "**स हि**" इति। **तदेतत्**—समनन्तरोक्तं वस्तु।

एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**पिशाचः**" इति।

अत्र टीका :–

"**पिशाचः स्यादनालोकोपि**" एतद्व्याचष्टे "**आलोक**" इति। **यद्यप्यालोकपुञ्जः**—आलोकचयः, **पिशाचाद् व्यतिरिक्तः**। एतदेव पुनः पर्या-यान्तरेण सुबोधीकर्तुं कथयति "**यद्यपि**" इति। **यद्यपि आलोकः अपिशाचा-त्मा अस्ति इत्येतावत्सिद्ध्यति**। "**अपि**" शब्दसूचितं वस्त्वाह "**तथापि**" इति। **तथापि अत्र**—भूतले, **पिशाचो नास्तीत्येतदध्यवसातुम्**—निश्चेतुम्,

1. अघटसंनिधौ–K.S.S.

**संनिधौ तत्र आलोकपूरासमर्पणात्[1], अतश्च सिद्ध्यतीदम् "अत्र घटो नास्ति" इति, पिशाचस्तु तादृक्स्वभावो यो भूतलमध्ये आलोकमध्येऽपि[2] वा भवन् भूतलस्य आलोकस्य वा तां निबिडतां न विहन्ति[3], ततश्च[4] आलोकमध्ये तस्य संभावनात् कथं व्यतिरेकेण निषेधव्यवहारः, एवं रूपमध्ये रसादेः संभावनात् तस्यापि अनिषेधः। यद्यपि अनालोकः आलोकात् अन्यः पिशाचः तथापि असौ भूतलस्य अन्तर्मध्येऽदृश्यो भवति इति**

---

**अशक्यम्,** शक्यं न भवतीत्यर्थः। कुत इत्यपेक्षायामाह "**घटो हि**" इति। **हि**—यस्मात्, **आलोकपूरमध्येऽपि**—आलोकचयमध्येऽपि, "**अपि**" शब्दाद् भूप्रदेशेऽपि, **असंभाव्यः**—संभावयितुमशक्यः, कुतः ? **घटसन्निधौ तत्र**— तस्मिन्नधःप्रदेशे, **आलोकपूरासमर्पणात्**— व्यवधानकारित्वेनालोकपुञ्जावकाशादानात्, आलोकमध्ये धारितं छत्रादिकं हि तावति प्रदेशे छायामेव करोति, भूतले तस्यासंभवस्तु आलोकपुञ्जव्यतिरिक्तत्वेन स्फुट एव। "**अतश्च**" इति इदं सिद्ध्यति" इति। इदं किम् ? **अत्र**—भूतले, **घटो नास्ति।** "**तु**" व्यतिरेके, **पिशाचः तादृक्**—तादृशः, स्वभावः—स्वरूपं यस्य तादृशः, भवति, **यः भूतलमध्ये आलोकमध्येऽपि वा भवन् भूतलस्यालोकस्य वा ताम्**—प्रसिद्धाम्, **निबिडताम्**—घनताम्, **न विहन्ति**—न नाशयति शून्यशरीरत्वात्। **ततश्चालोकमध्ये तस्य संभावनात्**- संभावयितुं शक्यत्वात्, **व्यतिरेकेण**—भूतलाधेयत्वेन, **निषेधव्यवहारः** कथं स्यात्। एनं न्यायमन्यत्राप्यतिदिशति "**एवम्**" इति। **तस्यापि**—रसादेरपि। एवं वाक्यार्थमुक्त्वा योजनासहितं पदार्थमाह "**यद्यपि**" इति। **यद्यपि,** "**अनालोकः**" इत्यस्य व्याख्यां करोति "**आलोकादन्यः**" इति। **तथापि**

---

1. आलोकपूरापसर्पणात्–K.S.S.
2. भूतलमध्येऽपि आलोकमध्येऽपि–K.S.S.
This reading seems to be better.
3. न प्रतिहन्ति—K.S.S.
4. अतश्च—K.S.S.

संभाव्यते यथा, तद्वदेव आलोकस्याभ्यन्तरेपि सोऽस्ति[1] इति संभाव्यत एव, ततश्च यद्यपि आलोकस्ततोऽन्यः इत्यनेन पथा निषिद्धः पिशाचः तथापि सर्वप्रकारेण न निषिद्धः इति तदभावनिबन्धनाः कथं तत्र व्यवहाराः प्रवर्तन्ताम् इति श्लोकार्थः ॥ ११ ॥

एवं प्रसङ्गात् अभावव्यवहारस्य तत्त्वम् उपदर्श्य प्रकृते योजयति:—

**एवं रूप्यविदा भावरूपा शुक्तिमतिर्भवेत्।**
**न त्वाद्यरजतज्ञप्तेः स्यादप्रामाण्यवेदिका ॥ १२ ॥**

---

**असौ पिशाचः, "भूतलस्यान्तः"** मध्ये, **अदृश्यः**—अतिसूक्ष्मत्वेन द्रष्टुं योग्यो न भवति **इति संभाव्यते**, एतेनात्र संभावनायां लिङिति द्योतितम्, **तद्वदेव**—तथैव, **आलोकस्याभ्यन्तरेपि सोऽस्तीति संभाव्यते एव, ततश्च यद्यपि आलोकः ततः**—पिशाचात्, **अन्यः** भवति अन्यस्यान्यरूपत्वायोगात्, **इत्यनेन पथा**—तदात्मतामार्गेण, **पिशाचः निषिद्धः, तथापि सर्वप्रकारेण न निषिद्धः** आलोकव्यतिरेकेणावस्थानस्य शङ्कास्पदत्वात्, **इति**—अतः कारणात्, **तदभावनिबन्धनाः**—पिशाचाभावनिबन्धनाः **व्यवहाराः तत्र**—भूतले, **कथं प्रवर्तन्ताम्**—येनालोकचयेन घटस्याभावः साध्यते तन्मध्येपि तस्य संभवास्पदत्वेन न प्रवर्तन्ते इत्यर्थः। उपसंहारं करोति **"इति"** इति। **इति**—एवम्, **श्लोकार्थः** भवति।

एवमत्र योजना। अनालोकोपि पिशाचः यथा भूतलस्यान्तः—अदृश्यः सत्त्वेपि द्रष्टुमयोग्यः स्यात् तथा आलोकाभ्यन्तरेऽपि स्यात् समानन्यायत्वात्। अतः इति शेषः। अतः स सर्वथा निषेध्यो न भवति। आलोकरूपतानिषेधविषयत्वेपि तदन्तर्वर्तितानिषेधायोगात्। अतश्च तस्य व्यतिरेकेणाभावो भूतले व्यवहर्तुमशक्य एवेति भावः॥ ११ ॥

अथ द्वादशस्य श्लोकस्यावतरणिकां करोति **"एवम्"** इति।

स्पष्टम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"एवम्"** इति।

---

1. आलोकस्याभ्यन्तरे सोऽस्ति—K.S.S.

**यथा आलोको घटाभाव इति आलोके गृहीते प्राक् गृहीतस्य घटस्य न किंचित् आयातम् तथैव शुक्तिज्ञानं रूप्यज्ञानाभाव इति इयत् संभाव्यते। यथा घटज्ञानं घटज्ञानप्रामाण्यसंवित् पटज्ञानाभावः पटज्ञानाभावप्रामाण्यसंवित् इयता च न पूर्वप्रवृत्तं पटज्ञानम् अप्रमाणीभवति, एषा हि तस्य घटज्ञानस्य स्वरूपचिन्ता सर्वा न ज्ञानान्तरस्य आद्यस्य किमपि अतो जातम्। एवं शुक्तिरियम् इति, न रजतम् इदम् इति च ज्ञानमेव स्वात्मना प्रकाशताम्, अहं शुक्तौ रजताभावे च प्रमाणं न तु रजते इति, तावता तु प्राक्तनस्य रजतज्ञानस्य न किंचित् वृत्तम् इति तद्विषयीकृतं रजतं कथम् असत्यं स्यात् ॥ १२ ॥**

---

अत्र टीका :–

**"एवम्"** शब्दं व्याचष्टे **"यथा"** इति। **न किञ्चिदायातम्**–न कापि बाधा संपन्ना। **रूप्यज्ञानाभाव**:–रजतज्ञानाभावः, **इयत्**–एतावन्मात्रम्, **संभाव्यते**–संभावयितुं शक्यते न तु रूप्यज्ञानस्य बाधा संभाव्यते। एतदेव सविस्तरं पुनरपि कथयति **"यथा"** इति। **पूर्वप्रवृत्तम्**–घटविषये पूर्वं प्रवृत्तम्, **पटज्ञानम्**–पटोऽयमिति ज्ञानम्। कुत इत्यपेक्षायामाह **"एषा हि"** इति। **ज्ञानान्तरस्य**–तत्रैव क्रमेण प्रवृत्तस्य पटोऽयमिति ज्ञानस्य। **किमपि**, कापि बाधेत्यर्थः। उपसंहारं करोति **"एवम्"** इति। प्रकाशनमेवानुकृत्य दर्शयति **"अहम्"** इति। एतच्च स्वात्मना प्रकाशनं प्रमातृद्वारेणैवास्य सिद्ध्यति, न हि ज्ञानं नाम प्रमातुर्भिन्नं यदहमिति परामर्शं कुर्यादिति न कोपि विरोधः। **तावता तु**–प्रकाशमात्रेण, **किञ्चित्**–कापि बाधा, **न वृत्तम्**–न संपन्नम्। **इति**–अतः कारणात्, **तद्विषयीकृतम्**–अबाधितरजतविषयीकृतम्, **रजतमसत्यं कथं स्यात्**, भ्रमस्थलेपि एकं प्रमातारं विना तस्यासत्यत्वं न युक्तमिति भावः। संभावनायां लिङ्॥ १२॥

अथ त्रयोदशस्य श्लोकस्यावतरणिकां करोति **"नन्विदम्"** इति।

नन्विदमित्यनेन तदेव परामृश्यते यत्र[1] रजतज्ञानम् अभूत् तत्रैव इदानीं 'न रजतम्' इति 'शुक्तिः' इति च ज्ञानं प्रमाणभूतं जातम्, तत् अतोऽनुमीयते—तत् 'प्राच्यं रजतज्ञानम् अप्रमाणम्' इति, न हि एतत् संभवति—विरुद्धविषयद्वयावगाहि[2] ज्ञानद्वयं प्रमाणम् एकत्र विषयीभवति इति, तदयम् आनुमानिको बाधव्यवहारो भविष्यति इत्याशङ्क्याह:—

**धर्म्यसिद्धेरपि भवेद्बाधा नैवानुमानतः ।**
**स्वसंवेदनसिद्धा तु युक्ता सैकप्रमातृजा ॥ १३ ॥**

न केवलं स्वसंवेदनात् न सिद्ध्यति बाधा, यावत् अनुमानतोऽपि

अत्र टीका :-

**यत्र**–परमार्थतः स्थितायां यस्यां शुक्तौ, **तत्रैव**–तस्यां शुक्तावेव, **प्रमाणभूतम्**–प्रमाणतया स्थितम्, **जातम्**–सम्पन्नम्। **तत्**–ततः कारणात्। **अतः**–अस्माद्धेतोः। किमनुमीयते इत्यपेक्षायामाह "**तत्**" इति। कुतो ऽनुमीयते इत्यपेक्षायामाह "**न हि**" इति। एतच्छब्दाकाङ्क्षां पूरयति "**विरुद्ध**" इति। **विरुद्धविषयद्वयावगाहि**-अन्योन्यव्यावृत्तस्वरूपशक्तिकारजताख्यविषयविषयम्, **ज्ञानद्वयम्**–पूर्ववृत्तं रजतमिदमितिज्ञानं तदनन्तरं प्रवृत्तं शुक्तिकेयमितिज्ञानम्, **एकत्र**–एकस्यां शुक्तौ। "**इति**" शब्दः प्रमेयसमाप्तौ। फलितमाह "**तदयम्**" इति। **आनुमानिकः**–अनुमानसिद्धः। एवमत्र प्रयोगः। पूर्ववृत्तं शुक्ताविदं रजतमिति ज्ञानमप्रमाणम्, इदानीं तत्रैव विरुद्धशुक्तिकेयमिति ज्ञानोत्पादादिति।

एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**धर्मी**" इति।

अत्र टीका :-

पूर्वार्धं व्याचष्टे "**न केवलम्**" इति। **स्वसंवेदनात्**—प्रत्यक्षानुभवात्। कुत इत्यपेक्षायां सूत्रोक्तं हेतुं योजयति "**धर्मिणः**" इति। "**अपि**" शब्दात्–

1. यत्—K.S.S.
2. विरुद्धविषयावगाहि—K.S.S.

न सिद्ध्यति, धर्मिणोऽसिद्धेः, अपिशब्दात् हेतोः व्याप्तेश्च, अपिः उभयत्र नेयः, इह धर्मिणि सिद्धे सिद्धेन हेतुना स्मर्यमाणव्याप्तिकेन साध्यधर्मायोगव्यवच्छेदोऽनुमानव्यापारः,[1] इह च प्राच्ये रूप्यज्ञाने धर्मिणि अप्रामाण्यं साध्यो धर्मः तत्र शुक्तिकाज्ञानं वा, न रजतम् इति ज्ञानं वा, तज्ज्ञानविषयीकार्यत्वं वा विषयगतं हेतूक्रियेत,[2] न चैतत् युक्तम् तत्काले प्राच्यरूप्यबोधस्य धर्मिणोऽभावात्, न चापि तस्य शुक्तिज्ञानादयो धर्माः, न च अपक्षधर्मात् साध्यसिद्धिः, अतः स्मर्यमाणं तद्धर्मि स्यात् इत्यपि असत्। अथ शुक्तिः न रजतज्ञानस्य विषय इति साध्यते शुक्तिकाज्ञान-

---

समुच्चयवाचिनः अपिशब्दात्। **हेतोः व्याप्तेश्च,** असिद्धेरिति शेषः। **उभयत्र नेयः,** धर्म्यसिद्धेरपि अनुमानतोपीति द्विर्योजनीय इत्यर्थः। कुत एतदित्यपेक्षायां समर्थनं करोति **"इह"** इति। साध्यधर्मस्य यः अयोगः—असंबन्धः, तस्य व्यवच्छेदः, साध्यधर्मेण तद्वत्त्वमिति यावत्, **अनुमानव्यापारः,** लक्षणया अनुमानव्यापार—विषय इत्यर्थः। **रूप्यज्ञाने**—रजतज्ञाने। **तत्र**—तस्मिन् साध्यधर्मे। ताभ्यां ज्ञानाभ्यां विषयीकार्यत्वं **तज्ज्ञानविषयीकार्यत्वम्, विषयगतम्**—शुक्तिगतम्। **"हेतूक्रियेत"** इति संभावनायां लिङ्। ननु त्रयमध्ये किञ्चिद्धेतूकरिष्याम एवेत्यत आह **"न चैतत्"** इति। कुतो न युक्तमित्यत आह **"तत्काले"** इति। **तत्काले**-शुक्तिज्ञानकाले न रजतमिति ज्ञानकाले वा, प्राच्यश्चासौ रूप्यबोधः—रजतबोधः, तस्य, **प्राच्यरूप्यबोधस्य,** "आदि" शब्देन न रजतमिति ज्ञानस्य विषयगतस्य तज्ज्ञानविषयीकार्यत्वस्य च ग्रहणम्। ननु ते तस्य धर्मा मा सन्तु ततः किमित्यत आह **"न च"** इति। **अपक्षधर्मात्,** पक्षावृत्तेर्हेतोरित्यर्थः। **स्मर्यमाणम्**—स्मृतिविषयीक्रियमाणम्, **तत्**—प्राच्यं रजतज्ञानम्, **"असत्"** इति, धर्मिसिद्धावपि हेतोरपक्षधर्मत्वादिति भावः। प्रकारान्तरेणानुमानं शङ्कते **"अथ"** इति।

---

1. साध्यधर्मावच्छेदकः—K.S.S.
2. हेतूक्रियते—K.S.S.

**विषयत्वात् इति, तत् यदि इदानीम् तदा सिद्धसाधनम्,[1] अथ पूर्वम् तदा तत्पूर्वस्वसंवेदनेन बाध्यविषयता। केन चैवं व्याप्तिर्गृहीता—यत्र इदानीम् अन्यत् ज्ञानम् तत्र पूर्वम् अन्यत् न भवति इति, अनुमानान्तरेण इति चेत्, अनवस्था। एतेन एतत् प्रत्युक्तम्—एकस्मिन् विषये कथं ज्ञानद्वयं स्यात् इति, को हि एकविषयतां तयोर्ज्ञानयोः[2] जानीयात्, ते हि तावत्**

---

इति—एवम्, **भाध्यत**, तथा च न धर्मिणः सिद्धिः, नापि हेतोरपक्षधर्मत्वमिति भावः। नन्वत्र हेतुः कः क्रियत इत्यत आह "**शुक्तिका**" इति। "**इति**" शब्दः पूर्वपक्षसमाप्तौ। अत्र प्रतिसमाधानं करोति "**तत्**" इति। **तत्**—शुक्तेः रजतज्ञानाविषयत्वसाधनम्, **यदि इदानीम्**, क्रियते इति शेषः, **तदा सिद्धसाधनम्** भवति प्रत्यक्षसिद्धत्वात्। **अथ**—यदि, **पूर्वम्**, तदानीमपि शुक्तिः न रजतज्ञानस्य विषयः इति तच्छुक्तेः रजतज्ञानविषयत्वसाधनं क्रियते, **तदा स्वसंवेदनेन** करणेन, **बाध्यविषयता**—बाध्यो विषयः साध्यं यस्य हेतोः स बाध्यविषयः, तस्य भावस्तत्ता, बाध्यविषयत्वमिति यावत्, भवति, अत्र हि स्वसंवेदनमेव साक्षि, पूर्वं शुक्तिः रजतज्ञानस्य विषय आसीदिति। तथा च यथा "अग्निरनुष्णो द्रव्यत्वात्" इत्यत्र बाधितविषयत्वं तथात्रापीति भावः। अत्र दोषान्तरमाह "**केन च**" इति। बौद्धमते नित्यस्य प्रमातुरसंभवात् "**अनुमानान्तरेण**" इत्युक्तम्। "**अनवस्था**" इति। तस्यानुमानस्याप्यन्यापेक्षा तस्याप्यन्यापेक्षेत्येवमादिरूपमनवस्थानम्। एतदवष्टंभेनान्यदपि किञ्चित्पूर्वपक्षवाद्युक्तं प्रतिसमाधत्ते "**एतेन**" इति। **प्रत्युक्तम्**—प्रतिसमाहितम्। एतत्किमित्यपेक्षायामाह "**एकस्मिन्**" इति। "**इति**" शब्दः प्रत्याख्येयवस्तुसमाप्तौ। कथं प्रत्युक्तमित्यपेक्षायामाह "**को हि**" इति। **तयोर्ज्ञानयोः** "रजतमिदम्" इति ज्ञानस्य "शुक्तिकेयम्" इति ज्ञानस्य च, **जानीयात्**, भवन्मते एकस्य नित्यस्य प्रमातुरसंभवान्न कोपि जानीयादिति भावः। ननु कुतो न जानीयादित्यत आह "ते हि" इति। ते—

---

1. तत् सिद्धसाधनम्—K.S.S.
2. द्वयोर्ज्ञानयोः—K.S.S.

स्वात्मनि स्वविषये च विश्राम्यत इति उक्तम्, इति अनुमानतोऽपि न बाधा, न च तथाभूतमपि व्यवधानम् अत्र प्रतीतौ संवेद्यते, स्वसंवेदनसिद्धतया झटिति भासनात्। अत एव एतदपि अशक्यं वक्तुम्—मा भूत् बाधा नाम इति।

एवं परपक्षेऽनुपपत्तिं प्रदर्श्य स्वपक्षे एकप्रमातृपरिनिष्ठितेः उदियात् बाध्यबाधकभाव इति वाक्येन प्रतिज्ञातं निगमयति—युक्ता सा एकस्मात् प्रमातुः यदि जायेत इति, स एव हि तथा निर्माता इति व्याख्यातमेव,

---

ज्ञाने। उपसंहारं करोति "**इति**" इति। **इति**—अतः कारणात्, **अनुमानतोऽपि बाधा न** भवति। एवं युक्तितोऽनुमानं निरस्य स्वसंवेदननिरस्तत्वमप्यस्य कथयति "**न च**" इति। **अत्र प्रतीतौ**—अस्मिन् बाधप्रतीतिव्यवहारे, **तथाभूतं व्यवधानम्**—अनुमानयोग्यहेतुग्रहणव्याप्तिस्मरणादिरूपव्यवधानम्[1], **न संवेद्यते**—नानुभूयते। कुत इत्यत आह "**स्व**" इति। **स्वसंवेदनसिद्धतया**—स्वसंवेदनरूपप्रत्यक्षसिद्धतया, **झटिति**—हेतुग्रहणव्याप्तिस्मृत्यादिकं विना। एतदवष्टंभेनोत्तरार्धं व्याख्यातुं बाधाया अनिर्वाच्यत्वमाह "**अत एव**" इति। **अत एव**, यतो झटिति भासनमस्ति अतः कारणादित्यर्थः। एतत्किमित्यपेक्षायामाह "**मा भूत्**" इति। एतेन "**स्वसंवेदनसिद्धा तु**" इत्यस्य व्याख्या कृता।

चतुर्थपादं व्याख्यातुमवतरणिकां करोति "**एवम्**" इति। **परपक्षे**—बौद्धपक्षे, **प्रतिज्ञातम्**—प्रतिज्ञाविषयीकृतम्, **निगमयति**—निगमनविषयतां नयति, मध्यऽवयवत्रयकथनमर्थादेव ज्ञेयम्। एवमवतरणिकां कृत्वा चतुर्थं पादं व्याचष्टे। "**युक्ता**" इति। "इति" शब्दः चतुर्थपादव्याख्यासमाप्तौ। अत्र समर्थनं करोति "**स एव हि**" इति। **हि**—यस्मात्, **स एव**—प्रमातैव, **तथा निर्माता**—

---

1. अनुमानयोग्यहेतुग्रहणव्याप्तिव्याप्तिस्मरणं–C.

The word व्याप्ति has probably been repeated by mistake. Hence we have omitted one of them.

स्थिते चैवं यदि व्यवहारसिद्धयेऽन्यथानुपपत्तिरप्युच्यते तत् उच्यतां कामम्, अधुना सर्वं सिद्ध्यति, इति ॥ १३ ॥

न केवलमेते कार्यकारणभावस्मरणबाधाव्यवहाराः सकललोकयात्रा-सामान्यव्यवहारभूता एकप्रमातृप्रतिष्ठाः, यावत् अवान्तरव्यवहारा अपि ये क्रयविक्रयादयः समलाः, उपदेश्योपदेशभावादयश्च निर्मलाः, तेपि एकप्रमातृनिष्ठा एव भवन्ति, व्यवहारा हि सर्वे[1] समन्वयप्राणाः इति उपसंहारक्रमेण दर्शयतिः—

**इत्थमत्यर्थभिन्नार्थावभासखचिते विभौ ।**
**समलो विमलो वापि व्यवहारोऽनुभूयते ॥ १४॥**

---

बाधकर्ता भवति, पूर्वापरव्यापित्वात्। **इति व्याख्यातमेव**—पूर्वकथितमेव। वादिभिर्यो व्यवहारान्यथानुपपत्त्या बाध्यबाधकभावः प्रोक्तः सोप्येकप्रमात्रङ्गीकार एव सिद्ध्यतीत्याह "**स्थिते च**" इति। **एवं स्थिते च** सति, **अन्यथानुपपत्तिः**—बाध्यबाधकभावं विना अयोग्यता, अर्थापत्तिप्रमाणेन बाध्यबाधकभावसाधनमिति यावत्। "**उच्यते**" इति, वादिभिरिति भावः। **अधुना**—एकप्रमात्रङ्गी-कारे, **सर्वम्**-सर्वः स्मृतिसंबन्धनिवहः, **सिध्यति**, योजकस्याङ्गीकृतत्वादिति भावः। "**इति**" शब्दः श्लोकव्याख्यासमाप्तौ॥ १३॥

अथ चतुर्दशस्य श्लोकस्यावतरणिकां करोति "**न केवलम्**" इति।

अत्र टीका :–

सकला या लोकयात्रा तत्र सामान्यव्यवहारभूताः–परमव्यवहाररूपाः, एक-प्रमातरि निष्ठा येषां तादृशाः, तेन लब्धसत्ताका इति यावत्। **समन्वयप्राणाः**–संबन्धजीविताः। **उपसंहारक्रमेण**— समस्ताह्निकार्थोपसंहाररीत्या। एवम-वतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**इत्थम्**" इति।

---

1. व्यवहारो हि सर्वः समन्वयप्राणः—K.S.S.

**'तत्तद्विभिन्न'' इति श्लोकद्वयोक्तेन अनेन उपपत्तिप्रकारेण, अन्वयव्यतिरेकात्मना, तथा श्लोकान्तरैरुक्तेन व्यवहारोदाहरणप्रकारेण इदमपि मन्तव्यम्—यत् विभौ देशकालानवच्छिन्ने, अत एव अत्यर्थभिन्नैः मायाबलात् भेदैकप्राणितैः नीलसुखाद्याभासैः प्रतिबिम्बकल्पैः अनतिरिक्ततया वर्तमानैः, खचिते स्वरूपानन्यथाभावेन उपरक्ते, विश्रान्तः सर्वो व्यवहारोऽनुभूयते, अनुभव एव अत्र दृढतमं प्रमाणम् इति यावत्,**

---

अत्र टीका :–

**"इत्थम्"** शब्दं व्याचष्टे **"तत्तत्"** इति। **''तत्तद्विभिन्न''** इति, **श्लोकान्तरैः**—"तत्तद्विभिन्न" इत्यादिरूपैरन्यैः श्लोकैः, **मन्तव्यम्**—अवश्यज्ञातव्यम्। **"इदम्"** इत्यस्याकाङ्क्षां पूरयति **''यत्''** इति। **"विभौ"** इति पदं व्याचष्टे **"देश"** इति। **"अत्यर्थ"** इत्यादिसमस्तपदस्य व्याख्यां विग्रहं च करोति **''अत एव''** इति। **अत एव**, विभुत्वादेवेत्यर्थः। **"भिन्ना"** इत्यवयवं व्याचष्टे **"माया"** इति। भेदेन एकम्-केवलम् प्राणितैः—दत्तसत्ताकैः, **"अर्थावभास"** इत्यवयवद्वयं व्याचष्टे **"नील"** इति। युक्ततया बिंबप्रतिबिंबभावमाश्रयितुं विशेषणमध्याहरति **"प्रतिबिंब"** इति। बिंबाभावात् परमार्थतः प्रतिबिंबवादस्य शैथिल्यं द्योतयितुं "कल्पप्" प्रत्ययः। एतेन फलितं विशेषणान्तरमध्याहरति **''अनतिरिक्त''** इति। प्रतिबिंबं हि आदर्शादेरभिन्नमपि भिन्नमिव भाति। यद्यपि वस्तुपिण्डरूपायाः शक्तेरेवात्र बिंबत्वात् कल्पप्प्रत्ययोऽयुक्त एव तथापि लौकिकप्रतिबिंबविलक्षणताप्रयोजनोसौ न विरोधावहः। **"खचिते"** इति पदं व्याचष्टे **"स्वरूप"** इति। स्वरूपस्य चिन्मात्राख्यस्य निजरूपस्य यः अन्यथाभावः—अचिद्रूपतासादनम्, तेन, **उपरक्ते**—तत्कृतरागमात्रास्पदे। सप्तम्यर्थमाह **"विश्रान्तः"** इति, अधिकरणकारकस्य विश्रान्तिस्थानत्वात्। **"अनुभूयते"** इति व्याचष्टे **''अनुभवः''** इति। अनुभवस्य केनाप्यन्येन प्रमाणेन शैथिल्योत्पादनायोगात् **"दृढतमम्''** इत्युक्तम्। ननु तर्हि सर्वेषामेव परमात्मतत्त्वप्राप्तिरयत्नसिद्धैवेति

**अनुभूयते च सोपदेशैः अवधानपरैः[1] येन एषां यैव संसारदशासंमता[2] व्यवहारदशा सैव प्रमातृतत्त्वप्रख्यात्मिका शिवभूमिः। यदुक्तम्:—**

**'........ .............संबन्धे सावधानता ॥'**

---

किमर्थं शास्त्रान्तरेषु यमनियमादि शरीरक्लेशहेतुकमुपायत्वेनोपदिष्टमित्यत आह **"अनुभूयते च"** इति। **"च"** शब्दः एवशब्दार्थे। **सोपदेशैः**—प्रथमं यमनियमादिद्वारेण चित्तशुद्धयासादनेन तीव्रतरभगवच्छक्तिपातप्राप्तमहागुरुकृतोपदेशसमाहितैः, तदनुसारेण **अवधानपरैश्च**—व्यवहारदशायामपि प्रियासक्तकामिनीन्यायेन परमात्मतत्त्वपरामर्शनपरैरेव न तु भोगैकासक्तत्वेऽपि कृतनिरर्थकतदभिमानैः स्ववञ्चकैः। **अनुभूयते**—सर्वो व्यवहारः परमात्मनि विश्रान्तः अनुभूयते। **येन**—अनुभवेन, **एषाम्**—अवधानपराणाम्, **यैव संसारदशासंमता**—बाह्यजनैः स्वदृष्टान्तेन भ्रमतः संसारावस्थात्वेनाभिमता, **व्यवहारदशा**—देहस्थितिं तावदपरिहार्यत्वेन शैथिल्येन क्रियमाणा भोजनादिव्यापारावस्था भवति **सैव** तेषां **प्रमातृतत्त्वप्रख्यात्मिका**—परमात्मतत्त्वज्ञानात्मिका, **शिवभूमिः**—परप्रकाशरूपशिवावस्था भवति, तत्समयेपि व्यवहारमूलपरप्रमातृतत्त्वात्मतासादनात् बाह्यदृष्ट्यैव व्यवहारित्वात्। तदुक्तम्:—

"येनैव मुह्यति जडः प्राज्ञस्तेनैव तरति संसारात्।
पिण्डितमयोऽप्सु मज्जति तदेव पात्रीकृतं प्लवते"

इति। अत्रायमर्थः। जडः—प्रोक्तयुक्त्यनभिज्ञः पुरुषः, येनैव—बाह्यव्यवहारेण, मुह्यति—फलप्राप्तिकृतं हर्षरूपं तदप्राप्तिकृतामर्षरूपञ्च मोहं भजति, देहमात्रनिष्ठत्वेन तदुपयोगिवस्तुविषयव्यवहारमात्रैकरतत्वात्। प्राज्ञः—चित्तशोधनपूर्वं गुरुतः सिद्धत्वे मन्दशक्तिपाताघ्रातत्वेन, प्राप्तसद्गुरूपदेशत्वेन शास्त्रतः सिद्धत्वे तीव्रशक्तिपाताघ्रातत्वेन, चित्तशुद्धिपूर्वं प्राप्तमहारहस्यशास्त्रत्वेन स्वतः सिद्धत्वे तु श्रीभगवत्तीव्रतरशक्तिपाताघ्रातहृदयत्वेन प्रोक्तयुक्तिज्ञः पुरुषः। तेनैव—बाह्य-

---

1. अवधानधनैः—K.S.S.
2. संसारसंमता—K.S.S.

व्यवहारेण, संसारात्–रागद्वेषमयात्, तरति–तदुत्तीर्णतामासादयति, तन्मूलसंबन्ध-योजकपरमात्मतत्त्वमात्रपरत्वेन तत्फलाप्राप्तिकृतामर्षभागी न भवतीति यावत्, तद्द्वारेण प्राप्तमहाफलत्वात्। कश्चिद्धि वराटिकार्थं यत्नं कुर्वन्नकस्माच्चिन्तामणिं प्राप्नुवन् वराटिकालाभालाभकृतहर्षामर्षभागी न भवति। एतेन परतत्त्वपरामर्शपरस्य चित्तस्य भुज्यमाना अपि भोगा उपकृतिमेव कुर्वन्ति न हानिमिति द्योतितम्। तथा चास्मदीयं वृत्तम् :–

"प्रवाहेनायाता उपकृतिकराश्चित्तविषया
यदिच्छिद्रैर्न त्वं कलित[1] इह सङ्कल्पनिचयैः।
अरन्ध्राया नावो जलमुपकरोत्येव नियतं
भजन्तीं सौषिर्यं ब्रुडयति तु तामेतदनिशम्" ॥

इति। अत्र दृष्टान्तमाह "पिण्डितम्" इति। पिण्डितम्-पिण्डभावेन स्थितम् अयः। अप्सु–जलेषु, मज्जति, तदेव-पिण्डितमय एव, पात्रीकृतम्–घटादिपात्र-भावेन संपादितम् सत्, प्लवते-उह्यते, युक्तेः सर्वंसहत्वादिति भावः इति। अत्र रहस्यशास्त्रवाक्यमुदाहरति **"सवन्धे सावधानता"** इति। एवमिदं पद्यम् :–

"ग्राह्यग्राहकसंवित्तिः सामान्या सर्वदेहिनाम्।
योगिनान्तु विशेषोयं संबन्धे सावधानता"

इति। अत्रायमर्थः। सर्वदेहिनाम्–तज्ज्ञानामतज्ज्ञानाञ्च सर्वेषां प्राणिनाम्, ग्राह्यग्राहकसंवित्तिः–लक्षणया ग्राह्यग्राहकसंबन्धज्ञानम्। "ग्राह्यग्राहकसंबन्धः" इति वा पाठः। सामान्या–सदृशी भवति। तज्ज्ञा अपि हि अज्ञाऽविशेषेणैव शरीरयात्रानिमित्तं यावच्छरीरं व्यवहारं कुर्वन्त्येव। ननु तर्हि एषामपि सामान्यजनत्वमेवायातम् इत्यत आह "योगिनाम्" इति। "तु" व्यतिरेके, योगिनाम्-व्यवहारेऽपि परमात्मपराणाम्, अयं विशेषः–अज्ञेभ्य उत्कर्षो भवति। अयं कः? संबन्धे-ग्राह्यग्राहकयोजने, तत्समये इति यावत्, या सावधानता–तद्योजके प्रमातरि यदवधानं भवति। क्रयविक्रयादिरूपे समलव्यवहारेऽपि तेषां न परमात्मविस्मृतिर्जायते इति स्फुट एव तेषां सामान्यजनेभ्य उत्कर्ष इति भावः। एतच्च मध्यधामा-

1. कलितमिह—C.

**इति। अप्रत्यभिज्ञातात्मपरमार्थानां समलो व्यवहारः, अन्येषां स एव निर्मलः॥ इति शिवम्॥ १४॥ आदितः॥ ७७॥**

**इति श्रीमन्माहेश्वराचार्यवर्योत्पलदेवपादविरचितायामीश्वरप्रत्यभिज्ञायां श्रीमदाचार्याभिनवगुप्तकृतविमर्शिन्याख्यव्याख्योपेतायां प्रथमे ज्ञानाधिकारे एकाश्रयनिरूपणं नाम सप्तममाह्निकम्॥ ७॥**

---

भ्यासिनामयत्नमेव सिद्ध्यति, ते हि ग्राह्यग्राहकयोर्मध्ये किमपि तद्योजकं तत्त्वं यत् इदमस्य ग्राह्यम्, इदमस्य ग्राहकम्, इति परामर्शकं भवति तत्र निष्ठा एव भवन्ति। तदुक्तम् :–

"एकचिन्ताप्रसक्तस्य यतः स्यादपरोदयः।
उन्मेषः स तु विज्ञेयः स्वयं तमुपलक्षयेत्"

इति। अस्मदीयं पद्यमपि :–

"देहाद्रिस्थमनोद्रुमस्थकलनाशाखालिसन्ध्यन्तरात्
द्रष्टुं जाड्यहरं विमर्शविभवादुन्मेषरूपं रविम्।
लग्ना ये सततं तदेकमयतां पश्यन्त आत्मन्यथो
संसारेऽपि च तत्प्रकाशवशतो भातेऽस्तु तुभ्यं नमः॥"

इति। ननु समले व्यवहारे कथं प्रमातृतत्त्वप्राप्तिर्युक्तेत्यत आह **"अप्रत्यभिज्ञात"** इति। **अन्येषाम्**–पूर्वं बहुविधैरुपायैः प्रत्यभिज्ञातात्मतत्त्वानाम्, एतेन प्रबुद्धानामेवात्राधिकार इति द्योतितम्। समलो व्यवहारश्च क्रयविक्रयादिरूपः ऋजुतया कृतोपि, विमलः उपदेशादिरूपः, देशकालशास्त्रविरुद्धस्तु व्यवहार एव न भवतीति नान्यथा भ्रमितव्यम्। **"इति"** शब्द आह्निकसमाप्तौ। **"शिव"** इति पदं मङ्गलप्रतिपादकं परतत्त्वसूचनपरञ्च। इति शिवम्।

इति श्रीभास्करकण्ठविरचितायां श्रीप्रत्यभिज्ञासूत्रविमर्शिनीटीकायां श्री—भास्कर्याख्यायां ज्ञानाधिकारे सप्तममाह्निकं समाप्तम्[१]।

---

1. The following sentences occur in the manuscript, but do not seem to be part of the text.

शुभमस्तु। पुनः प्रारंभो भूयात्। ओं श्री गुरवे नमः। ओं श्री शिवार्पणमस्तु। ओं श्री परशिवाय नमः। ओं श्री परादेव्यै नमः। ओं श्री स्वात्मने शिवाय नमः। ओं ज्योतीरूपाय परमात्मने नमः। ओं श्री विघ्नहन्त्रे नमः। ओं श्री प्रतिभादेव्यै नमः।

---

## अथ ज्ञानाधिकारे माहेश्वर्यनिरूपणं नामाष्टममाह्निकं प्रारभ्यते ।

स्वसंवेदनसंसिद्धव्यवहारवशेन यः ।
नित्यं महेश्वरः सिद्धः सिद्धानां तं स्तुमः शिवम् ॥

---

अथ अष्टमाह्निकप्रारम्भः ।

प्रसिद्धव्यवहारेण स्मृतिमात्रैकसिद्धिना ।
स्मृत्याश्रयं स्वयं सिद्धं हृदये तं स्तुमः शिवम् ॥

अथ ज्ञानाधिकारे ऽष्टमाह्निकव्याख्यानिर्विघ्नसमाप्तये परतत्त्वरूपेष्टदेवता-परामर्शनरूपं मङ्गलं मनसानुष्ठितमपि शिष्यशिक्षार्थं[1] सकलाह्निकतात्पर्यसूचना-[2]परेण श्लोकेनोपनिबध्नाति "**स्वसंवेदन**" इति । वयं **तम्**—यच्छब्दाविष्टे पूर्ववाक्ये प्रोक्तस्वरूपम्, **शिवम्**—अपरिच्छिन्नप्रकाशस्वरूपं सर्वेषां भावानां प्रकाशकारि सारप्रदञ्च किमपि तत्त्वम्, स्तुमः । तं कम् ? यः शिवः **सिद्धानाम्**—सुप्रबुद्धानां न तु प्रबुद्धानाम्, तेषामर्थे एवोपदेशप्रवृत्तेः, नाप्यप्रबुद्धानाम्, तेषामत्र कथामात्रेप्यनधिकारात् । स्वसंवेदनसंसिद्धः—स्वप्रतीतिसाक्षिकः, यः व्यवहारः—देहस्थितिपर्यन्तं त्यक्तुमशक्या समला क्रयविक्रयादिरूपा, विमला वा उपदेशादि-रूपा व्यवहृतिः, तस्य वशेन-सामर्थ्येन, न तु केवलभावनाद्यपायनिचयेनैव । **नित्यम्**—सदैव, न तु कुत्रापि परिमिते समाधिसमये एव, **महेश्वरः**—ज्ञानक्रियारूपम-हैश्वर्ययुक्तः, **सिद्धः**—स्वयंसिद्धनिजात्मरूपतया स्थितः, न तु बहिः साधनीयतया स्थितो भवति, सिद्धा हि व्यवहारसमयेऽपि तत्कारणस्मृतिसंबन्धादिमूलभूतयोजक-ज्ञानक्रियाशक्तियुक्तपरप्रमातृरूपान्तरतत्त्वमेव महेश्वरतया जानते न तु बहिः कमपि भस्मादिभूषितं मूढोपासामात्रार्थं कल्पितं परिमितं देवविशेषम् । सोपि

---

1. शिष्यशिक्षार्थे—C.
2. सकलाह्निकसूचनापरेण—C.

**एवं ज्ञानस्मरणापोहनानि व्युत्पाद्य एषामेकमाश्रयं[1] विना व्यवहारो न युक्तः इति निरूपितम् एतावता,**

---

कल्पितः किं ज्ञानक्रियासहितः क्रियते ? न चेत्तर्हि पाषाणोपमः स न क्रीडाशील-वाचकदेवशब्दवाच्यतां भजते, यदि तु तद्युक्तः तर्हि स आत्मैवेति किमर्थं कल्पनया स्वात्मा खेद्यते, या तु ज्ञानक्रिययोः परिमितत्वापरिमितत्वशङ्का सा उपाधिकल्पि-तैव, उपाधिरप्यत्र विचारितो न ततो ऽतिरिच्यते। अत्र चाग्निकण एव दृष्टान्ती-कार्यः, स हि महाग्निना सह कमपि भेदं नैव भजते, शनैः शनैः शक्त्यासादनेन सो-पि हि महाग्निरेव भवतीत्यलम्। सिद्धानां समाधिदेशो व्यवहारदेशव्यतिरिक्तो नास्त्येवेति तस्याकथनम्, भवन्नपि वा समानविश्रान्तिस्थानतया अवज्ञापदमेव। यद्यपि तेषां व्यवहारपदमप्यवज्ञापदमेव तथापि समाधौ विश्रान्तानां व्यवहारसमये क्षोभभाजां प्रबुद्धानामर्थे एवमुक्तम्, यथा तेऽपि सुप्रबुद्धा भवेयुरिति। अप्रबुद्धानां यद्येतदुच्यते तर्हि स्वप्रवृत्त्यैव व्यवहारा[2]वटलग्नास्ते ततोऽप्यधःपातं भजेयुः। यदि तु ते स्वप्रवृत्त्यैवात्र विशन्ति विशन्तु, विधिरेव त्राणं तेषां करिष्यति किमस्माकम-शक्तानां तत्र निषेधप्रवृत्त्या। तदुक्तम् :—

"तेषामवटलग्नानां विधिस्त्राणं करिष्यति"

इति।

एतेनात्राह्निके माहेश्वर्यनिरूपणमेव करिष्यतीति सूचितम्।

एवं मङ्गलं संपाद्य समस्तव्यस्तत्वाभ्यामाह्निकतात्पर्यंनिरूपणं करोति **"एवम्"** इति।

अत्र टीका :—

**व्युत्पाद्य**—पृथक् पृथग् आह्निकत्रयेण निर्णीय, **एषाम्**—ज्ञानस्मरणा-पोहनानाम्, **एकमाश्रयम्**—प्रमातृरूपमेकमधिकरणम्, **व्यवहारः**—समस्ता समला विमला वा व्यवहृतिः, **एतावता**, समनन्तरोक्ताह्निकेनेत्यर्थः।

---

1. तेषाम्—K.S.S.
2. व्यवहारवटलग्ना—C.

'न चेदन्तः कृता.........................................'

इत्यत्र यत् उक्तम् 'एकः' इति तत् परिघटितम् । अन्तराभाससमर्थनेन 'अन्तःकृतानन्तविश्वरूपः', इत्यपि निरूपितम् । यदत्रैव[1] 'महेश्वरः' इति उक्तम् तन्माहेश्वर्यं स्वातन्त्र्यरूपमुपपादयितव्यम्, तच्च ज्ञानविषयं क्रिया-विषयं च इत्युभयप्रकारम्, तत्र यतो[2] भगवान् ज्ञाता कर्ता च, यद्यपि च प्रकाशविमर्शात्मकं चिदेकघनम् एकमेव संविद्रूपम्, तथापि व्युत्पादनाय

"न चेदन्तःकृत" इत्यत्र, अस्मिन् श्लोके इत्यर्थः । "एकः" इति ज्ञाना-द्याश्रयस्यैकत्वकथनम्, तत्—"एकः" इति कथनम्, **परिघटितम्**, एकाश्रय-समथनेन समर्थितमित्यर्थः । अन्तराभासानां[3] यत् समर्थनम्—युक्त्या साधनम्, तेन, **इत्यपि**—अयं श्लोकभागोऽपि, **"निरूपितम्"** "प्रागिवार्थः" इत्यत्र निर्णीत-मित्यथः । **अत्रैव**—"न चेदन्तःकृत" इत्यत्र श्लोक एव, **तन्माहेश्वर्यम्**—महेश्वरत्वसमर्थकं महेश्वरभावम्, कीदृशम् ? **स्वातन्त्र्यरूपम्**—अनन्य-मुखप्रेक्षित्वरूपम्, कर्तृत्वरूपमिति यावत्, **उपपादयितव्यम्**, अवशिष्टत्वेन साधनीयमित्यर्थः । एतेन "न चेदन्तकृत" इत्यादिपदनिवहरूपस्यास्य श्लोकस्यैव ज्ञानाधिकारसूत्रत्वं सूचितम्, स एव हि पूर्वपक्षक्षोदानन्तरं बीजत्वेन स्थापितः तस्यैव च प्रतिपदं निर्णयः कृतः क्रियते चेति । ननूपपादयितव्यं स्वातन्त्र्यरूपं माहेश्वर्यं किंप्रकारमित्यत आह **"तच्च"** इति । **तच्च**—माहेश्वर्यं च, ज्ञानं विषयः यस्य तादृशम्, क्रिया विषयः यस्य तादृशम्, **इत्युभयप्रकारम्**—द्विप्रकारं भवति **तत्र**-तस्मिन्नैश्वर्ये सति, **यतः**-यस्मात् प्रकारद्वयाद्धेतोः, **भगवान्**-ऐश्वर्ययुक्तः परप्रमाता, **ज्ञाता कर्ता च** भवति, ज्ञाने स्वतन्त्रो हि ज्ञाता, क्रियारूपे कर्मणि स्वतन्त्रः कर्ता । ननु सर्वत्रैश्वर्यस्यैकत्वेन प्रसिद्धत्वात् कथं द्विप्रकारत्वमुक्तम् इत्यत आह "यद्यपि" इति । **प्रकाशविमर्शात्मकम्**—सर्वोपरागसहप्रकाशता-

1. यत्तत्रैव—K.S.S.
2. ततो भगवान्—K.S.S.
3. अनन्तराभासानाम्—C.

**तत्परिघटित एव अयं विभागः, तेन ज्ञानात्मकक्रियाविषयं स्वातन्त्र्यं यद्यपि क्रियाशक्तिरूपं तथापि तत् ज्ञानाधिकार[1] एव निर्णेतव्यं तद्विषयत्वात् । एवं च ज्ञातृशब्दार्थः प्रकृतितः प्रत्ययतश्च संपूर्णतया निर्णीतो**

दृक्स्वरूपामर्शनरूपम्, अत एव चिता एकघनम्—अतिनिबिडम्, तथा एकमेव, न हि शक्तिशक्तिमतोर्भेदो युक्त इति भावः । **संविद्रूपम्**-प्रमातृतत्त्वरूपं भवति । **तथापि व्युत्पादनाय**-अज्ञबोधनार्थाय, **विभागः**—शिवशक्तिरूपः शक्तौ कर्तृत्वज्ञातृत्वरूपश्च, **तत्परिघटित एव**—शास्त्रकारभावमासाद्य तेन निर्मित एव भवति। तदुक्तम् :—

"एकस्मिन्नेव तत्त्वे शिवशक्तिविभागकल्पनां कुर्मः"

इति। न च प्रयोजनापेक्षया तावत् कल्पिते वस्तुनि मध्ये आक्षेपो युक्त इति भावः। फलितमाह "**तेन**" इति । **तेन**—यतोऽयं विभागः परव्युत्पादनमात्रप्रयोजन एव भवति ततः कारणात्, ज्ञानात्मिका—"ज्ञा अवबोधने" इति दृशा ज्ञानरूपा, क्रिया—ज्ञानात्मकक्रिया सा विषयो यस्य तादृशम्, **स्वातन्त्र्यम्**—तृच्प्रत्ययवाच्यं कर्तृत्वम्, **यद्यपि क्रियाशक्तिरूपं** भवति, कर्तृत्वं हि कारकशक्तिरेव, सा च "करोतीति कारकम्" इति व्युत्पत्त्यनुसारेण क्रियैव, **तथापि तत्**—स्वातन्त्र्यम्, **ज्ञानाधिकारे एव** न तु वक्ष्यमाणे क्रियाधिकारे, **निर्णेतव्यम्**—निर्णयविषयीकार्यम्, कुतः? **तद्विषयत्वात्**—ज्ञानविषयत्वात्, न हि अयं नियमः "क्रियावचन एव धातुः" इति, "गडि वदनैकदेशे" इत्यादौ तद्व्यतिरिक्तवाचकस्यापि दर्शनादिति भावः। ज्ञानाधिकारे हि ज्ञानं तद्विषयः कर्ता च निर्णेयः, यदि तु तस्य ज्ञानस्यापि धात्वर्थत्वेन क्रियात्वमुच्यते तर्हि अस्यापि क्रियाधिकारे एव कथनं युक्तं स्यादिति अस्याधिकारस्य निर्विषयत्वमेवापतेत्, यत्तु कारकशक्तित्वेन कर्तृत्वस्य क्रियात्वमुच्यते तत्राङ्गीक्रियमाणे क्रियाद्वैतवाद एवापतेत् गौणमुख्यकारकमात्रभरितत्वाज्जगतः, अत एव च ज्ञातृत्वेऽन्तर्गतं कर्तृत्वं निष्कृष्यापि ज्ञानाधिकार एव निर्णीतम्, ज्ञानाधिकारस्य येन "कर्तरि ज्ञातरि" इत्युपक्रमे "शुद्धे

1. तथापि ज्ञानाधिकार एव—K.S.S.

**भवति । तत्र ज्ञानं नाम स्वयंभेदिताभासभेदोपाश्रयनियन्त्रणासंकुचितम्[1] 'अहमिति' संवेदनम् । तत्राभासेषु यत् स्वातन्त्र्यं तदेव ज्ञानशक्ति-विषयं स्वातन्त्र्यं संपद्यते इति ।**

---

ज्ञानक्रिये यतः" इति पर्यन्ते च प्रतिपादनम्[2], क्रियाधिकारे तु ततो निष्कृष्य कालादि-भावेन पुष्टिं गतस्य क्रियातत्त्वस्य तद्विषयस्य च निर्णयः । प्रथमं हि प्रमाता जानामीत्यनुभवति, ततः करोति, तत्र जानामीत्यत्र प्रकृत्या ज्ञानमुच्यते प्रत्ययेन तु कर्तृत्वम्, परन्तु एतत् कर्तृत्वं ज्ञातृत्वमेव, अज्ञावबोधनार्थन्तु पृथग्निदशः, यत्तु करोतीत्यत्र कर्तृत्वं तत् पुष्टिरूपमन्यत् किञ्चिदेवेत्यलमतिगहनेषु वस्तुषु व्यर्थ-कल्पनाभिः । एतेन फलितं वस्तु कथयति **"एवञ्च"** इति, ज्ञानक्रिययोरेकत्वे सति, **ज्ञातृशब्दार्थः**—तृच्प्रत्ययाप्तज्ञाधात्वर्थः, **प्रकृतितः**—अवबोध—वाचिन्याः प्रकृतेः, **प्रत्ययतश्च**—स्वान्तःकृतक्रियाकर्तृवाचितृच्प्रत्ययाच्च, **संपूर्णतया**—सम्यक् पूर्णतया, **निर्णीता भवति,** ज्ञानक्रियात्मकैकपिण्डवाचकत्वेन स्थापनादिति भावः । ननु ततः किमित्यत आह **"तत्र"** इति । तत्र सति आचार्येण कर्त्रा, **तत्**-ज्ञानं कर्म, **"तात्कालिकाक्षसामक्ष्य"** इत्यादिना **"शुद्धे ज्ञानक्रिये यतः" इत्यन्तेन श्लोकैकादशकेन निरूप्यते**—निरूपणा-विषयतां नीयते । कुतः ? **इति**, इति कुतः ? **तदेव** कर्तृ, **ज्ञानशक्ति-विषयं स्वातन्त्र्यम्**—पराकाष्ठाप्राप्तौ पराहन्तारूपं महास्वातन्त्र्यम्, **संपद्यते ।** तदुक्तम् :–

"ततश्चक्रेश्वरो भवेत्"

इति । तदेव किम् ? स्वयंभेदिताः–अपोहनशक्त्या तेन परप्रकाशेन स्वतो भिन्नतया भासिताः ये आभासभेदाः–धटपटादिरूपाः, ते उपाश्रयाः यस्याः तादृशी या नियन्त्रणा-

---

1. स्वयं भेदिताभासभेदोपाश्रय—K.S.S.
   The editor of the K.S.S. edition seems to have taken स्वयं as a separate word. Bhāskara takes it with what follows as one Samāsa.
2. प्रतिपादितम्—C.

**'तात्कालिकाक्षसामक्ष्य ..............।'**

**इत्यादिना**

**'.............. शुद्धे ज्ञानक्रिये यतः।'**

**त्यन्तेन श्लोकैकादशकेन तत् निरूप्यते। तत्र आभासान्तरापेक्षी च आभासोऽन्यथा वा इति श्लोकेन उक्त्वा, स एव आभास एक इति श्लोकान्तरेण उच्यते। अर्थक्रियाभासोऽपि तथैव आभासनियत इति श्लोकद्वयेन उक्त्वा कस्मिन् आभासे सा अर्थक्रिया इति पुनः श्लोकद्वयेन।**

---

नियतरूपाश्रयणम्, तया सङ्कुचितम्—सङ्कोचं गतम्, तन्मात्रज्ञातृत्वेन स्थितमिति यावत्; **अहमिति संवेदनम्,** परिमिताहंरूपमित्यर्थः। अत एव **तत्राभासेषु स्वातन्त्र्यम्**—तावन्मात्रेण तु सर्वत्र स्वातन्त्र्यरूपम्। अयं सङ्क्षेपः। यतः परिमिताहंरूपमघटघटादिषु[1] ज्ञातृतया स्थितं ज्ञानशब्दवाच्यं वस्तु एव देहाद्युपाधेनिष्कृष्टमत एव पराकाष्ठामाश्रितं पराहन्तारूपं सर्वज्ञत्वरूपं[2] महास्वातन्त्र्यं भवति, अतः तदेव आद्यन्ताभ्यामुपलक्षितेन श्लोकैकादशकेन निर्णीयते इति।

एवं सामस्त्येनाह्निकाभिप्रायमुक्त्वा व्यस्तत्वेन कथयति "तत्र" इति। **तत्र**—श्लोकैकादशकमध्ये, **आभासान्तरापेक्षा**—स्फुटतावस्थायां दर्शनाद्याभासरूपव्यतिरिक्ताभासापेक्षी, **आभासः**—नीलाद्याभासः, **चः** समुच्चये, **अन्यथा वा,** स्फुटत्वावस्थायामाभासान्तरानपेक्षी चेत्यर्थः, **"वा"** शब्दोपि समुच्चये एव, **"स आभासः एक एव"** इति, एवकारो भिन्नक्रमः, **श्लोकेन,** प्रथमेनेत्यर्थः, **श्लोकान्तरेण**—द्वितीयेन श्लोकेन, **तथैव**—आभासानुसारेणैव, **आभासनियतः**—नीलाद्याभासनियतः, **श्लोकद्वयेन**—तृतीयचतुर्थाभ्याम्, **पुनः श्लोकद्वयेन**—पञ्चमषष्ठाभ्याम्, आभासान्तरैः चित्रितः—विचित्रीकृतः आभासः आभासान्तरचित्रिताभासः, तस्य भित्तिस्थानीयम्—आधारभूतम्, **आन्तरत्वम्**—प्रकाशान्त-

---

1. परिमिताहंरूपयाघटघटादिषु—C.
2. सर्वज्ञतृरूपम्—C.

आभासान्तरविचित्रिताभासभित्तिस्थानीयम्[1] आन्तरत्वम् इति श्लोकेन। ततो बाह्यत्वं स्वरूपतो विभागतश्चेति[2] श्लोकयुग्मेन। ततः श्लोकेन ज्ञानादिशक्त्याश्रयस्य एकस्य उपसंहारः। श्लोकान्तरेण महेश्वरत्वम् उपसंहरता भाविनः क्रियाधिकारस्य उपक्षेप इति सङ्क्षेपार्थ आह्निकस्य। अथ श्लोकार्थो निरूप्यते।

ननु यदि परमेश्वरनिष्ठतयैव समस्तोऽयं व्यवहारः तत् अस्य स्फुटत्वास्फुटत्वप्रायप्रसिद्धवैचित्र्यानुपपत्तिः, येन किल अयम् अनुप्राणितः स एक एव भगवान्, न च तद्व्यतिरेकेण व्यवहारस्य निजं किंचन तत्त्वम् उत्पश्याम इत्याशङ्क्याह:—

---

र्गतत्वम्, **श्लोकेन**, सप्तमेनेत्यर्थः, **श्लोकयुग्मेन**, अष्टमनवमाभ्यामित्यर्थः। **ततः**—तदनन्तरम्, **श्लोकेन**, दशमेनेत्यर्थः, **एकस्य**, एकात्मतया स्थितस्य चिदात्मन इत्यर्थः, **उपसंहारः**—समस्तधर्माक्षेपेण सङ्क्षेपतः कथनम्, **श्लोकान्तरेण**—एकादशेन, **महेश्वरत्वम्**—चिदात्मगतं महेश्वरभावम्, **इति**—एवम्। श्लोकार्थकथनं प्रतिजानीते "**अथ**" इति।

एवं समस्तव्यस्तत्वाभ्यां सकलाह्निकतात्पर्यमुक्त्वा प्रथमद्वितीययोः श्लोकयोरवतरणिकां करोति "**ननु**" इति।

अत्र टीका :—

**परमेश्वरनिष्ठतयैव**—योजकरूपपरप्रमातृभित्तित्वेनैव, **तत्**—तदा, **अस्य**—व्यवहारस्य, **येन**—भित्तिभूतेन येन प्रमात्रा, **अनुप्राणितः**—दत्तसत्ताकः। ननु तर्हि व्यवहारस्तद्व्यतिरिक्त एवास्तु इत्यत आह "**न च तद्व्यतिरेकेण**" इति। **तद्व्यतिरेकेण**—परमेश्वररूपपरप्रमातृव्यतिरेकेण, इत्थंभावे तृतीया। एवमवतरणिकां कृत्वा श्लोकद्वयमपन्यस्य व्याचष्टे। "**तात्कालिक**" इति।

---

1. आभासान्तरविचित्रस्य भित्तिस्थानीयम्—K.S.S.
2. विभागश्च श्लोकयुग्मेन—K.S.S.

**तात्कालिकाक्षसामक्ष्यसापेक्षाः केवलं क्वचित् ।**
**आभासा अन्यथान्यत्र त्वन्धान्धतमसादिषु ॥ १ ॥**
**विशेषोऽर्थावभासस्य सत्तायां न पुनः क्वचित् ।**
**विकल्पेषु भवेद् भाविभवद्भूतार्थगामिषु ॥ २ ॥**

केवलम् एतावता आभासानां भेदो न पुनरर्थावभासस्य स्वात्मगतः क्वचिदपि भेद इति श्लोकद्वयस्य संमेलितस्य संबन्धः । यस्मिन्नेव काले स आभास आभाति तत्काले एव भवति, यत् अक्षसामक्ष्यं बाह्येन्द्रिय-प्रत्यक्षत्वं नाम आभासान्तरं पश्यामीत्येवंरूपं तत्सापेक्षाः तद्व्यामिश्राः क्वचित् आभासा भवन्ति, यत्र स्फुटताव्यवहारः । अन्धविषयः अन्ध-

---

अत्र टीका :–

तत्र प्रथमं श्लोकद्वयस्यार्थिकं संबन्धं कथयति **"केवलम्"** इति । **एतावता,** अक्षसामक्ष्यापेक्षित्वान्यथात्वमात्रेणेत्यर्थः । **आभासानाम्**—नीलाद्याभासानां तज्ज्ञानाद्याभासानाञ्च, **भेदः**–परस्परतो भिन्नता, **पुनः**–पक्षान्तरे, **स्वात्मगतो भेदः**, स्वगतभेद इत्यर्थः। **संबन्धः**–आर्थिकी योजना । संबन्धमुक्त्वा व्याख्यां कर्तु-मारभते **"यस्मिन्नेव"** इति । **यस्मिन् काल एव स आभासः** नीलाद्या-भासः, **आभाति**–-स्फुरति, **तत्काले एव बाह्येन्द्रियप्रत्यक्षत्वं नाम**–बाह्येन्द्रियप्रत्यक्षत्वाख्यमक्षसामक्ष्यम **आभासान्तरम्**—अक्षसामक्ष्यरूपः अन्य आभासः यद् भवति, कीदृशम्? "पश्यामि" इत्येवं रूपं यस्य तादृशम्, **पश्यामीत्येवंरूपम्, तत्सापेक्षाः**–आभासान्तरापेक्षायुक्ताः। एतद् व्याचष्टे **"तद्व्यामिश्राः"** इति। **क्वचिद् आभासाः**—नीलाद्याभासाः, **भवन्ति**। क्वचिच्छब्दद्योतितं विषयं स्फुटीकृत्याह **"यत्र"** इति। **यत्र**, यस्मिन् प्रत्यक्षस्थले इत्यर्थः। एतेन **"आभासाः"** इत्यन्तं गतव्याख्यम्। **"अन्यथा"** इत्यादि श्लोकखण्डं व्याचष्टे **"अन्ध"** इति। **"अन्धतमस"** इति लक्षणामाश्रित्य व्याचष्टे **"अन्धकारस्थ"** इति। सूत्रस्थन **"आदि"** शब्देन व्याध्यादिनष्ट-

कारस्थप्रमातृविषयः पुनः योऽन्यो व्यवहारोऽस्फुटतामयः तत्र ते आभासा अन्यथा, तथा हि जात्यन्धस्य बाह्येन्द्रियप्रत्यक्षत्वलक्षणम् आभासान्तं नैवास्ति, दृष्टवतस्तु अन्धीभूतस्य संतमसस्थितस्य च तात्कालिकं तत् नास्ति अपि तु प्राक्तनमेव बाह्येन्द्रियप्रत्यक्षत्वम् अनुसंधत्ते ॥ १ ॥

तस्मात् अर्थावभासस्य केषुचिदपि विकल्पेषु सत्तायां स्वरूपे विशेषोऽस्ति इति संभावना न कर्तव्या। ते हि विकल्पा भाविवस्तुगामिनो वा भविष्यन्निष्ठा वा भवन्तु वर्तमाननिष्ठा वा अतीतवस्तुविश्रान्ता वा। एतदुक्तं भवति—नीलमिदं पश्यामि, सङ्कल्पयामि, उत्प्रेक्षे, स्मरामि, करोमि वच्मि[1] इत्यादौ नीलाभासोऽसौ स्वरूपतोऽनूनाधिकः। एवं

---

नेत्रादेः प्रमातुर्ग्रहणम्। **अस्फुटतामयः**-अस्फुटतारूपः, **तत्र**-विकल्पमात्ररूपे तस्मिन् व्यवहारे, **अन्यथा,** आभासान्तरव्यामिश्रणारहिता इत्यर्थः। अत्र समर्थनमुपक्रमते **"तथा हि"** इति। **अन्धीभूतस्य**–रोगादिना नष्टदृष्टेः, **तात्कालिकम्**–दर्शनकालीनम्, **तत्**–अक्षसामक्ष्यम्, **अनुसन्धत्ते**–स्मरति। एतेन प्रथमः श्लोकः कृतव्याख्यः ॥ १ ॥

अथ द्वितीयस्य श्लोकस्य व्याख्यां फलितरीत्या करोति **"तस्मात्"** इति। **तस्मात्**–यत आभासानाम् आभासान्तरव्यामिश्रणातदभावकृत एव भेदोस्ति ततः कारणात्। **"सत्तायाम्"** इति व्याचष्टे **"स्वरूपे"** इति। **"संभावना न कर्तव्या"** इत्यनेन संभावनायामत्र लिङिति सूचितम्, **"भावि"** इत्यादि समस्तं पदं व्याचष्टे **"ते हि"** इति। अत्र सङ्क्षिप्तार्थकथनं प्रतिजानीते **"एतद्"** इति। किमुक्तं भवतीत्यपेक्षायामाह। **"नीलमिदं पश्यामि"** इति निर्विकल्पानुभवग्रहणम्, **"संकल्पयामि"** इति सविकल्पानुभवग्रहणम्, **"उत्प्रेक्षे"** इति भ्रमज्ञानादिग्रहणम्, **"स्मरामि"** इति स्मृतिज्ञानग्रहणम् **"करोमि"** इति कर्मेन्द्रियव्यापारग्रहणम्, **"वच्मि"** इति प्रधानत्वेन वागिन्द्रियव्यापारस्य पृथग्ग्रहणम्,

---

1. वेद्मि—K.S.S.

पश्यामीत्यपि[१] यः पीतादिषु। ते पुनराभासाः स्वातन्त्र्येण यदा भगवता संयोज्यन्ते वियोज्यन्ते च तदा अयं स्फुटत्वादिर्व्यवहारः[२], नीलमित्याभासस्य उत्प्रेक्षे इत्याद्याभासान्तरव्यवच्छेदनेन[३] पश्यामीति आभासव्यामिश्रणायां स्फुटताव्यवहारः। एवं त्रैकालिकव्यवहारवैचित्र्योपपत्तिः। परमेश्वरस्वरूपान्तर्भूतत्वे पुनराभासानां न कुतश्चित् व्यवच्छेदः न केनचित् व्यामिश्रणा इति ॥ २ ॥

---

आदिशब्देनान्येषां सर्वेषां व्यवहाराणां ग्रहणम्, **नीलाभासः**—दर्शनादिक्रियाकर्मभूतनीलाभासः, **अन्यूनाधिकः**—अन्यूनातिरिक्तः, एकरूप इति यावत्। दर्शनादिक्रियाणामपि अन्यूनाधिकत्वम् अतिदेशरीत्या कथयति "**एवम्**" इति। **एवम्**—नीलवत्, **पीतादिषु यः पश्यामीत्यपि**—पश्यामीत्येवंरूप आभासो भवति सोपि स्वरूपतोऽन्यूनाधिको भवति इति पूर्वेण संबन्धः। "नीलाभासः" पीताद्याभासोपलक्षणम्, पीताद्याभासानामपि अन्यूनाधिकत्वात्। "**पश्यामीत्यपि**" इति, अपिशब्दः सङ्कल्पयामीत्यादिक्रियाभासोपलक्षणपरः, तेषामप्यनन्नाधिकत्वात्। **पुनः**—पक्षान्तरे, **ते**—आभासाः, **भगवता स्वातन्त्र्येण यदा संयोज्यन्ते**—परस्परं व्यामिश्रीक्रियन्ते, **वियोज्यन्ते**—भिन्नतया भास्यन्ते, **तदा अयम्**—प्रसिद्धः, **स्फुटत्वास्फुटत्वादिर्व्यवहारः** भवति, कथमित्यपेक्षायामाह "**नीलम्**" इति। **व्यवच्छेदनेन**—वियोजनेन, अर्थादस्यैव व्यत्ययेनास्फुटताव्यवहारः। सर्वेषु व्यवहारेषु स्फुटत्वास्फुटत्वेऽतिदिशति "**एवम्**" इति। ननु यद्ययमेव सिद्धान्तस्तर्हि द्वैतापत्तिरित्यत आह "**परमेश्वर**" इति। **पुनः**—पक्षान्तरे, **परमेश्वरस्वरूपान्तर्भूतत्वे**—परप्रमातृरूपचित्स्वरूपान्तर्ब्रुडितत्वे। "**इति**" शब्दः सङ्क्षिप्तार्थकथनसमाप्तौ।

एवमत्र श्लोकद्वययोजना। क्वचिदाभासाः—नीलाद्याभासाः तज्ज्ञानाभासाश्च, अक्षसामक्ष्यसापेक्षाः केवलं भवन्ति, अन्यत्रान्धतमासादिषु अन्यथा भवन्ति। पुनः—

---

1. पश्यामीत्येवम्—K.S.S.
2. स्फुटत्वास्फुटत्वादिव्यवहारः—K.S.S.
3. व्यवच्छेदेन—K.S.S.

नन्वेतत् नीलादिषु उपपद्यतां यत्र बाह्येन्द्रियव्यापारोऽस्ति, सुखादौ तु तदभावात् कथं वैचित्र्यमित्याशङ्क्याह:—

**सुखादिषु च सौख्यादिहेतुष्वपि च वस्तुषु ।**
**अवभासस्य सद्भावेऽप्यतीतत्वात्तथा स्थितिः ॥ ३ ॥**
**गाढमुल्लिख्यमाने तु विकल्पेन सुखादिके ।**
**तथा स्थितिस्तथैव स्यात्स्फुटमस्योपलक्षणात् ॥ ४ ॥**

सुखे स्रक्चन्दनादिके च तत्कारणे, दुःखे अहिकण्टकादौ च तद्धेतौ अतीतेऽनागते वा यद्यपि आभासः स एव तथापि अतीतमिदम्

---

पक्षान्तरे, अर्थावभासस्य सत्तायाम्, लक्षणया स्वरूपे, क्वचिद्विशेषो न भवति। केषु विकल्पेषु कीदृशेषु ? "भावि भवत्" इति ॥ २ ॥

अथ तृतीयस्य श्लोकस्य चतुर्थस्य चावतरणिकां करोति **"नन्वेतत्"** इति ।

अत्र टीका :–

**एतत्**–वैचित्र्यम् । एवमवतरणिकां कृत्वा श्लोकद्वयमुपन्यस्य व्याचष्टे । **"सुखादिषु"** इति ।

अत्र टीका :–

**"सुख"** पदं प्रसिद्धत्वेन निगदव्याख्यातम्, **"सौख्य"** इत्यादि पदं व्याचष्टे **"स्रक्"** इति । **तत्कारणे**-सुखकारणे, आदिशब्दद्वयग्राह्यं वस्त्वाह **"दुःखे"** इति । **"अतीत"** इति पदं व्याचष्टे **"व्यतीते"** इति । एतदपि निगदव्याख्यातम्, अस्योपलक्षणत्वमभिप्रेत्याह **"अनागते"** इति । **अनागते**, भविष्यतीत्यर्थः । **"अवभासस्य सद्भावे"** इति व्याचष्टे "यद्यपि" इति । **स एव**, एक एवेत्यर्थः । यद्यपि तथापि इति योजना **"अपि"** शब्दद्योत्या । व्याख्यातस्य[1] **"अतीत"** शब्दस्य हेतुपञ्चमीं व्याख्यातुं यद्यपीत्यस्य चाकाङ्क्षां पूरयितुमाह

---

1. अपिशब्दद्योत्यगव्याख्यातस्यातीत—C.

**अनागतमिदम् इति आभासान्तरेण यतो व्यामिश्रणा अनुभवामीति आभासाच्च यतो व्यवच्छेदः तेन विद्यमानेष्वपि तेषु तस्य प्रमातुः तेन प्रकारेण स्थितिर्न भवति यथा पूर्वम् अभूत् अहम् अधुना सुखी दुःखीति समर्जिततत्तन्निमित्तसामग्रीको वा इति ॥ ३ ॥**

---

"तथापि" इति। **आभासान्तरेण**—व्यतिरिक्तेनाभासेन सह, यतः—यस्माद्धेतोः। **व्यामिश्रणा**—मिश्रीभावः, योजनेति यावत्, अर्थात् अर्थावभासस्य, **अनुभवामी-त्याभासात्**—वर्तमानतावभासात्, **विच्छेदः**—वियोजना, तेन, व्यामिश्रणाविच्छे-दाभ्यां हेतोरित्यर्थः। सतिसप्तम्यर्थमाह "**विद्यमानेष्वपि**" इति। विद्यमानत्वं चात्र स्मरणकृतमेव ज्ञेयम्, अनागते तु मनोराज्यकृतम्, **तेषु**—सुखादिषु तद्धेतुषु च, "**तस्य प्रमातुः**" इति शेषत्वेनाध्याहृतम्। "**तथा स्थितिः**" इति व्याचष्टे "**तेन**" इति। एतेनाश्राद्धभोजीतिवदत्र प्रसज्यप्रतिषेध इति द्योतितम्। "**तथा**" शब्दाकाङ्क्षितं वस्त्वाह "**यथा**" इति। **यथा** सा स्थितिः **पूर्वमभूत्**, कथम्? इति, इति किमिति? "**अहमधुना सुखी**" अस्मि, "**दुःखी**" अस्मि इति, तथा अहमधुना समर्जिता-सम्यगर्जिता तत्तन्निमित्तानाम्—सुखदुःखनिमित्तानाम्, सामग्री येन तादृशः अस्मीति वा। अत्र च सूत्रानुरोधेनैतन्मात्रमुक्तम्, उपलक्ष्य-त्वेन गृहीतेऽनागते एवं योजना कार्या, यथा अग्रे भविष्यति, अधुनाहं सुखी दुःखीति समर्जिततत्तन्निमित्तसामग्रीको वेति, तथाद्य नास्तीति। एतेन पूर्वश्लोकव्याख्या सम्पन्ना।

तथा च योजना। सुखादिषु सौख्यादिहेतुषु च वस्तुषु सत्स्वपि—स्मर्यमाणतया मनोराज्यविषयत्वेन च वर्तमानेष्वपि, तथा अवभासस्य—सुखावभासस्य तद्धेत्वव-भासस्य च, सद्भावेऽपि—स्मृतिरूपमनोराज्यरूपत्वाभ्यां सद्भावेऽपि सति, प्रमातुः अर्थात् तेषु, तथास्थितिः—तथा स्थितिर्न भवति, कुतः? अतीतत्वात्, न हि अतीतं स्मर्यमाणं सुखादि तद्धेतुर्वा तादृगवभासते तथा उपलक्षणत्वमाश्रित्य अनागतत्वात्, न हि मनोराज्यलिखितं[१] भावि सुखं तद्धेतुर्वा तादृगवभासते इति।३॥

---

2. मनोराज्यलेखितम्—C.

**यदा तु विकल्पेन तानि वस्तूनि बाढम्[1] उल्लिखति तदा पौनःपुन्य-विशिष्टसुखतद्धेतूल्लेखनाभिधानकारणाभासानुप्रवेशात् आभासान्तरव्या-मिश्रणात्मना तेनैव अस्मदुक्तेन प्रकारेण न पुनरन्येन, "तथा" इति, सुखी अहमित्यादिकेन स्थितिः भवति इति संभाव्यम्। उचितमेतत् यतस्तदानीं**

---

अथ द्वितीयश्लोकव्याख्यां करोति **"यदा तु"** इति। **विकल्पेन**—स्मृति-मनोराज्यरूपया विकल्पसन्तत्या, **तानि वस्तूनि**—सुखादिरूपाणि तद्धेतुरूपाणि च वस्तूनि, **बाढम्**—अर्थित्वहेतुकेनातिशयेन, पौनःपुन्येन—आवृत्त्या, यद्विशिष्टं सुखतद्धे-तूल्लेखनम् तदेव अभिधानम्—नाम यस्य तादृशं यत्कारणं तस्य यः अवभासः तस्य योऽनुप्रवेशः—व्याप्तिः, तस्माद्धेतोः। भिन्नतया स्थितं **"तथा"** शब्दं व्याचष्टे "तेन" इति। **अस्मदुक्तेन**—"तात्कालिकाक्ष" इत्यत्रोक्तेन, **"स्थिति"**शब्देन संबद्धं **"तथा"** शब्दं व्याचष्टे **"सुखी"** इति, अस्मीति शेषः। **इत्यादिकेन** प्रकारेण, वर्तमानतयेति यावत्। सुखादेर्मनोव्यापारैकगम्यमानत्वेन **"उल्लिख्य-मान"** इत्युक्तम्। सुखहेतौ दुःखहेतौ च बाह्येन्द्रियव्यापारो यद्यपि भवत्येव तथाप्युपचारादेवमुक्तम्। **"संभाव्यम्"** इत्यनेन संभावनायामात्र लिङ् इति द्योतितम्। **"स्फुटमस्योपलक्षणात्"** इति वाक्यशेषस्य अवतरणिकां करोति **"उचितमतत्"** इति। अवतरणिकां कृत्वा व्याख्यां करोति **"यतः"** इति। **तदानीम्**—गाढोल्लेखनसमये, **असौ**—गाढोल्लेखः। ननु सूत्रे **"अतीत"** ग्रहणमेवास्ति त्वया कथं भाविनोपि व्याख्या कृतेत्यपेक्षायामाह **"अतोत"** इति। अन्यथा तन्निर्णयो न भवेदिति भावः। एतेन द्वितीयश्लोकस्य व्याख्या कृता।

तथा च योजना। तु शब्दो व्यतिरेके पूर्वश्लोकोक्तवस्तुनो व्यतिरेकं द्योतयति। विकल्पेन—स्मृतिरूपेण मनोराज्यरूपेण च विकल्पसन्तानेन, अतीते अनागते वा सुखा-दिके, गाढम्—अविच्छिन्नप्रवाहेण, उल्लिख्यमाने सति, तथा—अस्मदुक्तप्रकारेण, आभासान्तरव्यामिश्रणारूपेणेति यावत्, तथा स्थितिः—भूतभाव्यनुभवकालवत् स्फुट-तयाऽवस्थानम्, स्यात्—भवेत्। कुतः? अस्य—सुखाद्यवभासस्य स्फुटमुपलक्षणात्

---

1. गाढम्—K.S.S.

स्फुटत्वाभासमिश्रं सुखाभासम् उपलक्षयति असौ। प्रतीतग्रहणं भाविनोऽपि उपलक्षणम् ॥ ४ ॥

ननु इयता किमुक्तम् भवति—बाह्यरूपाः स्रगादयः सुखादिहेतवो बाह्यजनिताश्च सुखादयः सुख्यहमिति अभिमानहेतवः इति, ततश्च बाह्यत्वाभावे तज्जन्यत्वाभावे च न [1] तथा उक्तं स्यात्, तत्र च त एव न केचित्, ततश्च कथमुक्तम् अर्थावभासस्य सत्तायां न कापि विशेष इति सत्ताया एव अभावात् इत्याशङ्क्याह:—

**भावाभावावभासानां बाह्यतोपाधिरिष्यते।**
**नात्मा सत्ता ततस्तेषामान्तराणां सतां सदा ॥ ५ ॥**

---

अर्थात् गाढोल्लेखकृतादुपलक्षणात्, दर्शनाद्धेतोरित्यर्थः। एवञ्चात्राभासान्तरव्यामिश्रणयैवाभासवैचित्र्यं न स्वरूपत इति श्लोकद्वयाभिप्रायः। उपपूर्वात् कृतणिचो लक्षेर्ल्युटि रूपं "उपलक्षण" इति॥ ४॥

अथ पंचमस्य श्लोकस्यावतरणिकां करोति **"ननु"** इति।

अत्र टीका :–

**इयता**–श्लोकद्वयेन। गुरुः यदुक्तं भवति तदाह "**बाह्य**" इति। "**इति उक्तं स्याद्**" इति संबन्धः। इति किमित्यपेक्षायामाह "**बाह्य**" इति। अत्र शिष्य आक्षेपं करोति "**ततश्च**" इति। **ततश्च**–तस्मादुक्ताद्धेतोः, **न तथा उक्तम्**–वस्तु नेत्युक्तं **स्यात्**। ननु ततः किमित्यत आह **"तत्र च"** इति। **तत्र च**, बाह्यत्वाभावे तज्जातत्वाभावे च सतीत्यर्थः। **त एव**–सुखादय एव, **न केचित्**, केवलविकल्पोल्लिखितस्य न किञ्चित्त्वादिति भावः। ननु ते किञ्चिन्मा भवन्त्वित्यपेक्षायां पुनरपि पूर्वोक्तमेव दोषं प्रसञ्जयति "**ततश्च**" इति। "**इति**" शब्दः "**उक्तम्**" इत्यस्य कर्मत्वेन योजनीयः। अस्य हेतुमाह "**सत्ताया एव**"

---

1. न तथा इति उक्तम् स्यात्—K.S.S.

इह सुखमस्ति मम, दुःखं नास्ति ममेति ये भावाभासा अभावाभासाश्च तेषां बाह्यत्वं नाम आत्मा स्वरूपं न भवति, न हि सुखमित्यस्य स्वरूपं 'बाह्यम्' इति वपुषा भाति, सुखस्य हि सुखमेव स्वरूपम् केवलं बाह्यत्वं नाम अभासान्तरम् ईश्वरेण स्वातन्त्र्यबलादेव यदा तत्र सुखाभासे मिश्रतया भास्यते तदा तत् तस्य उपाधिरूपताम् उपरञ्जकतां विशेषणत्वं गच्छति, ततश्च यथा नीलाभासाभावे उत्पलाभासस्य न किंचित् वृत्तं स्वरूपतो राजाभासाभावे वा पुरुषाभासस्य, तथा बाह्यत्वाभासाभावेऽपि

---

इति। न हि असति धर्मिणि धर्मकल्पना युक्तेति भावः। "**इति**" शब्दः समस्ताशङ्क्यमानवस्त्वाक्षेपपरः। **आशङ्क्य**, प्रश्नोत्तरपूर्वमाशङ्काविषयतां नीत्वेत्यर्थः।

एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**भाव**" इति।

अत्र टीका:–

**भावाभासाः**–सुखाभासाः, **अभावाभासाः**–दुःखाभावाभासाः, **तेषाम्**–भावाभावाभासानाम्, "**बाह्यता**" इति प्रथमान्तं पदं व्याचष्टे "**बाह्यत्वम्**" इति। "**आत्मा**" इति पदं व्याचष्टे "**स्वरूपम्**" इति। कुतो न भवतीत्यत आह "**न हि**" इति। हि–यस्मात्। **सुखमित्यस्य**–सुखाख्यस्य वस्तुनः, **स्वरूपम्**–आत्मा, "**बाह्यम्**" **इति वपुषा**–बाह्यतारूपेण, **भाति**। न हीदं बाह्यमिति कोपि सुखं गृह्णाति अपितु "सुखम्" इति। तर्हि बाह्यत्वं भासमानं किमस्तीत्यत आह "**केवलम्**" इति। **आभासान्तरम्**–सुखाभासव्यतिरिक्त आभासः। **ईश्वरेण**–परप्रमात्रा, **यदा**–यस्मिन् बाह्यताग्रहणकाले, **भास्यते**–भासनविषयतां नीयते। **तत्**–बाह्यत्वम्, **तस्य**-सुखाभासस्य। "**उपाधि**" पदं व्याचष्टे "**उपरञ्जकताम्**" इति। पर्यायान्तरमाह "**विशेषणत्वम्**" इति। फलितमाह "**ततश्च**" इति। **स्वरूपतः न किञ्चिद् वृत्तम्**–न कापि स्वरूपहानिः संपन्ना। **तथा**–तद्वत्। सर्वाभिमतबाह्यत्वाभिप्रायेणाप्रस्तुतस्यापि कान्तादेर्ग्रहणम्, सुखादेर्हि केचन सूक्ष्मदर्शिन एव बाह्यत्वमामनन्ति। **म्लानता**–शिथिलता। एतेन "**आत्मा**" इत्यन्तं

**सुखाभासस्य दुःखाभावाभासस्य कान्ताभासस्य च न स्वरूपतः काचन म्लानता इति आन्तराणां सदैव स्थितिः एषाम् ॥ ५ ॥**

**इह अन्तःकरणे बुद्धिदर्पणात्मनि नीलादीनामवभासानाम् आन्तरत्वमप्यस्ति अन्तःकरणमध्येभवत्वात्, बाह्यत्वमपि ग्राह्यतारूपं प्रमातुः विच्छेदेनावभासात्, बाह्यत्वं च केवलं बाह्यप्रत्यक्षता, अत्र च अवस्थाद्वये-**

---

व्याख्यातम्। **"सत्ता"** इत्यादिवाक्यं व्याचष्टे "इति" इति। **"ततः"** इति पदं व्याचष्टे "इति" इति। **"सत्ता"** इति पदं व्याचष्टे "स्थिति" इति। आभासपरामर्शकं विशेष्यवाचकं **"तेषाम्"** इति पदं व्याचष्टे "आन्तराणाम्" इति। **"सताम्"** इत्यस्य **"आन्तराणाम्"** इति विशेषणेन संबन्धः। एषाम आभासानां कीदृशानाम्? **आन्तराणां सताम्,** प्रमात्रैक्येन वर्तमानानामित्यर्थः।

एवमत्र योजना। पण्डितैः भावाभावावभासानां बाह्यता उपाधिः–विशेषको धर्म इष्यते, उत्पलस्येव नीलत्वम्, तैः पण्डितैः बाह्यता आत्मा स्वरूपं नेष्यते। ततः कारणात् तेषाम् भावाभावावभासानाम् आन्तराणां सतां सदा सत्ता भवति। ततश्च बाह्यत्वाभावे न तेषां सत्ताया अभावः। ततश्च तस्यां सत्तायां तेषां विशेष एवेति भाव इति ॥ ५ ॥

अथ षष्ठस्य श्लोकस्यावतरणिकां करोति **"इह"** इति।

अत्र टीका :–

**अन्तःकरणे**–नीलाद्यपेक्षयाऽन्तरसुखादिग्रहणसाधनत्वेनान्तःकरणतया स्थिते, **बुद्धिदर्पणात्मनि**––निर्मलतया बाह्यप्रतिबिंबसहिष्णुत्वेन मुकुरस्थानीये बुद्धितत्त्वे, **नीलादीनामवभासानाम्**–नीलपीताद्याकाराणामाभासानाम्, **आन्तरत्वमप्यस्ति**, कुत इत्यत आह "**अन्तःकरण**" इति, **भवत्वात्**–स्फुरत्वात्, तथा **बाह्यत्वमप्यस्ति** कुतः? **प्रमातुः**–परप्रकाशरूपात् प्रमातुः, **विच्छेदेनावभासात्**, अन्यथा इदमिति नीलादिसमकक्षतया भाना–

ऽपि अर्थक्रियाम् अमी कुर्वन्त्येव अन्ततो ज्ञानं स्वविषयम् । यत् पुनः प्रमातृतादात्म्यलक्षणम् आन्तरत्वं तत्र अमी कथं[1] न कांचित् अर्थक्रियां विदधीरन् इत्याशङ्क्याह:—

**आन्तरत्वात्प्रमात्रैक्ये नैषां भेदनिबन्धना ।**
**अर्थक्रियापि बाह्यत्वे सा भिन्नाभासभेदतः ॥ ६ ॥**

---

योगात्, चः तुशब्दार्थे । **केवल बाह्यत्वं च बाह्यप्रत्यक्षता**—बाह्येन्द्रियप्रत्यक्षता भवति । नन्वेवं भवतु ततः किमित्यत आह "**अत्र च**" इति । **अवस्थाद्वयेऽपि**—बाह्यत्वान्तरत्वरूपे अवस्थायुगलेऽपि । **अमी**—नीलाभासादयः । **अन्ततः**—परमार्थतः, **स्वविषयं ज्ञानमर्थक्रियाम्**—स्वविषयज्ञानरूपामर्थक्रियाम् । **कुर्वन्त्येव**—न तु न कुर्वन्ति, स्वानुभवस्यात्र साक्षित्वादिति भावः । **पुनः**—पक्षान्तरे, **यत् प्रमातृतादात्म्यलक्षणम्**—परप्रमात्रैक्यस्वरूपम्, **आन्तरत्वं** भवति । **तत्र**—तस्मिन्नान्तरत्वे, **अमी**—नीलावभासादयः **कांचिदर्थक्रियां कथं न विदधीरन्**—कथं न कुर्वन्तीति संभाव्यते, न च सा दृश्यते इति संभावनागर्भं कथनम् । एतेन योगिनां सदा सर्वविषयं प्रतिविषयं च ज्ञानं वर्तत इति भ्रमोपि निरस्त एव ज्ञातव्यः, देहोपाधि तावत् तदसंभवात् । न हि सर्वदाहे समर्थोप्यग्निकणः कणत्वावस्थायां तत्र समर्थो दृश्यते । ननु तर्हि योगिनां सामान्यजनेभ्यः को भेदः इति चेन्न, तद्दृष्टया हि भेदकल्पना कापि न विद्यत एव, त्वद्दृष्टया भवन्ती तु सा तेषामेतज्ज्ञानरूपा एव, न हि अतिशयप्राप्तिभ्रमेण ग्रस्ताः सामान्यजनाः अत्र समाश्वस्ता भवन्ति । ननु तथापि कथं तेषां योगित्वमिति चेत्, सत्यम्, ते हि सर्वस्वरूपचिन्मात्रनिश्रिताः स्वात्मनि तत्त्वमेव पश्यन्ति, तेन च स्वात्मानं सर्वव्यापकं जानन्ति, तेन चातितृप्ताः न किमपि वाञ्छन्ति, न प्रवाहागतं त्यजन्ति । तदुक्तम् :—

"शान्तैर्न गृह्यते किञ्चिन्न च सन्त्यज्यतेऽपि च ।
त्यागादाने न जानन्ति तेऽतस्तैः शान्तमास्यते ॥"

---

1. कस्मात्—K.S.S.

इति। अत्रास्मदीयं पद्यमपि :—

"चिता सिद्धं यत्तु न तदचिदिति वक्तुं समुचितम्
तया ऽसिद्धं नाचिन्न चिदपि कदाचित् क्वचिदपि।
चितो द्वारैः सिद्धं यदपि च समस्तं तदपि चित्
इतीदं बुद्ध्वान्तः कुरु निजकृतिं मूढवदिमाम्॥"

इति। ननु तर्हि योगिनां सर्वज्ञत्वं सर्वव्यापकत्वं च किं लेशतोऽपि नास्तीति चेन्नैवम् चिन्मात्रस्वरूपं हि सर्वसाक्षित्वेन सर्वज्ञम्, सर्वसत्तादायकत्वेन च सन्मात्रतया सर्वव्यापकमेव, तत्रैव च स्वात्मत्वे निश्चितानां तेषामान्तरस्पर्शभा-[1] वेनोभयं विद्यते एव। तदुक्तम् :—

"दिदृक्षयेव सर्वार्थान् यदा व्याप्यावतिष्ठते।
तदा किं बहुनोक्तेन स्वयमेवावभोत्स्यते"॥

इति। अत्र ह्ययमभिप्रायः। दिदृक्षासमये द्रष्टुः दिदृक्षाविषयीकृतेषु बहुषु वस्तुषु यादृशी सूक्ष्मस्पर्शमात्ररूपा व्याप्तिर्भवति तादृश्येव योगिनः सर्वविषयत्वेनोक्ता, न तु त्वदभिमता, ययाऽसौ योगी महातृष्णाग्रस्तस्य तव समस्तदेशकालगतान् भावान् कथयेद्येन त्वदभिमतसिद्धिः स्यात्। देहस्थितिं तावत्तदसंभवात्, पर्यन्ते तु त्वद-भिमतासिद्धेः, सा सूक्ष्मा व्याप्तिश्च मूढेषु तात्कालिकतृप्तिमात्ररूपा विद्युद्द्योतित-रत्नवत् क्षणमात्रमेव स्फुरन्ती न विषयीभवति। प्रबुद्धानाम् अन्यत्र सम्यगभ्य-स्तमात्रापि हस्तमायात्येव, सुप्रबुद्धास्तु सर्वदा तन्मया एवेति कापेक्षा तेषां क्षणस्था-यिन्यामस्याम्। अतिसूक्षत्वमेवापेक्ष्य च "स्वयमेव" इत्याद्युक्तम्। तदुक्तम् :—

"यदभिन्नं स्वसंवित्तौ तत्परस्य यदोच्यते।
तदा भिन्नमिवाभाति शाब्दीं भूमिमुपाश्रितम्"॥

इति। भवन्ति च कदाचिदतिनिर्मलेभ्यो योगिभ्यस्तपआदिप्रभावेण देशकालविप्र-कृष्टविषया आभासाः, परन्तु तेऽपि लेशत एव भवन्ति न तु सामस्त्येन, येन त्वदाशा पूर्णा स्यात्। ईश्वरेच्छानुसारेणैव च ते उत्पद्यन्ते न त्वदिच्छानुसारेण, स्वप्रयोजने विमुखानां तेषां त्वत्प्रयोजनानुसरणायोगात्। ये तु तदनुसरन्ति तेभ्य ऐन्द्रजालि-

1. अन्तरस्पर्शभावेन—C.

"प्रमात्रैक्ये" इति, तन्निमित्तकं यत् आन्तरत्वं तस्माद्धेतोः, एषाम् आभासानाम् अर्थक्रिया न काचित् अस्ति, सा हि अर्थक्रिया भेदे सति भवति, स हि नीलाभासः पीताभासात् यतो भिद्यते यतश्च प्रमातुर्भिद्यते ततः स्वेन साध्यां[1] नियतां भिन्नाम् अर्थक्रियां तस्य प्रमातुः कुर्यात्,

केभ्यो नम एवेत्यलम् प्रसक्तानुप्रसक्त्या। प्रकृतमनुसरामः। **"इत्याशङ्क्याह"** इति, एतां शिष्यशङ्कां संभाव्य कथयतीत्यर्थः। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । **"आन्तरत्वात्"** इति।

अत्र टीका :–

**"प्रमात्रैक्ये आन्तरत्वात्"** इति पदद्वयं व्याचष्टे **"तन्निमित्तकम्"** इति। **तन्निमित्तकम्**–प्रमात्रैक्यनिमित्तकम्। एतेनेयं निमित्तसप्तमीति सूचितम्। पंचमीविभक्तिं व्याचष्टे **"तस्माद्धेतोः"** इति। **"एषाम्"** इति पदं व्याचष्टे **"आभासानाम्"** इति। **"अर्थक्रिया"** विशेषणं **"भेदनिबन्धना"** इति पदं हेतुगर्भत्वेन व्याचष्टे **"सा हि"** इति। **भेदे सति**, भेदे निमित्तभूते सतीत्यर्थः। ननु कथमर्थक्रिया भेदे सति भवतीत्यपेक्षायां समर्थनं करोति **"स हि"** इति। **यतः**–यस्मात्कारणात्, **भिद्यते**–भगवदपोहनशक्त्या स्वयं भेदविषयतां भजते, कर्मकर्तरि लकारः । एवमुत्तरत्र । **स्वेन साध्यां नियताम्**–स्वमात्रे लग्नाम्, **अर्थक्रियाम्**–स्वविषयज्ञानादिरूपाम्, **"कुर्यात्"** इति। तथैव भगवन्मायाशक्त्या उत्थानादिति भावः । **तदा**–प्रमात्रान्तरत्वावस्थायाम्। ननु तर्हि भावानां कदापि नार्थक्रियाकारित्वं भवेत्, ते हि सदैव प्रमात्रन्तर्गता एव, न तु कदाचिदेव केनापि कारणेन, सत्यम्, यथा भासमाना अपि भावाः सदा तदन्तर्गता एव तथा तत्कृतार्थक्रियापि[2] भासमानापि तदन्तर्गता एवेति यथा न भावैः प्रमातृशरीरे भेदाशङ्का तथा तत्कृतयाऽर्थक्रिययापि सा न युक्ता एव।

1. स्वसाध्याम्—K.S.S.
2. तत् कृत्वा अर्थक्रियापि—C.

**न च एष तदा भेदोऽस्ति प्रमात्रैक्यात्। सा हि अर्थक्रियाभासभेदनियता, तथा च कान्ताभासस्य बाह्यत्वेऽपि सति आभासान्तरस्य आलिङ्गनलक्षणस्य व्यपगमे दूरीभवति, इयम् इति च आभासान्तरस्य उपगमेऽन्यैव प्राक्तनाह्लादविपरीता दृश्यते अर्थक्रिया, अत आभासभेदाभावः यतः प्रमात्रैक्यकृते आन्तरत्वे तस्मात् न अर्थक्रिया इति। अर्थक्रियाभा-**

---

येषां तु ते भावा न भान्ति तेषां सार्थक्रियापि न भात्येव समानन्यायत्वात्, देहस्थितिं तावच्च भावभानं तदर्थक्रियाभानञ्च दुर्निवारमेव। अभानन्तु अन्यभावेन ज्ञानमात्रमेव। तदुक्तम् :—

"प्रकाशमाने परमार्थभाने नश्यत्यविद्यातिमिरे समस्ते।
तदा बुधा निर्मलदृष्टयोऽपि किञ्चिन्न पश्यन्ति भवप्रपञ्चम्" ॥

इति। अत्र च निर्मलदृष्टित्वं भावभानरूपमेव ज्ञेयम्, ज्ञानिनो हि तीक्ष्णेक्षणत्वेन लौकिकनिपुणवदेव सम्यक् पश्यन्ति, अन्यथा जडत्वापातात्। तदुक्तम् :—

"ते ह्यज्ञा निपुणा इव"

इति। अन्यभावेन ज्ञानमपेक्ष्य "न पश्यन्ति" इत्युक्तमित्यलं प्रपञ्चेन। एतेन **"अर्थक्रिया"** इत्यन्तं कृतव्याख्यम्। ननु बाह्यत्वे सा किन्निबन्धनास्तीत्यपेक्षायाम् **"अपि"** इत्यादि श्लोकशेषं व्याचष्टे **"सा हि"** इति। तसिलर्थं व्याख्यातुं "हि" शब्दप्रयोगः। **"सा"** इति पदं व्याचष्टे **"अर्थक्रिया"** इति। **"बाह्यत्वेऽपि"** इत्यत्र योजयितुं युक्तमप्युदाहरण एव योजयिष्यति। आभासभेदे नियता **आभासभेदनियता**। कथमित्यपेक्षायां समर्थनमुपक्रमते **"तथा च"** इति। **आलिङ्गनलक्षणस्य**—तया सह आलिङ्गनस्वरूपस्य, **व्यपगमे**-दूरीभवने, **दूरीभवति**। **"इयम्" इति चाभासान्तरस्य**—इयं कान्ता दूरे गतेत्येवंरूपस्यान्यस्याभासस्य, **उपगमे**—प्राप्तौ सत्याम्, **अन्या**—प्रह्लादाभावरूपा प्रत्युत सन्तापरूपा, **अतः**—अस्माद्धेतोः। **"इति"** शब्दः प्रमेयसमाप्तौ। नन्वर्थक्रियाभावे भावाभावयोरसत्त्वमेवायातमिति[1] बौद्धमतमाशङ्क्याह **"अर्थक्रिया"**

---

1. भावे भावयोरक्षत्वम्—C.

सोऽपि च आभासान्तरमेव इति अर्थक्रियाकारित्वमपि न भावानां सत्त्वम्, येन तदभावे स्वरूपतोऽभावः स्यात् ॥ ६ ॥

ननु च बाह्याभासव्यतिभेदनकाले आन्तराभासो विरोधात् विच्छिन्न इति कथम् इदम् उक्तम् 'आन्तराणां य आभासः स सदा' इति? एतत् परिहरतिः—

**चिन्मयत्वेऽवभासानामन्तरेव स्थितिः सदा ।**
**मायया भासमानानां बाह्यत्वाद्बहिरप्यसौ ॥ ७ ॥**

इह अवभासानां सदैव बाह्यताभासतदभावयोः अपि अन्तरेव

---

इति । **आभासान्तरमेव**—भावाऽभावाभासादन्य एवाभासः । **इति**—अतः कारणात, **तदभावे**—अर्थक्रियाया अभावे, **स्वरूपतोऽभावः**—भावाभावाभासयोः स्वरूपाभावः ॥ ६ ॥

अथ सप्तमस्य श्लोकस्यावतरणिकां करोति **"ननु च"** इति।

अत्र टीका :–

बाह्याभासेन यद् व्यतिभेदनम्—विशिष्टीकरणम्, तस्य काले–समये, यदा "बाह्यमिदम्" इति वस्तु गृह्यते तदेति यावत् । **आन्तराभासः**— "आन्तरमिदम्" इत्याभासः। **इति**—अतः कारणात्। किमुक्तं भवतीत्यपेक्षायामाह **"आन्तर"** इति। **आन्तराणाम्**–प्रमात्रन्तःस्थितानां वस्तूनाम्, **"इति"** शब्दः उक्तिसमाप्तौ, **एतत्**—शङ्कितं वस्तु, **परिहरति**—अयुक्तत्वेन परिहारविषयतां नयतीत्यर्थः । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"चिन्मयत्वे"** इति ।

अत्र टीका :–

**अवभासानाम्**—नीलसुखादिरूपाणामाभासानाम्, **"सदैव"** इति व्याचष्टे **"बाह्यताभासतदभावयोः"** इति, बाह्यताभाससमये आन्तरा-

---

1. स्वरूपत एवाभावः—K.S.S.

**प्रमातृप्रकाश एव स्थितिः, यत एते चिन्मयाः, अन्यथा नैव प्रकाशेरन् इति उक्तं यतः । यदा तु मायाशक्त्या विच्छेदावभासनस्वातन्त्र्यरूपया[1] बाह्यत्वम् एषाम् आभास्यते तदा तत् अवलम्ब्य अवभासमानानाम् असौ स्थितिः बहिरपि अन्तरपि । नायम् अन्तराभासो बाह्यत्वस्य विरोधी प्रत्युत सर्वाभासभित्तिभूतोऽसौ, तत् कथं विरोधः इति युक्तमुक्तम् 'सदैव आन्तराणां सत्ता' इति ॥ ७ ॥**

---

भाससमये वेत्यर्थः । **"अन्तरेव"** इति व्याचष्टे **'प्रमातृ"** इति । "एव" शब्दस्य काकाक्षिवदुभयत्र संबन्धः । कुत इत्यपेक्षायां **"चिन्मयत्वे"** "इति" व्याचष्टे **"यतः"** इति । **"यतः"** शब्देन सप्तमीद्योत्यस्य हेतुत्वस्य कथनम्, **"स्थिति"** शब्दस्य स्फुटत्वेन निगदव्याख्यानम् । सूत्रेऽनुक्तमपि व्यतिरेकरीत्या हेतुमाह **"अन्यथा"** इति । **"उक्तम्"** इति, " प्रागिवार्थः " इत्यत्र । **"यतः"** इति हेतुत्वद्योतनार्थम् । पूर्वार्धं व्याख्यायोत्तरार्धं व्याचष्टे **"यदा"** इति । विच्छेदेन—परप्रमातुरन्योन्यतश्च भेदेन, अवभासने—नीलाद्यवभासने, स्वातन्त्र्यम्—स्वतन्त्रता, तद्रूपं यस्यास्तादृश्या । **एषाम्**—नीलाद्याभासानाम्, **तत्**—बाह्यत्वम्, **अवलम्ब्य**— आश्रित्य । **"असौ"** इति पदं व्याचष्टे **"स्थितिः"** इति । **"अपि"** शब्दात् **"अन्तरपि"** इत्युक्तम् । एतेन **"बाह्यत्वात्"** इत्यत्र ल्यब्लोपे पञ्चमीति द्योतितम् । सूत्रेऽनुक्तमपि फलितं स्वाभिप्रायं कथयति **"नायम्"** इति । **असौ**—अन्तराभासः, **"तत्कथं विरोधः"** इति न हि मृदाभासो घटाभासविरोधीति भावः । **इति**—अतः कारणात्, **इति**—एतत्, आचार्येण **युक्तमुकम्** । इति किमिति ? **"सदैव"** इति, **आन्तराणाम्**—आन्तरत्वेन स्थितानां नीलादीनाम् ।

एवमत्रोत्तरार्धे योजना । मायया भासमानानाम्—भेदेन भासमानानाम्, अर्थात् एषामान्तराणां नीलाद्याभासानाम्, मायया बाह्यत्वात्—मायाकृतं बाह्य-

---

1. विच्छेदनावभासन—K.S.S.

ननु बाह्यत्वे सति अर्थक्रिया, तच्च बाह्येन्द्रियगम्यत्वम्, न च विकल्पोल्लिखितानां तत् संभवति, तत् कथम् अमीषाम् अर्थक्रिया स्यात्, दृश्यते च विकल्पोल्लिखितः पिशाचादिः त्रासादिविधायी इत्याशङ्क्याह:—

**विकल्पे योऽयमुल्लेखः सोऽपि बाह्यः पृथक्प्रथः।**
**प्रमात्रैकात्म्यमान्तर्यं ततो भेदो हि बाह्यता ॥ ८ ॥**

विमर्शविशेषरूपे विकल्पज्ञाने य उल्लिख्यमानः कान्ताचौरादिः अर्थः सोऽपि बाह्यः, न केवलं बहिरवलोक्यमानः, यस्मात् सोऽपि प्रमातुः सकाशात् पृथगेव प्रथते 'अयम्' इति, यच्च प्रमातरि अहमित्येव विश्रान्तत्वं तत् आन्तरत्वम्, अन्तरिति निकटम्, तच्च किंचित् अपेक्ष्य, अपेक्षणीयश्च

---

त्वमाश्रित्य, असौ स्थितिः बहिरपि भवति। "अपि" शब्दः समुच्चये, काकाक्षिवत् मायाशब्दस्योभयतो योजनेति ॥ ७ ॥

अथाष्टमस्य श्लोकस्यावतरणिकां करोति **"ननु"** इति।

अत्र टीका :–

**तच्च**–बाह्यत्वञ्च, **तत्**–बाह्येन्द्रियगम्यत्वम्, **अमीषाम्**–विकल्पोल्लिखितानाम्। मास्त्वित्यत आह **"दृश्यते च"** इति। **"आदि"** शब्देन हर्षादिकारिण्याः स्त्र्यादेर्ग्रहणम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। **"विकल्पे"** इति।

अत्र टीका :–

विमर्शस्य-सामान्यतया स्थितस्य विमर्शस्य, विशेषरूपे, **विमर्शविशेषरूपे, उल्लिख्यमानः**–उल्लेखविषयतां नीयमानः, सोऽपि–कान्ताचौरादिरपि, **यस्मात्**–यतः कारणात्, **प्रथते**–प्रकाशते। कथं प्रकाशत इत्यत आह **"अयम्"** इति, इदन्तयेत्यर्थः। कुतस्तदेवान्तरत्वमित्यत आह **"अन्तरिति"** इति। **निकटम्**–समीपम्, **तच्च**–निकटञ्च, **अपेक्ष्य** भवतीति शेषः। **अपेक्षणीयान्तराभावे**, प्रमातुर्व्यतिरिक्तस्यापेक्षणीयस्याभावे सतीत्यर्थः। **ततश्च**–तस्माद्धेतोश्च, तादा–

सर्वत्र प्रमातैव अपेक्षणीयान्तराभावे, ततश्च प्रमातरि निकटं तादात्म्य[1]—प्राप्तमेव इति, ततो यत् भिन्नं तत् बाह्यमेव इति युक्ता उल्लेखस्यापि अर्थक्रिया ॥ ८ ॥

ननु कुम्भकारादिव्यापारेण घटादेः अस्तु बाह्यत्वम्, अन्तःकरण-गोचरस्य तु किं कृतं तत् इत्याशङ्क्य आहः—

**उल्लेखस्य सुखादेश्च प्रकाशो बहिरात्मना।**
**इच्छातो भर्तुरध्यक्षरूपोऽक्ष्यादिभुवां[2] यथा ॥ ९ ॥**

अन्तर्विकल्पप्रतिबिम्बितस्य नीलादेः यो बहिरात्मना प्रमातृ-विच्छिन्नेन स्वभावेन प्रकाशः, स भर्तुः अन्तराभासान् बिभ्रतो बहिः सृष्टिं च पुष्णतः ईश्वरस्यैव इच्छया, यथैव चक्षुरादिविषयभूतानां प्रत्यक्ष-

---

त्म्यम्–ऐक्यम् प्राप्तम्, **तादात्म्यप्राप्तम्**। **इति**–अस्मात् कारणात्। **ततः**–तस्मात् कारणात्। **ततः**–तस्मात्प्रमातुः। **इति**–अतो हेतोः, **उल्लेखस्य**–लक्षणया उल्लेखविषयस्य ॥ ८ ॥

अथ नवमस्य श्लोकस्यावतरणिकां करोति "**ननु**" इति। स्पष्टम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**उल्लेखस्य**" इति। "**उल्लेखस्य**" इति पदं व्याचष्टे "**अन्तः**" इति। "**भर्तुः**" इति पदं व्याचष्टे "**अन्तः**" इति। डुभृञ् धारणपोषणयोरिति धात्वनुसारेणार्थद्वयं कृतम्। "**इच्छया**" इत्यनेन तृतीयार्थेऽत्र तसिल् इति सूचितम्। एतेन "**भर्तुः**" इत्यन्तं गतव्याख्यम्। "**अध्यक्ष**" इत्यादि दृष्टान्तपदं व्याचष्टे "**यथैव**" इति। अक्ष्यादयः–नेत्रादयः, तेषां याः भुवः–विषयाः, तासाम्, इति विग्रहः सूचितः। "**अध्यक्षरूपः**" इति व्याचष्टे "**प्रत्यक्ष**" इति। "**नीलादीनाम्**"

---

1. तादात्म्यं प्राप्तम्—K.S.S.
2. अक्षादिभुवाम्—K.S.S.

ज्ञानशब्दवाच्यो बाह्यात्मना प्रकाशो नीलादीनाम् । एतदुक्तं भवति—कुम्भकारव्यापारो नाम परमार्थतः ईश्वरेच्छैव तदवभासितकायस्पन्दपर्यन्ता, न पुनरन्यः कश्चन सः, ततश्च तथा ईश्वरेच्छया प्रकाशात् अबहिर्भूता अपि नीलाद्या बाह्यकरणगोचरीभूताः कल्पितात् प्रमातुः विच्छिन्नरूपत्वेन[1] बाह्यत्वेन भासन्ते, तथा अन्तःकरणगोचरीभूता अपि इति को विशेषः । सुखदुःखप्रायास्तु भरताद्युक्तरूपाः स्थायिव्यभिचारिरूपा

---

इति विशेष्याध्याहारः । दुर्बोधत्वमाशङ्क्य पुनः कथनं प्रतिजानीते **"एतदुक्तं भवति"** इति। किमुक्तं भवतीत्यपेक्षायामाह **"कुम्भकार"** इति। कीदृशीच्छा ? तदवभासितः—ईश्वरेणैवापोहनशक्त्याऽवभासितः, यः कायस्पन्दः-कुम्भकारशरीरचेष्टा, सः पर्यन्तः यस्यास्तादृशी । अन्तःस्फुरितेच्छैव हि बाह्यस्पन्दभावेन स्फुरति । तदुक्तम् :—

"लोकेऽपि किल गच्छामीत्येवमन्तःस्फुरैव या ।
सा देहं देशमक्षांश्चाप्याविशन्ती गतिक्रिया ॥"

इति । **पुनः**—पक्षान्तरे, **सः**—कुम्भकारव्यापारः । नन्वेवं भवतु ततः किमित्यत आह **"ततश्च"** इति । **ततश्च**—तस्मात्कारणाच्च, **यथा ईश्वरेच्छया प्रकाशात्**—परप्रमातुः, **अबहिर्भूता अपि**—बहिर्देशमगता अपि, **नीलाद्याः**—बाह्यान्तः-करणग्राह्याः नीलपीतादयः, **बाह्यकरणगोचरीभूताः** सन्तः **कल्पितात्प्रमातुः**—देहादेः प्रमातुः, **विच्छिन्नरूपत्वेन बाह्यत्वेन**—इदन्ताग्राह्यत्वरूपेण बहिर्देशस्थत्वेन, **भासन्ते, तथा**—तद्वत्, **अन्तःकरणगोचरीभूता अपि** नीलाद्याः विच्छिन्नरूपत्वेन बाह्यत्वेन भासन्ते, परप्रमात्रपेक्षया अन्तःकरणस्यापि बाह्यत्वात्, अन्यथा "इदम्" इति ग्रहणायोगादिति भावः । भरतादौ—भरतशास्त्रादौ, उक्तरूपाः विभावादिशब्देनोक्तरूपाः **भरताद्युक्तरूपाः**, **सुखदुःखप्रायाः**, न तु सर्वथा सुखदुःखमात्ररूपाः, हासादिरूपत्वस्यापि स्थितत्वात्,

---

1. विच्छिन्नरूपेण—K.S.S.

**रतिनिर्वेदादयोऽन्तःकरणैकगोचरीभूता[1] बहिरात्मना भान्ति, सङ्कल्पेषु यद्यपि च क्षेत्रज्ञस्यैव स्वातन्त्र्यम् तथापि चित्परमार्थताया न्यग्भावयितुम् अशक्यत्वात् ईश्वरस्यैव तत् वस्तुतः, यथोक्तं ग्रन्थकृतैव:—**

**'यद्यप्यर्थस्थितिः प्राणपुर्यष्टकनियन्त्रिते ।**

**जीवे निरुद्धा तत्रापि परमात्मनि सा स्थिता ॥**

**तदात्मनैव तस्य स्यात्कथं प्राणेन यन्त्रणा ।'**

---

**स्थाय्यव्यभिचारिरूपाः**—स्थाय्यष्टकत्रयस्त्रिंशत्संख्याकव्यभिचारिरूपाश्च, **रतिनिर्वेदादयः**—लक्षणया रतिनिर्वेदादिसंयोगप्रादुर्भूतं रसाष्टकम्, अन्तःकरणस्यैकम्-केवलम्, गोचरीभूताः, **अन्तःकरणैकगोचरीभूताः** सन्तः, **बहिरात्मना**—बाह्यत्वेन, **भान्ति** । परप्रमातुर्विच्छिन्नीभूतत्वात[2] नीलादीनां द्विविधकरणग्राह्यत्वेन बाह्यत्वम्, सुखादीनान्तु अन्तःकरणग्राह्यत्वमात्रेणेति भावः । लौकिकसुखादीनां तु तादृक्पुष्ट्यभावाद् भरतशास्त्रप्रसिद्धरसग्रहणम् । यद्यपि तत्र दुःखस्यापि सुखरूपतैव तथापि दुःखतया स्फुरणमप्यनिवार्यमेव पानके इव मरिचतिक्ततायाः । पानके भातापि हि मरिचतिक्तता ऽऽस्वादमधिकं करोति । तथा विभावादिसंयोगे भातमपि दुःखमास्वादमेव जनयति, अन्यथा रसत्वायोगात्, रसो हि मिलितविभावादिस्वादमात्रमेव, तदुक्तं भरते :—

"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः"

इति । निर्वेदस्थायिकस्य नवमस्य शान्तरसस्येहाप्रस्तुतत्वात् प्रकृतरसाष्टकसमकक्षतया कथनमयुक्तमेवेति नान्यथा शङ्कनीयम् ।

ननु सङ्कल्पे स्फुटमेव जीवस्यैव स्वातन्त्र्यं दृश्यते त्वया कथमीश्वरस्योच्यत इत्यत आह **"सङ्कल्पेषु"** इति । **क्षेत्रज्ञस्यैव**—देहाभिमानिनो जीवस्यैव, **न्यग्भावयितुम्**—नाशयितुम्, **तत्**—स्वातन्त्र्यम्, **वस्तुतः**—परमार्थतः । न हि

---

1. अन्तःकरणैकगोचराः—K.S.S.
2. विच्छिन्नीभूताः—C.

इति। यत्र तु अनिच्छोरेव क्षेत्रज्ञस्य स्वरसवाहिव्याक्षेपसारा साङ्कल्पिकी सृष्टिः तत्र स्फुटः ईश्वरस्यैव व्यापारः। तस्मात् साङ्कल्पिकानामपि बहिर्भावे परमेश्वरेच्छैव हेतुरिति सिद्धान्तः॥ ९॥

अधुना पूर्वोक्तम् ऐक्यं माहेश्वर्यं च निगमयतिः—

**तदैक्येन विना न स्यात्संविदां लोकपद्धतिः।**
**प्रकाशैक्यात्तदेकत्वं मातैकः स इति स्थितम्॥ १०॥**

**स एव विमृशत्त्वेन नियतेन महेश्वरः।**
**विमर्श एव देवस्य शुद्धे ज्ञानक्रिये यतः॥ ११॥**

---

गृहाद्बहिर्निर्गतं दैपमर्चिः गृहद्वारसंबन्धीति वक्तुं युक्तमिति भावः। तथा चास्मदीयं पद्यमपि :–

"प्रमातृत्वं भातं यदपि च शरीरादिनिवहे
तथाप्येतद्द्वारा स्फुरति ननु चिन्मात्रनभसः।
गृहद्वारैर्ज्योतिः प्रसरति यदेतद्बहिरिदम्
गृहान्तःस्थस्यैव भवति खलु दीपस्य नियतम्"॥

इति। अत्र श्रीमदुत्पलदेवस्य सम्मतिमाह **"यथोक्तम्"** इति। **ग्रन्थकृता**—श्रीमदुत्पलदेवेन। किमुक्तमित्यपेक्षायामाह **"यद्यपि"** इति। **अर्थस्थितिः**–अर्थविषयो ज्ञानादिव्यवहारः, **निरुद्धा**—नियता। न हि प्राणपुर्यष्टकरहिताद् घटादेरर्थस्थितिर्दृश्यते। **सा**—अर्थस्थितिः, **तदात्मना**—परमात्मरूपेण, **तस्य**—परमात्मनः, **यन्त्रणा**—परिच्छेदः। **"इति"** शब्दः प्रमेयसमाप्तौ। स्वरसवाही–स्वेच्छया प्रसरणशीलः यः व्याक्षेपः स सारो यस्यास्तादृशी। कदाचिद्धि जीवः स्वेच्छां विनैव सङ्कल्पविवशीभवति। फलितमाह **"तस्मात्"** इति। **राद्धान्तः**–सिद्धान्तः॥ ९॥

अथ दशमैकादशयोः श्लोकयोरवतरणिकां करोति **"अधुना"** इति।

यत् एतत् पूर्वोक्तेन ग्रन्थेन उपपादितम्, "तत्" इति, तस्मात् हेतोः, संविदां ज्ञानानाम् ऐक्येन विना, लोकपद्धतिः लोकमार्गः सर्वो व्यवहारो न संभवेत्, संभवति च अयम्, तस्मात् ऐक्यम् आसाम् । न चैतत् दुर्घटम् यतो विषयप्रकाश एव संवित् उच्यते, केवलं विषयोपराग-महिम्ना बहिर्मुखतया नीलप्रकाशोऽन्यः, पीतप्रकाशश्चान्यः, परमार्थतस्तु प्रकाशस्य देशकालाकारसङ्कोचवैकल्यात् एकत्वमेव, इत्येक एव प्रकाशो-ऽन्तर्विश्रान्तः, स एव च प्रमाता उच्यते इति स्थितम् इदानीमुपपत्तितः ॥१०॥

---

अत्र टीका :–

**ऐक्यम्**—संविदेकताम् । **निगमयति**—निगमविषयीकरोति ।

एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । **"तदैक्येन"** इति ।

अत्र टीका:–

**"तत्"** इति पदं व्याचष्टे "**यदेतत्**" इति । **उपपादितम्**–उपपत्त्या स्थापितम्, **"संविदाम्"** इति व्याचष्टे "**ज्ञानानाम्**" इति । **"लोकपद्धति"** इति व्याचष्टे **"लोकमार्गः"** इति, अस्यापि पर्यायमाह **"सर्वः"** इति । **आसाम्**–संविदाम्, **दुर्घटम्**—असंभवोपहतम् । कुत इत्यपेक्षायामाह **"यतः"** इति । तर्हि संविदो भेद एवायात इत्यत आह **"केवलम्"** इति । **बहिर्मुखतया**—"इदम्" इति बहिर्मुखत्वेन । ननु सत्यतया किमस्तीत्यत आह **"परमार्थतः"** इति । देशकालाकारैः यः सङ्कोचः–परिच्छेदः, तेन वैकल्यात्–रहितत्वात् । न हि परिच्छेदकं प्रति परिच्छेद्यस्य परिच्छेदकत्वं युक्तमिति भावः । एतेन **"प्रकाशैक्यात्"** इति कृतव्याख्यम् । **"तदेकत्वम्"** इति व्याचष्टे **"एकत्वम्"** इति । **एकत्वम्**– प्रकाशैकत्वम् । **"मातैकः"** इत्यादि व्याचष्टे **"इत्येक एव"** इति । **स एव च**– प्रकाश एव च, **स्थितम्**–प्रतिष्ठां गतम्–**"इदानीमुपपत्तितः"** इति पदद्वयं शषत्वनाध्याहृतम् । एतेन प्रथमस्य श्लोकस्य व्याख्या संपन्ना ॥ १० ॥

**न च अस्य असौ प्रकाशलक्षणः स्वात्मा नीलाद्युपरागश्च परामर्शन-शून्य एव आस्ते स्फटिकमणेरिव, अपि तु सदैव विमृश्यमानरूपः, इति विमृशद्रूपत्वम् अनवच्छिन्नविमर्शता अनन्योन्मुखत्वम् आनन्दै-कघनत्वम्[1], तदेवास्य माहेश्वर्यम्। स एव हि अहंभावात्मा विमर्शो देवस्य क्रीडादिमयस्य शुद्धे पारमार्थिक्यौ ज्ञानक्रिये, प्रकाशरूपता ज्ञानं तत्रैव स्वातन्त्र्यात्मा विमर्शः क्रिया, विमर्शश्च अन्तःकृतप्रकाशः,**

---

अथ द्वितीयं श्लोकं व्याचष्टे "**न च**" इति। "**विमृशत्त्वेन**" इति व्याख्यातुं प्रक्रियां तनोति "**न च**" इति। **अस्य**—प्रकाशस्य, **स्वात्मा**—प्रकाशाख्यो निजात्मा, **परामर्शनशून्यः**—स्वकर्तृकपरामर्शाविषयः, अत्र व्यतिरेकदृष्टान्तमाह "**स्फटिकमणेरिव**" इति। यथा स्फटिकमणेरात्मा नीलाद्युपरागश्च अहमिति इदमिति च परामर्शस्याविषयः तथास्य नास्तीत्यर्थः। पुनरस्यात्मा नीलाद्युपरागश्च कीदृशोस्तीत्यत आह "**अपि तु**" इति। अपि तु अस्य प्रकाशस्य स्वात्मा नीलाद्युपरागश्च "**विमृश्यमानरूपः**" "अहम्" इति "अयम्" इति च विमर्शविषयरूपयुक्तो भवतीत्यर्थः। विमृशत्त्वस्य पर्यायानाह "**अनवच्छिन्न**" इति। "**महेश्वरः**" इति व्याचष्टे "**माहेश्वर्यम्**" इति। **तदेवास्य माहेश्वर्यं** भवति, तेनैवासौ महेश्वरो भवतीत्यर्थः। "**एव**" शब्देन "**नियतेन**" इत्यस्य व्याख्या। पूर्वार्धं व्याख्याय उत्तरार्धं व्याचष्टे "**स एव**" इति। "**विमर्श एव**" इति व्याचष्टे "**स एव**" इति। इदंभावस्यापि परमार्थतोऽहंभाव एव विश्रान्तेः "**अहंभावात्मा**" इत्युक्तम्। **स एव**—प्रकृतत्वेन प्रसिद्ध एव[2]। "**देवस्य**" इति व्याचष्टे "**क्रीडादि**" इति। "**आदि**" शब्देन विजिगीषादेर्ग्रहणम्। "**शुद्धे**" इति व्याचष्टे "**पारमार्थिक्यौ**" इति। ज्ञानक्रिययोः पृथक् पृथग्व्याख्यां करोति "**ज्ञानम्**" इति। **तत्रैव**—ज्ञान एव,

---

1. आनन्दैकघनत्वमेव अस्य माहेश्वर्यम्—K.S.S.
2. ते एव प्रकृतत्वेन प्रसिद्धे एव—C.

**इति विमर्श एव परावस्थायां ज्ञानक्रिये, परापरावस्थायां तु भगवत्सदाशिवभुवि इदन्तासामानाधिकरण्यापन्नाहंताविमर्शस्वभावे, अपरावस्थायां च मायापदे इदंभावप्राधान्येन वर्तमाने इति विशेषः। सर्वथा तु विमर्श एव ज्ञानं तेन विना हि जडभावोऽस्य स्यात् इति उक्तम्, स एव च क्रिया इति भाविनः क्रियाधिकारस्य उपक्षेपं करोति इति। शिवम् ॥ १० ॥ ११ ॥**

**आदितः ॥ ८६ ॥**

---

**स्वातन्त्र्यात्मा**—कर्तृत्वरूपः, **विमर्शः**—तलन्ततृच्प्रत्ययवाच्यो विमर्शः, **क्रिया** भवति। कर्तुः क्रियामयत्वात् तृचश्च कर्तरि विहितत्वादिति भावः। ननु तर्हि क्रियैव पर्यन्ते विश्राम्यतीति ज्ञानस्याप्रधानत्वमेवायातमित्यत आह "**विमर्शश्च**" इति। **अन्तःकृतप्रकाशः**, सारभूतप्रकाश इत्यर्थः। एतेन विमर्शशक्तेः प्रकाशेन संपुटीकृतत्वसाधनमेव। अत एव च श्रीबहुरूपाख्ये निष्कलतत्त्ववाचकस्य बीजस्यादौ अन्ते चावस्थितिः मध्ये तु शक्तिरूपायाः अकारादिरूपायाः वर्णसन्ततेरित्यलं रहस्योद्घाटनेन। **इति**—अतः कारणात्, **विमर्श एव**—अहंपरामर्श एव, **परावस्थायाम्**—शिवभुवि। न हि तत्रेदन्तायाः नामाप्यस्ति। इदन्तासामानाधिकरण्यापन्नो योऽहन्ताविमर्शः स एव स्वभावः ययोर्ज्ञानक्रिययोः ते। अहमिदमिति स्वरूपे इत्यर्थः। ईश्वरदशाप्यत्रैव ज्ञेया। **वर्तमाने**—स्थिते, ज्ञानक्रिये इति पूर्वेण संबन्धः। **इति**—एवम्, **विशेषः**, ज्ञानक्रिययोरिति शेषः। सिद्धान्तं कथयति "**सर्वथा**" इति। **अस्य**—प्रकाशस्य। "**उक्तम्**" इति, "स्वभावमवभासस्य" इत्यत्र। **स एव च**—विमर्श एव च, **क्रिया** भवति, पुष्टीभूय क्रियाभावेन स्फुरणशीलत्वात्। **इति**—अतः, स एव **भाविनः**—एतदनन्तरं स्थितस्य, **उपक्षेपम्**—बीजत्वेन वापनम्, "**करोति**" इति, तस्यैतत्पल्लवत्वात्। "**इति**" शब्दः आह्निकसमाप्तौ, "**शिव**" पदं मङ्गलप्रतिपादकं परतत्त्वसूचकञ्च। इति शिवम्।

इति श्रीमन्माहेश्वराचार्यवर्योत्पलदेवपादविरचितायामीश्वरप्रत्यभिज्ञायां श्रीमदाचार्याभिनवगुप्तकृतविमर्शिन्याख्यव्याख्योपेतायां माहेश्वर्यनिरूपणाख्यमष्टममाह्निकम् ॥ ८ ॥

प्रथमो ज्ञानाधिकारश्च समाप्तः।

---

इति श्रीकश्मीरमण्डलान्तर्वर्त्याराध्यतमपादश्रीवैडूर्यकण्ठात्मजावतारकण्ठपुत्र-श्रीभास्करकण्ठविरचितायां श्रीप्रत्यभिज्ञाविमर्शिनीटीकायां भास्कर्याख्यायां ज्ञानाधिकारेऽष्टममाह्निकम्। समाप्तश्चायं ज्ञानाधिकाराख्यः प्रथमो विमर्शः ॥

तृज्वाच्यस्य महेश्वरस्य कुरुते ज्ञावाच्यतासादनात्
स्वातन्त्र्यस्य सुसूत्रणां सह ततो वाच्येन भावेन या।
पुष्टीभावि कृतेः सुबीजमुदिता शक्तिः स्फुटं यत्र सा
व्याख्यातो ननु भास्करेण स इह ज्ञानाधिकारो मया ॥

नाभिमानो मनः कार्यः शिवः कर्तात्र यत्स्थितः।
तदैक्येनाभिमानस्ते यद्यस्ति स तु शोभनः ॥

शिवः कर्ता शिवो द्रष्टा शिवः पाठक एव च।
व्याख्याता च शिवः प्रोक्तः शिवार्पणमिति स्फुटम् ॥

---